❀ श्रीः ❀

पण्डितराजश्रीसन्तोहिरामजीशास्त्रि ( चिडावा–जयपुर ) स्मारकं–
श्रीराजस्थान–संस्कृत–कालेज–ग्रन्थमालायाः

* सप्तदशङ्कुसुमम् *

श्रीभासविरचितत्वेन प्रसिद्धं–

# स्वप्नवासवदत्तं नाटकम्



श्रीगुरुप्रसादशास्त्रिणः,
व्याकरणाचार्याः, न्यायाचार्याः, दर्शनाचार्याः,
इत्येतैर्विरचितयाऽभिनवराजलक्ष्म्याख्यया संस्कृतटीकया, संस्कृतटिप्पण्या,
किं च
आचार्य–श्रीसीतारामशास्त्रि-
कृतकलभाषिण्याऽऽख्यया भाषाटीकया, टिप्पण्या च विराजितम्।

सम्पादकः—
आचार्य–श्रीसीताराम शास्त्री,
व्याकरणाचार्यः, साहित्यरत्नं, राजशास्त्रशास्त्री,
[ प्रिंसिपल—श्रीराधाकृष्ण पोद्दार संस्कृत-विद्यालय ]
रामगढ़ ( जयपुर )।

—: ❀ :—

प्रकाशकः—
भार्गवपुस्तकालय, गायघाट, बनारस १।

तृतीय संस्करण २००० ] १९५१ [ मूल्य ३)



卐 महामना मालवीयजी के पार्थिव शरीर के चितापर
अन्तिम अभिषेक कर्त्ता

卐 प्रवर्त्तक—स्वतन्त्र-भारत 'जयहिन्द' संवत्,

卐 ४ हजार वर्ष का विचित्र स्थाई कैलेण्डर,
जयहिन्द का आध्यात्मिक रहस्य।

卐 अध्यक्ष—भार्गवपुस्तकालय, आनन्दसागर प्रेस,
गायघाट, बनारस १.

卐 कोषाध्यक्ष—अखिल भारतीय श्रीरामचरितमानस
सम्मेलन, काशी।

# तृतीयसंस्करणस्य प्रस्तावना

अथेदं संमुद्य प्रकाश्यतेऽभिनवराजलक्ष्म्या कलभाषिण्या टिप्पण्या च विराजितं **स्वप्नवासवदत्तं** नाम भासमहाकवेर्नाटकम् ।

अयं महाकविर्भासश्च-कालिदासान्महाकवेरपि प्राचीनो महाकविभिर्बाणभट्टराजशेखरादिभिर्मुक्तकण्ठं प्रशंसितश्च । अस्य स्थितिश्च प्राय इतः २४०० वर्षेभ्यः पूर्वमासीदिति केषाञ्चन प्रत्नतत्त्वविदां वरिष्ठं मतम् ।

अनेन महाकविना कृतानि त्रयोदश नाटकानीदानीं म० म० श्रीगणपतिशास्त्रिमहोदयैः संमुद्र्य प्रकाशितानि । तत्र च स्वप्नवासवदत्तं नाम नाटकचक्रचूडामणितया नितरां विराजते ।

**केचन महात्मानस्तु**—'स्वप्नवासवदत्तादीनि नाटकानि भासकृतित्वेन ख्यापितान्यपि न महाकवेर्भासस्य कृतिषु निविशन्ते ।

तेषु कुत्रापि महाकविकाव्यसुलभस्य माधुर्यादेरननुभवात् । तत्तन्महाकविग्रन्थेषु भासीयत्वेनोद्धृतानां श्लोकानामस्मिन्स्वप्नवासवदत्तादिनाटकचक्रेऽनुपलम्भाच्च । यथा—

सञ्चितपक्ष्मकपाटं नयनद्वारं स्वरूपतलनेन[1] ।
उद्घाट्य सा प्रविष्टा हृदयगृहं मे नृपतनूजा ॥'

—इत्यभिनवगुप्ताचार्यचरणैर्ध्वन्यालोकलोचने समुद्धृतस्य श्लोकस्यास्मिन् **स्वप्नवासवदत्त** नाटकेऽनुपलम्भ एव । एवमेव बहवः श्लोकाः स्वप्नवासवदत्तीयत्वेन सम्भाविता अन्यत्रोद्धृता अपि नाऽत्र दृश्यन्ते ।

---

१ 'तडनं' 'तलनं' वा तालकयन्त्रोद्घाटनयन्त्रस्य 'कुञ्चिके'त्याख्यस्य 'ताली' इति लोकविदितस्य नामधेयम् । 'तड आघाते' इतिधातोश्चेदं रूपम् । अस्य चार्थे बहवो भ्रान्ता हन्त ! श्लोकमिममसंलग्नतया प्रकाशयन्ति ।

अत इमानि स्वप्नवासवदत्तादिनाटकानि भासकृतत्वेनेदानीं लोके व्यपदिष्टान्यपि न महाकवेर्भासस्येति—**निश्चिन्वते ।**

'किमत्र तथ्य'मिति तु न वयं निर्धारयितुं पारयामः। परं-नेदं स्वप्नवासवदत्तं नाम महाकवेर्भासस्य नाटकं किन्तर्हि 'स्वप्ननाटक'-नामधेयं कस्यापि कृतिनः सरसा कृतिरिति मतमस्माकं मनसि मनाक् निविशते।

अत्र च नाटके हस्तलिखितपुस्तकपाठकानवधानतया, सम्भ्रमाद्वा, अन्यतो वा कुतोऽपि हेतोः कुत्रचिदसंलग्नाः पाठा विभाव्यन्ते, परं तच्छोधनाय नैव कापि प्रामाणिकी सामग्री समुपलब्धुं शक्यते, येनाऽत्र स्पष्टं निर्णयः सम्भवेत्। अथाप्यर्थानुरोधेन, पूर्वापरग्रन्थसन्दर्भबलेन च केषुचित् केषुचित्स्थलेष्वस्माभिबर्हुत्रः पाठाः शोधिताः सन्ति।

ते चास्माभिः कल्पिताः पाठा मनागसूयाविरहितेन चेतसा विभाव्यमानाः—सहृदयधुरीणानां नूनं चेतश्चमत्करिष्यन्तीति दृढोऽस्माकं विश्वासः।

परीक्षार्थिनां छात्राणामभ्यासस्यानायासेन सिद्धये आवृत्तिसौकर्यञ्च सम्पादयितुं तृतीयेऽस्मिन् संस्करणे मूलेन सहिता आचार्यश्रीसीतारामशास्त्रिकृता कलभाषिणी नाम भाषाटीकाऽपि सहैवात्राऽन्ते समुपन्यस्तेति छात्राणां मनसस्तेन प्रसादं सम्भावयामः। तत्र च परीक्षायां पाठ्यत्वेन निर्धारिता प्राकृतच्छायैव निवेशितेति पठतां पाठयताञ्च मनसो मोदायैवायमस्माकं नवीन उपक्रमो भवेदिति—

श्रीराजस्थान-संस्कृत-कालेज,
मीरघाट, काशी।
२००८ अनन्त चतुर्दशी

निवेदकः
**श्रीगुरुप्रसादशास्त्री।**

# स्वप्नवासवदत्तनाटकपात्रपरिचयः



## पुरुषपात्राणि

१ राजा—उदयनाख्यः कौशाम्बीराजः ।

२ यौगन्धरायणः-वत्सराजप्रधानामात्यः ।

३ विदूषकः—वसन्तकाख्यो वत्सराजस्य सखा ।

४ काञ्चुकीयः— अन्तःपुराधिकारी वृद्धः ।

५ ब्रह्मचारी—पान्थः कश्चित्

६ सूत्रधारः—नटमुख्यः ।

७ सम्भषकः-राजपुरुषः (सिपाही)

८ दर्शकः—मगधराजः

९ प्रद्योतः अथवा— महासेनः } उज्जयिनीराजः

१० रुमण्वान्—वत्सराजमन्त्री

११ आरुणिः — वत्सराज्यापहारक उदयनशत्रुः

१२ गोपालकः— } वासवदत्ता-

१३ पालकः — } ज्येष्ठभ्रातरौ

१४ पुष्पकभद्राः—सिद्धपुरुषः कश्चित्

१५ ब्रह्मदत्तः—काम्पिल्पराजः

## स्त्रीपात्राणि

१ वासवदत्ता- उदयनमहिषी

२ आवन्तिका—वासवदत्तैव ।

३ पद्मावती-मगधराजदर्शकभगिनी, वत्सराजस्य द्वितीयं कलत्रम् ।

४ तापसी-आश्रमवासिनी तपस्विभार्या, तपस्विनी वा ।

५ चेटी—पद्मावतीदासी ।

६ पद्मिनिका } पद्मावती परि-

७ मधुकरिका } चारिके ।

८ धात्री—पद्मावती धात्री ।

९ „ वासवदत्ताधात्री ।

१० विजया—वत्सराजप्रतीहारी ।

११ अपराचेटी—अपरादासी ।

१२ अङ्गारवती—वासवदत्ताजननी ।

१३ कुञ्जरिका—पद्मावतीदासी ।

१४ विरचिका अथवा— विरहिका(ता) } वत्सराजवल्लभा काचित्

१५ महादेवी—दर्शकपद्मावती जननी

# स्वप्नवासवदत्तनाटकस्य श्लोकानुक्रमणिका



श्रीगणेशाय नमः

महाकविभासप्रणीतं-

# स्वप्नवासवदत्तम्

## नाटकम् ।

### अभिनवराजलक्ष्मीटीकोपेतम् ।

* अथाभिनवराजलक्ष्मीः *

नत्वा सरस्वतीं देवीं महागणपतिं गुरुम् ।
स्वप्नवासवदत्ताख्यं[1] नाटकं विवृणोम्यहम् ॥ १ ॥
वन्देऽनवद्यसद्ग्रन्थविद्योद्द्योतितदिङ्मुखान् ।
मरुमण्डलमार्त्तण्डस्नेहिरामाभिधान् गुरून् ॥ २ ॥

इह हि—

'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्त्तिं प्रीतिञ्च साधुकाव्यनिषेवणम् ॥'

---

१ स्वप्ने दृष्टा स्वप्नदृष्टा—[ स्वप्नगोचरीभूता- ] वासवदत्ता यत्र नाटके तत्—स्वप्नवासवदत्तम् । यद्वा वासवदत्तायाः स्वप्नः—स्वप्नवासवदत्तः । विषयविषयिभावः षष्ठ्यर्थः । राजदन्तादित्वात्स्वप्नशब्दस्य पूर्वनिपातः । 'एकविभक्ति चे'त्युपसर्जनत्वे ह्रस्वत्वम् । उपचाराच्च नाटकमपि-स्वप्नवासवदत्तम् ।

अभिनवराजलक्ष्मीः

—इति भामहाचार्योक्तेः, 'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्–' इत्यभियुक्तोक्तेश्च साधु काव्यं निषेवणीयमिति लभ्यते। तच्च काव्यं—दृश्यश्रव्यभेदेन द्विधा। तदुक्तं श्रीविश्वनाथमहापात्रैः—

'दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्।
दृश्यं तत्राऽभिनेयं, तद्रूपारोपात्तु रूपकम्॥
भवेदभिनयोऽवस्थाऽनुकारः, स चतुर्विधः—।
आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा॥' इति।

तत्र दृश्यं नाट्यम्। तदुक्तं दशरूपके—

'अवस्थानुकृतिर्नाट्यम्—' इति।

रसार्णवसुधाकरेऽपि—

'शृङ्गारादिरसाधारं नाट्यं' 'रूपक'मित्यपि।
नटस्यातिप्रवीणस्य कर्मत्वान्नाट्यमुच्यते॥
यथा मुखादौ पद्मादेरारोपो रूपकप्रथा।
तथैव नायकारोपो नटे 'रूपक'मुच्यते॥' इति।

तदेवं दृश्यं नाट्यं त्रिवर्गसाधनतयाऽवश्यं निषेवणीयं,

'त्रिवर्गसाधनं नाट्य' मित्यग्निपुराणोक्तेः। रूपकेष्वन्यतमञ्च नाटकम्। तत्र नाटकलक्षणं साहित्यदर्पणे यथा—

'नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम्।
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः॥
सुखदुःखसमुद्भूति नानारसनिरन्तरम्।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।
दिव्योऽथ दिव्याऽदिव्यो वा गुणवान्नायको मतः॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा।

अभिनवराजलक्ष्मीः

अङ्गमन्ये रसाः सर्वे, कार्यो निर्वहणेऽद्भुतः ॥[1]
चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः ।
गोपुच्छाग्रसमाग्रन्तु[2] बन्धनन्तस्य कीर्तितम् ॥' इति ।

तत्र च नाटके वर्णनीयवस्तुनः पूर्वमेव पूर्वरङ्गः प्रयुज्यते । तदुक्तं—

'तत्र पूर्वं पूर्वरङ्गः, सभापूजा ततः परम् ।
कथनं कविसंज्ञादेर्नाटकस्याऽप्यथाऽऽमुखम् ॥' इति' । साहित्यदर्पणे ।

तत्र = नाटके । 'कविसञ्ज्ञादेः, नाटकस्य च सञ्ज्ञादेः कथन'मिति योजना ।

आमुखं = प्रस्तावना । पूर्वरङ्गस्य लक्षणञ्च दर्पणे—

यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥' इति ।

नाट्यवस्तु = वर्णनीयं कथानकम् । रङ्गः = रङ्गस्थली । कुशीलवाः = सूत्रधारप्रमुखा नटाः । प्रकुर्वन्ति = 'देवस्तुतिगीतवादित्रादिक' मिति शेषः ।

यस्माद्रङ्गं प्रयोगोऽयं पूर्वमेव प्रयुज्यते ।
तस्मादयं पूर्वरङ्गः[3]—' इति च ।

तमिमं पूर्वरङ्गमधिकृत्य चोक्तं भरताचार्यैः—

'अस्याङ्गानि तु कार्याणि यथावदनुपूर्वशः ।
तन्त्रीभाण्डसमायोगैः[4] पाठ्ययोगकृतैस्तथा ॥' इति ।
पूर्वरङ्गस्य च प्रत्याहारादीन्यङ्गानि ।

---

१ निर्वहणाख्ये पञ्चमे सन्धावद्भुतो रसः कार्य इत्यर्थः ।

२ क्रमशो लघवोऽङ्काः कार्या इति, केचिल्लघवः केचिद्दीर्घा इति वाऽर्थः ।

३ रङ्गः=नाट्यमण्डपः । ततोऽपि वहिर्यवनिकाभ्यन्तरस्थैर्नटैर्यः कर्मविशेषो वाद्यस्वरादिसिद्धये, रङ्गविघ्नोपशान्तये च क्रियते स 'पूर्वरङ्ग' इत्युच्यते इति भावः ।

४ वीणामृदङ्गादिस्वरयोगैः । पाठ्ययोगकृतैः = दैवद्विजराजस्तुत्यादिपाठशेषैः ।

अभिनवराजलक्ष्मीः

तदुक्तं भरताचार्यैः :—

प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च ।
आश्रावणा वक्त्रपाणिस्तथा च परिघट्टना ॥
संमो[घो]टना ततः कार्या मार्गोत्सारितमेव च ।
ज्येष्ठ-मध्य-कनिष्ठा च तथैवाऽऽसारितक्रिया ॥
एता[१]नि च बहिर्गीतान्यन्तर्यवनिकागतैः—।
प्रयोक्तृभिः प्रयोज्यानि, तन्त्रीभाण्डकृतानि तु ॥
ततश्च सर्वकु[२]तपैर्युक्तान्यन्यानि कारयेत् ।
विघा[३]स्य वै यवनिकां नृत्यपाठ्यकृतानि च ॥
गीतानां मुद्रकादीनामेकं योज्यन्तु गीतकम् ।
वर्द्धमानमथापीह ताण्डवं यत्र युज्यते ॥
ततश्चोत्थापनं कार्यं परिवर्त्तनमेव च ।
नान्दी शुष्काऽपकृष्टा च रङ्गद्वारन्तथैव च ॥
चारी चैव ततः कार्या महाचारी तथैव च ।
त्रिकं प्ररोचना चापि पूर्वरङ्गे भवन्ति हि ॥
एतान्यङ्गानि कार्याणि पूर्वरङ्गविधौ तु च ।" इति ।

---

१ एतानि = पूर्वोक्तानि प्रत्याहारादीनि । च = किञ्च, बहिर्गीतानि = गीतस्वरताललयादिदार्ढ्यायालापविशेषस्वरूपाणि, बहिरेव गेयत्वाद्वा बहिर्गीतसंज्ञितानि,—अन्तर्यवनिकागतैः—यवनिकाभ्यन्तरस्थैरेव, प्रयोक्तृभिः = नटैः-प्रयोज्यानि । तु=पुनः तन्त्रीभाण्डकृतान्यपि बहिरेव प्रयोज्यानीत्यन्वयः । २ कुतपैः = वाद्यभाण्डैः ।

३ विघास्य = यवनिकामुत्थाप्य नृत्यपाठ्यकृतानि वक्ष्यमाणानि गीतकादीन्यङ्गानि कार्याणीत्यन्वयः । ४ यत्र ताण्डवं युज्यते तत्र वर्द्धमानकं गीतं योज्यमित्यन्वयः । ५ अपकृष्टा हि ध्रुवाविशेषो नाट्यशास्त्रे प्रसिद्धः । शुष्का= तालादिरहिता ।

अभिनवराजलक्ष्मीः

एतेषां लक्षणमपि तत्रैव—

कुतपस्य तु विन्यासः प्रत्याहार इति स्मृतः ॥
तथाऽवतरणं प्रोक्तं—गायकानां निवेशनम् ।
परिगीतक्रियाऽऽरम्भ आरम्भ इति कीर्त्तितः ॥
आतोद्यरञ्जनार्थन्तु भवेदाश्रावणाविधिः ।
वाद्य वृत्तिविभागार्थं वक्त्रपाणिर्विधीयते ॥
तन्त्र्येजस्तरणार्थन्तु (?) भवेच्च परिघट्टना ।
तथा पाणिविभागार्थं भवेत्संमोटनाविधिः ॥
तन्त्रीभाण्डसमायोगान्मार्गोत्सारितमिष्यते ।
कालपातविभागार्थं भवेदासारितक्रिया ॥
कीर्त्तनाद्देवतानाञ्च ज्ञेयो गीतविधिस्तथा ।
अत परं प्रवक्ष्यामि चोत्थापनविधिक्रियाम् ॥
यस्मादुत्थापयन्त्यादौ प्रयोगं नान्दिपाठकाः ।
पूर्वमेव तु रङ्गेऽस्मिंस्तस्मादुत्थापनं स्मृतम् ॥
यस्माच्च लोकपालानां परिवृत्य चतुर्दिशम् ।
वन्दनानि प्रकुर्वन्ति तस्मात्तु परिवर्त्तनम् ॥
आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रवर्त्तते ।
देवद्विजनृपादीनां तस्मान्नान्दीति सञ्ज्ञिता ॥
यत्र शुष्काऽक्षरैरेव ह्यपकृष्टा ध्रुवा यतः ।
तस्माच्छुष्काऽपकृष्टैव जर्जरश्लोकदर्शिता ॥

---

१ वाद्यानां—वाद्यभाण्डानां, वृत्तेः=तार-मन्द्र-द्रुतत्वादेः, विभागार्थं=विशेषतः सिद्धये। २ 'तन्त्र्यादेस्तरणार्थ'मिति पाठो भवेत्। स्तरणम्=परिस्वरणम्। तन्त्रीयोजनमिति यावत्। 'तन्त्र्यादेः सारणार्थ'मित्यपि केचित्पठन्ति। सारणं=स्वरयोगः।

अभिनवराजलक्ष्मीः

यस्मादभिनयस्तत्र प्राथम्यादवतार्यते ।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥
शृङ्गारस्य प्रचरणाच्चारी संपरिकीर्तिता ।
रौद्रप्रचरणाच्चापि महाचारीति कीर्तिता ॥
विदूषकः सूत्रधारस्तथा वै पारिपार्श्विकः ।
यत्र कुर्वन्ति सञ्जल्पं तत्रापि त्रिगतं स्मृतम् ॥
उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया ।
सिद्धेनाऽऽमन्त्रणा या तु विज्ञेया सा प्ररोचना ॥' इति ।

इत्थं प्रत्याहारादिप्ररोचनान्ताङ्गविशिष्टः पूर्वरङ्गः । तदेवं साङ्गस्य पूर्वरङ्गस्य कुतोऽपि हेतोर्यथावदनुष्ठानाभावेऽपि तदङ्गभूता नान्दी त्ववश्यमनुष्ठेया । तदुक्तं विश्वनाथेन—

'प्रत्याहारादिकान्यङ्गान्यस्य[२] भूयांसि यद्यपि ।
तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये ॥' इति ।

तत्र नान्दीस्वरूपन्तु दर्पणे—

'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति सञ्ज्ञिता ॥'
मङ्गल्यशङ्खचन्द्राऽब्जकोककैरवशंसिनी ।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥' इति ।

अन्यत्रापि—

'आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचकः । नान्दीति कथ्यते—' इति ।

नान्दीपाठप्रकारोऽपि यथा—

'सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः ।' इति ।

---

१ रङ्गद्वाराख्ये पूर्वरङ्गाङ्गे । २ पूर्वरङ्गस्य ।

## [ नान्द्यन्ते ततः प्रविशति सूत्रधारः ]

अभिनवराजलक्ष्मीः

तदेवं नाट्यवस्तुनः पूर्वमवश्यमाचरणीयस्य पूर्वरङ्गस्य प्रत्याहारादिकानां निखिलानामङ्गानां समयाभावादिनाऽऽलस्येन वा सर्वथाऽऽचरणाऽभावेऽपि नान्दी सूत्रधारेणावश्यमेव प्रयोक्तव्येति सूचयन्, अन्यार्थं नीयमानस्य दध्यादेर्दर्शनस्येव तन्नामोच्चारणस्यापि माङ्गलिकतां ध्वनयन्महाकविर्भगवान् भासः स्वप्नवासवदत्ताभिधानस्य नाटकस्यादौ मङ्गलार्थं नान्दीनाम निर्दिशन्नाह —नान्द्यन्ते इति।

नान्द्या अन्ते इति विग्रहः। नान्द्याः = चन्द्रादिनामाङ्कितायाः देव-द्विजराजादिस्तुत्यात्मिकाः सूत्रधारेण—रङ्गद्वारात्पूर्वं बहिरेव पठनीयायाः, अन्ते=समाप्तावित्यर्थः। अवश्यमनुष्ठेये 'नान्दी'नामके पूर्वरङ्गाङ्गे सूत्रधारेण रङ्गाद्बहिरेव समनुष्ठिते सतीति यावत्। ततः = तदनन्तरम्। आनन्तर्यञ्चात्र नाऽव्यवधानगर्भं, शुष्कापकृष्टाख्यपूर्वरङ्गाङ्गान्तरसमनुष्ठानानन्तरमेव 'उदय-नवेन्दुसवर्णौ' त्यादे रङ्गद्वाराख्यस्य पूर्वरङ्गाङ्गस्य प्रवृत्तेरुचितत्वात्, भरतेन तथैव पठितत्वात्।

प्रविशति = रङ्गस्थलीमवतरति। 'सूत्रधार' इत्यस्य—'तदनन्तरकरणीयं पूर्वरङ्गाङ्गभूतं रङ्गद्वारं प्रयोजयितुमिति शेषः।

सूत्रधारः = नटमण्डलीपरिवृढः। सूत्रधारलक्षणञ्च—

चतुरातोद्यनिष्णातोऽनेकभूषासमावृतः।
नानाभाषगतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित्॥
नानागतिप्रचारज्ञो रसभावविशारदः।
नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वितः॥
छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः।
तत्तद्गीतानुगलयकलातालावधारणः॥
अवधाय प्रयोक्ता च योक्तृणामुपदेशकः।

अभिनवराजलक्ष्मीः

—योक्तृणां = प्रयोक्तृणां नटानाम् ॥

"ततः प्रविशती'त्यनेन च—नान्दी रङ्गाद्बहिरेव सूत्रधारप्रमुखैर्नटैर्निष्पादिता, नान्द्यनन्तरमेव पूर्वरङ्गाङ्गभूतं रङ्गद्वारं प्रयोजयितुं सूत्रधारो रङ्गं प्रविशतीति सूचितम्। 'उदयननवेन्दुसवर्णे'त्यादिर्वक्ष्यमाणाऽऽर्या तु रङ्गद्वाराख्यं पूर्वरङ्गस्याङ्गमेव, न नान्दी, नान्द्या रङ्गाद्बहिरेव नटैः कृतत्वादित्यवधेयम्।

[ अत एव साहित्यदर्पणे—

"सूत्रधारेण क्रियमाणं मङ्गलं नान्दीति कस्य चिन्मतानुसारेणोक्तम्। वस्तुतस्तु—'निष्प्रत्यूह'मित्यादि 'शिरसि धृतसुरापगे'इत्यादि च पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गं, न नान्दी। यदुक्तं भरतेन—

'यस्मादभिनयो ह्यत्र प्राथम्यादवतार्यते।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥' इति।

'आशीर्वचनसंयुक्ते'त्यादिलक्षणलक्षिता च नान्दी रङ्गद्वारात्प्रथमं नटैरेव कर्त्तव्या, 'नान्दी—शुष्कापकृष्टा च रङ्गद्वारं तथैव चे'त्यादिना—भरतेन तथैव क्रमेण तयोर्निर्द्देशात्। कालिदासादिमहाकविप्रबन्धेषु—'वेदान्तेषु यमाहुरेकपुरुष'मित्येवमादिषु नान्दीलक्षणाऽयोगाच्च,—तत्र रङ्गद्वारत्वस्यैव त्वयाऽपि वक्तव्यत्वात्। उक्तञ्च—'रङ्गद्वारमारभ्य कविः कुर्यात्' इति।

अत एव प्राक्तनपुस्तकेषु 'नान्द्यन्ते सूत्रधारः' इत्यनन्तरमेव 'वेदान्तेषु य'मित्यादिश्लोकलेखनं दृश्यते। यच्च अभिज्ञानशाकुन्तलादौ पश्चात्—'नान्द्यन्ते सूत्रधारः' इति लेखनं, तस्यायमभिप्रायः—'नान्द्यन्ते सूत्रधार इदं

---

१ वेदान्तेषु यमाहु'रित्यादे रङ्गद्वारत्वादेव, नान्दीत्वाभावादेव च। तथाच यत्र नाटके नान्द्यस्ति, रङ्गद्वारं नास्ति, तत्र तन्त्रेण सैव रङ्गद्वारं, यत्र रङ्गद्वारमेवास्ति, न नान्दी, तत्र सा समाप्त्यादिफलबलेनानुमेया। यत्र चारम्भे बहवः श्लोकास्तत्र आद्यं श्लोकद्वयं नान्दी, अपरे रङ्गद्वारमिति विवेकः।

२ रङ्गद्वारभूत—'वेदान्तेषु य'मित्यादि या सृष्टिः स्रष्टु'रित्यादि च।

अभिनवराजलक्ष्मीः

प्रयोजितवान्, इतः[1] प्रभृति मया नाटकमुपादीयते इति कवेरभिप्रायः सूचित इति-" इत्युक्त्या नाटकप्रारम्भश्लोकस्य नान्दीत्वनिराकरणं स्फुटमुपलभ्यते]।

तदेवं प्रकृते--नान्द्यन्ते=रङ्गाद्बहिरेव यवनिकान्तर्गतैर्नटैर्मङ्गलार्थं कृताया देवादिस्तुतिरूपाया नान्द्या अवसाने, सूत्रधारः=नटपतिः-रङ्ग-द्वारादिकं प्रयोजयितुं रङ्गमवतरतीत्यर्थो बोध्यः।

[ यत्तु "—नान्दी=आनकः, 'दुन्दुभिस्त्वानको भेरी भम्भा नासूश्च नान्द्यपि' इति वैजयन्तीकोशात्। सा चोपलक्षणं वाद्यान्तराणामपि। तस्याः—अन्ते=प्रयोगपूर्वाङ्गभूते आनकादिवादनेऽवसिते सति। यद्वा—नन्दिः= आनन्दः, तस्या इयं नान्दी=गीतवाद्यवादनक्रिया, तस्या अन्ते इत्यर्थः। सा हि नाटकादिप्रयोगारम्भे देवतापरिषदानन्दार्थमनुष्ठीयते—" इति श्रीगणपतिशास्त्रिप्रभृतयस्तदनुसारिणोऽन्येऽपि गतानुगतिका व्याचक्षते।

तदतीव स्थवीयः, 'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते। देवद्विजनृपादीनां तस्मान्नान्दीति सञ्ज्ञिते'ति नाटकप्रसिद्धनान्दीग्रहणेऽपि साहित्यदर्पणोक्त-वस्तुतस्तु मतरीत्या-'नान्द्यन्ते प्रविशति सूत्रधारः' इत्यस्या-ञ्जस्येनोपपादयितुं शक्यतया क्लिष्टकल्पनाया व्यर्थत्वात्। नाटके गीतवादित्रा-दिक्रियाया नान्दीपदेन व्यवहारस्याऽप्रसिद्धेश्च। 'वेदान्तेषु यमाहु'रित्यादौ तैरपि मदुक्तरीतेरेवावश्यमाश्रयणीयत्वाच्चेति—सर्वोऽपि प्रयासो विदुषां तेषां काकदन्तपरीक्षणसदृश एवेत्यास्तां परच्छिद्रोन्मुद्रणसंरम्भः[2]। ]

---

१ इतः प्रभृति=रङ्गद्वारमारभ्य। मया=कालिदासाख्येन, अन्येन वा कविना।

२—एवञ्च प्रकृत 'उदयने'त्यार्या रङ्गद्वारं, न नान्दीति सिद्धमिति 'नान्द्यन्ते' इत्याञ्जस्येनोपपद्यते इति परे। केचित्तु अष्टपदात्वेन, चन्द्रनामा-ङ्कितया च नान्दीत्वमस्या आर्याया मन्यमाना 'नान्द्यन्ते' इत्यस्य—गीतवादित्र-कर्मान्ते नान्दीं प्रयोजयितुं सूत्रधारः प्रविशतीत्यर्थमाहुः।

**सूत्रधारः—**

**उदयनवेन्दुसवर्णावासवदत्ताबलौ बलस्य त्वाम् ।**

अभिनवराजलक्ष्मीः

अथ पूर्वरङ्गाङ्गभूताया नान्द्या विधानानन्तरं रङ्गं प्रविष्टः सूत्रधारोऽनन्तरकर्त्तव्यं पूर्वरङ्गाङ्गं रङ्गद्वारमारचयति-उदयनेति ।

[ अन्वयः ]–उदयनवेन्दुसवर्णौ, आसवदत्ताबलौ, पद्माऽवतीर्णपूर्णौ, वसन्तकम्रौ बलस्य भुजौ-त्वां पाताम् ।

[ विग्रहः—]

उत्=ऊर्ध्वम्-उन्नतो वा–अयः=गमनं, शुभावहो विधिः, शोभासम्पदुत्कर्षो वा यस्यासौ-उदयः । यद्वा-उदयते इति-उदयः । नवश्चासौ-इन्दुश्च-नवेन्दुः । उदयश्चासौ नवेन्दुश्च-उदयनवेन्दुः । समानौ वर्णौ ययोस्तौ सवर्णौ । उदयनवेन्दुना सवर्णौ,-उदयनवेन्दुसवर्णौ । यद्वा-उदयः=उदयकालिकः, स चासौ नवेन्दुश्चेति विग्रहो बोध्यः । यद्वा-उदये=उदयकाले-यो नवेन्दुरिति विग्रहः ।

अदायि-इति दत्तः । दत्त आसवो यस्यै सा आसवदत्ता । आहिताग्न्यादेराकृतिगणत्वात्-'वाऽऽहिताग्न्यादि'ष्विति 'आसव'शब्दस्य पूर्वनिपातः । आसवदत्ता अबला याभ्यान्तौ—आसवदत्ताऽबलौ ।

यद्वा—बलस्याभावोऽबलम् । आसवेन दत्तम्-आ=ईषत्-अबलम्=आलस्यं-याभ्यां तौ-आसवदत्ताऽबलौ । यद्वा-आसवेन दत्तम्-आ समन्तात् बलं ययोस्तौ-आसवदत्ताऽऽबलौ ।

अवतारः—अवतीर्णम् । भावे क्तः । पद्माया अवतीर्णं-पद्माऽवतीर्णम् । पद्माऽवतीर्णेन पूर्णौ-पद्माऽवतीर्णपूर्णौ । कामयेते इति कम्रौ, वसन्त इव कम्रौ-वसन्तकम्रौ । वसन्ते कम्राविति वाऽर्थः ।

**पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम् ॥ १ ॥**

अभिनवराजलक्ष्मीः

आर्येयं बलभद्रपक्षे, उदयनपक्षे च योजयितुं शक्यते ।

( १ ) तत्र बलभद्रपक्षे—अर्थः—

उदयनवेन्दुसवर्णौ = उद्गच्छन्नवीनचन्द्रसमानरक्तवर्णौ । चन्द्र इव क्रमविवर्धमानौ, करिवरशुण्डादण्ड—पीनायतविशाल—परिघाद्यनुकारिणौ, परिमांसलौ, रक्तवर्णौ चेति यावत् । उदयकालिकस्य चन्द्रस्याऽऽरक्तवर्णत्वात्तत्सावर्ण्येन भुजयो रक्तवर्णतालाभः । खण्डेन्दोश्चेषद्वक्रदण्डसमानाकृतितया भुजयोरीषद्वक्रताप्रत्यय इति भुजयोरिन्दुना वर्णेन, आकृत्या च सावर्ण्यमिति भावः । आसवदत्ताबलौ = मदावेशेन परिस्फुरन्तौ, बलोदग्रौ, मदाधिक्येन ईषद्विश्लथौ इति वा, मद्यपानतर्पितरेवतीकौ इति वाऽर्थः । अबला—बलभद्रपत्नी रेवती । बलभद्रस्य पानशौण्डत्वञ्च प्रसिद्धमेव ।

पद्माऽवतीर्णपूर्णौ = शोभासम्भारभासुरौ । अङ्गसौष्ठव—विजयलक्ष्मी-बलसम्पत्ति—कान्तिविशेषादिपरिपूर्णाविति यावत् । वसन्तकम्रौ = कुसुमसमयकमनीयौ । पुष्पमयालङ्कारधारणात्कुसुमसम्पद्विभूषितयोर्वसन्तस्येवानयोर्भुजयोर्मनोज्ञत्वमित्याशयः । केचित्तु—वसन्ते कम्रौ वसन्तकम्रौ = वसन्तकामुकौ । तद्वदुपचाराद्भुजावपि च वसन्तकम्रौ । यथा वसन्ते कामिनः कुसुममयालङ्कारादिभिरात्मानं मण्डयन्ति, आसवं पिबन्ति, स्वप्रेयसीश्च मधु पाययन्ति, तद्वद्भुजावपि पुष्पमयकेयूरकटकादिभिर्नानाविधैर्भूषणैर्भूषिताविति वसन्तकालिककामुकसमानशीलत्वं तयोरित्याहुः । बलस्य = बलभद्रस्य, भुजौ = बाहू, त्वां = प्रेक्षकपरिषदम्, पातां = रक्षताम् । सर्वेष्टसिद्ध्या योजयतामिति यावत् ।

( २ ) उदयनमहाराजपक्षेऽर्थः—

बलवत्त्वाद्बल इव कामुकत्वान्मद्यपानव्यसनित्वाच्च—बलः = उदयनमहाराजः । तस्य भुजौ = बाहू, त्वां = सभ्यपरिषदं, पातां = रक्षताम् । कथम्भूतौ

अभिनवराजलक्ष्मीः

भुजौ ?—उदयनवेन्दुसवर्णौ = क्रमविवर्धमान—कान्तिबलसम्पद्विद्योतमान-द्वितीयासुधांशुसमानौ। क्रमश उपचीयमानौ, शुण्डादण्डप्रतिमौ, रक्तवर्णौ, मांसलौ चेति पूर्ववदेवाऽर्थः।

आसवेन दत्तम्—आ = ईषत्—अबलं = बलाऽभावः—याभ्यां तौ—आसवदत्ताऽबलौ = मद्यपानव्यसननिर्बलौ। मद्यपानव्यसनितया हारितराज्याविति वाऽर्थः। वीणावादन-मद्यपानाऽऽखेटकादिव्यसनिन उदयनस्यच्छिद्रप्रहारिणा बलिना शत्रुणाऽऽरुणिना कृतो राज्यापहारः कथासरित्सागरादौ प्रसिद्धः। इत्थम्—आसवदत्ताऽबलावपि—पद्मायाः = पद्मावत्याः, [नामैकदेशे नामग्रहणं 'सत्या' 'सत्यभामे'तिवत्]—अवतीर्णम् = अवतारः, समागम इति यावत्। तेन परिपूर्णौ = परिपूर्ण-शत्रुविजय—साम्राज्यलाभादि—मनोरथौ।

यद्वा—पद्मा = साम्राज्यलक्ष्मीरेव उदयनगता च मनोरथप्राप्तिर्भुजयोरुपचर्यते। वसन्तकम्रौ = वसन्तकाल इव पुष्पसुरभितौ। अत एव च मनोहरौ।

इत्थञ्च—अनयैवार्यया नाटकप्रतिपाद्यो विषयोऽपि सूचितः। किञ्च संश्लिष्टशब्दविन्यासविशेषेण—'उदयन—'वासवदत्ता'—'पद्मावती'—'वसन्तका'ख्यानां नाटकप्रधानपात्राणां नाम्ना निर्देशादपि नाटकीयं वस्तु सूचितं वेदितव्यम्। काव्यार्थसूचनञ्च सम्प्रदायसिद्धमेव। तदुक्तमभियुक्तैः—

'रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः।' इति।

अन्ये तु—नीतिविदग्रेसरस्य सकलकार्यघटकस्य महामन्त्रिणो यौगन्धरायणस्य, तत्सहायभूतस्य मन्त्रिणो रुमण्वतश्च सङ्कीर्तनाऽभावात्पूर्वोक्तार्थेऽपरितुष्यन्तोऽन्यथाऽस्या आर्याया अर्थं निर्दिशन्तो यौगन्धरायणरुमण्वत्कीर्तनपरतया इमां योजयन्ति। तथाहि—

(३) प्रकारान्तरेण तृतीयोऽर्थः—

बलस्येव बलस्य = उदयनस्य,—भुजाविव भुजौ = राज्यपरिपालकौ यौगन्धरायण—रुमण्वन्तौ, त्वां = प्रजावर्गं, प्रेक्षकपरिषदं च, पातां = रक्षताम्।

अभिनवराजलक्ष्मीः

भुजावेव विशिनष्टि—उदयेति। कथम्भूतौ भुजौ ? [ यौगन्धरायण-रुमण्वन्तौ ? ]—उदयनवेन्दुसवर्णौ = उदयकालिकक्रमविवर्धमानाभिनवसुधांशु-समानोदयनमहाराजानुरूपौ। उदयननिक्षिप्तराज्यभारधारणक्षमाविति यावत्। यौगन्धरायणरुमण्वतोरुपरि राज्यभारं निधाय उदयनो यौवनसुखमनु-भवन्विपुलं कालमतिवाहयति स्मेति कथासरित्सागरे, बृहत्कथायाञ्च प्रसिद्ध-मेव। अत्रार्थे 'उदयनवेन्दु' पदेन लक्षणया 'उदयन' परिग्रह इत्यवधेयम्।

यद्वा—उदयः—उदयनः—नवेन्दुरिव — उदयनवेन्दुरित्युपमितसमासो बोध्यः। आ समन्तात्सवा यज्ञा यस्यासौ—आसवः = शतक्रतुः, वासवः, इन्द्र इति यावत्। आसव एनां देयादित्यासवदत्ता = वासवदत्तैव, सा बलं ययोस्ताविति योजना। 'यज्ञः सवोऽध्वरो यागः' इत्यमरः।

यद्वा—उदयनवेन्दुसवर्णाऽऽवासवदत्ताबलौ—इत्येकमेव पदम्। उदये= उदयकाले नवेन्दुः—उदयनवेन्दुः—उदयनवेन्दुना सवर्णौ, उदय—नवेन्दुसवर्णौ।

यद्वा-उत् = उत्कृष्टः-अयः=शुभावहो विधिर्यस्यासौ—उदयः=उदयन एव। पर्यवसाने साम्राज्यलाभादिना तस्य शुभोदर्कत्वात्। उदयो नवेन्दुरिव [प्रजा-मनोरञ्जनात्—] उदयनवेन्दुः, तस्य सवर्णौ = अनुरूपौ, राज्यधूर्वहनक्षमौ, नीतिकोविदौ, राजनि दृढमनुरक्तौ चेति—प्रकृतिरञ्जकत्वं राज्ञो ध्वनितं, साम्राज्यलाभश्च सूचितः। आ समन्ताद्वासवदत्तैव बलं ययोस्तौ—आवासव-दत्ताबलौ, उदयनवेन्दुसवर्णौ च तौ—आवासवदत्ताबलौ च —उदयनवेन्दु-सवर्णाऽऽवासवदत्ताबलाविति च विग्रहः। वासवदत्तासाहाय्येनैव पद्मावती-लाभ—साम्राज्यलाभादिघटकत्वं तयोरिति प्रसिद्धमेव। यद्वा वासवदत्ताया अभावः-अवासवदत्तम्, आ-समस्ताद्बलम्-आबलम्, अवासवदत्तमेव आबलं ययोस्ताविति विग्रहः। वासवदत्तापञ्चत्वप्राप्तिवार्ताख्यापनपुरस्सरमेव हि

अभिनवराजलक्ष्मीः

तयोर्गूढस्य मन्त्रस्य प्रसर इति वासवदत्ताविरहबलत्वं तयोरिति तदर्थः।

पुनः कथम्भूतौ तौ? पद्मावतीर्णपूर्णौ=पद्मावतीलाभेन पूर्णमनोरथौ। पुनः कथम्भूतौ तौ?। वसन्तकम्रौ=वसन्तेन=वसन्तकाख्येन उदयनमहाराजधीसचिवेन, कम्रौ=मनोज्ञौ। तत्सहिताविति यावत्। ज्ञातसकलवृत्तं, वासवदत्तामरणख्यापनादिकर्मणा यौगन्धरायणरुमण्वतोरुपरि ईषत्क्रुद्धमुदयनमहाराजं हास्याचार्यो धीसचिवो वसन्तकः पुनरपि प्रकृतिस्थं चकारेति—वसन्तकेन पुनरपि राजप्रीतिभाजनता तयोरिति हृदयम्।

विदग्धास्तु—हे वसन्त=वसन्तर्त्तो! त्वां=बलस्य=बलभद्रस्य, तन्नामकस्य भासाश्रयीभूतस्य कस्यचिद्राज्ञः, बलदेवसदृशबलशालिनः कामुकप्रधानपरिषदग्रेसरस्य उदयनस्य च—भुजौ=बाहू, भुजसदृशौ महामन्त्रिणौ यौगन्धरायणरुमण्वन्तौ च, पातां[1]=रक्षताम्।

कथम्भूतौ भुजौ?। उदयनवेन्दुसवर्णौ=रक्तपूर्णौ, मांसलौ, परिघाऽऽयतौ, महाबलशालिनौ च। [ उदयनमन्त्रिपक्षे तु—राज्यधूर्धरौ, नीतिविदग्रेसरावित्यर्थः पूर्ववदेव ]. आसवदत्ताबलौ=महावेशपरिस्फुरन्तौ, मदावेशविश्लथौ च। पद्मावतीर्णपूर्णौ=राजलक्ष्मीविलासनिकेतनतया समृद्धौ, साम्राज्यलक्ष्मीलाभेन पूर्णमनोरथौ च। कम्रौ=कमनीयौ, प्रजारञ्जनप्रवणौ

---

१ वसन्तस्य परिपालनं नाम—तत्सम्पदुत्कर्षपरिपोषणमेव। तच्च नवेन्दुना, आसवेन, पद्मैः, कामिनीभिः, कामुकैश्च प्रकामं क्रियते। एतदाशयेनैव प्रकृते श्लिष्टाः—नवेन्दु-आसव-पद्मावती-कम्रशब्दा उपात्ताः। कम्रः=कामुकः। पद्मावती=पद्मिनी, कामिनी च।

केचित्तु—बलपदेन सर्वतो बलवत्त्वाद्वसन्तकालप्रसरत्वाच्च स्मरोऽत्र ग्राह्यः। तस्य च भुजाविव भुजौ=कामिनीमानिनी—तदनुनयाख्याविति उदयनेत्यादिविशेषणचतुष्टयं तत्परतया योज्यमिति प्राहुः। अत्रान्ये सम्भवन्तोऽपि विशिष्टा अर्थाः परीक्षानुपयोगितया नोपन्यस्यन्ते इति गौडाः।

एवमार्यमिश्रान् विज्ञापयामि—'।

अभिनवराजलक्ष्मीः

चेति रीत्या वसन्तर्त्तुसम्बोधनपरतया भासाश्रयराजप्रशंसापरतया चैनामार्यां योजयन्ति।

एतेन च वसन्तर्त्तुसमयः सूचितः, 'ऋतुं कञ्चिदुपाश्रित्य सात्त्वतीं वृत्तिमाश्रितः' इति भरतोक्तेः परिपालनञ्च कृतमित्यपि बोध्यम्। अत्र चोपमारूपकादयो यथायथमलङ्कारा अनुसन्धेयाः। आर्या वृत्तम्। तल्लक्षणञ्च—

'यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये, चतुर्थके पञ्चदश सार्या॥' इति॥ १॥

अत्र यद्यपि—

[1]"पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते।
प्रविश्य[2] स्थापकस्तद्वत्[3] काव्यमास्थापयेत्ततः॥'

—इति क्रमस्तथापि—अद्यत्वे पूर्वरङ्गस्य सम्यक्प्रयोगाऽभावादेक एव सूत्रधारः सर्वं प्रयोजयतीति साहित्यदर्पणे एव स्पष्टम्। एवञ्च पूर्वरङ्गं विधाय प्रेक्षकपरिषदुन्मुखीकरणाय सूत्रधार एव स्वाशयमाविष्कुर्वन्नाह—**एवमिति**।

एवं = वक्ष्यमाणप्रकारेण मन्मनसि स्थितेन। प्रकारस्तु—[4]"रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः। [5]रूपकस्य कवेराख्यां [6]गोत्राद्यपि च कीर्त्तयेत्॥ ऋतुञ्च कञ्चित्प्रायेण भारतीं वृत्तिमाश्रितः।'

—इत्याद्यभियुक्तोक्त एव।

---

१ पूर्वरङ्गं = प्रत्याहारादिनान्द्यादिसकलाङ्गसहितम्, अवश्यकर्त्तव्यनान्दीरङ्गद्वारादि-द्वित्राङ्गसहितं वा—पूर्वरङ्गम् [ नान्द्यादिकं ] विधाय सूत्रधारो रङ्गादपगच्छतीति यावत्। २ स्थापकः = स्थापकनामा नटः। काव्यार्थस्य स्थापनाच्च स्थापकः। ३ तद्वत् = सूत्रधारगुणाकृतिः=तत्सदृशः, नटमण्डलोपाध्यक्षः। ४ रङ्गं = प्रेक्षकपरिषदम्। ५ रूपकस्य = नाटकस्य। आख्यां = नामधेयम्। ६ गोत्रादि = कुलगोत्रपित्रादिनामादिकञ्च कवेर्यथाऽवसरम्। सः = स्थापकः सूत्रधारो वा।

अये ! किन्नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते ! ।

अभिनवराजलक्ष्मीः

एवञ्च कवेः काव्यस्य नामादिसूचनं वसन्तादिऋतुप्रशंसादिकञ्च कर्त्तव्यत्वेन सूत्रधारेण मनसि सङ्कल्पितमिति गम्यते ।

आर्यमिश्रानिति । [ १५ पृष्ठे ] अर्यन्ते इति आर्याः । ऋहलोर्ण्यत् । आर्या मिश्रा इव—आर्यमिश्राः, तान्—आर्यमिश्रान् । व्याघ्रादेराकृतिगणत्वादुपमितं व्याघ्रादिभिरिति समासः । मिश्रशब्दश्च उत्तरपदे श्रेष्ठार्थको व्याघ्रादिपदवत् ।

परे तु—आर्याश्च ते मिश्राश्चेति विगृह्णन्ति । मिश्रः = श्रेष्ठः । आर्यमिश्रान्—परमश्रेष्ठान् । नाटकप्रेक्षणाय समवेतान्, मान्यतमान् प्रेक्षकमुख्यानिति यावत् । एतेन प्रेक्षकप्रशंसोपनिबद्धा वेदितव्या । आर्यलक्षणन्तु—

'कर्त्तव्यमाचरन्काममकर्त्तव्यमनाचरन् ।
तिष्ठति प्रकृताचारे स तु आर्य इति स्मृतः ॥' इति वसिष्ठस्मृतौ ।

किञ्च—'कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता ।
'अद्रोह इति येष्वेतत्तानार्यान्सम्प्रचक्षते ॥' इति ।

'आर्यः साधौ सौविदल्ले' इति विश्वः । 'महाकुलकुलीनाऽऽर्यसभ्यसज्जनसाधवः' इति चामरः ।

विज्ञापयामि = नाटककविनामादिनिवेदनादिकमनन्तरकरणीयमुपन्यस्य सम्भावयामि । यद्वा—विज्ञापयामि = अनन्तकरणीयं सभ्येभ्यो निवेदयामि ।

ननु ज्ञाधातोः 'मारणतोषणनिशामनेषु ज्ञ'इत्यनेन मित्त्वात्कथं 'विज्ञापयामी'ति दीर्घघटितः प्रयोग इति चेत्, माधवमतेऽचाक्षुषज्ञाने मित्त्वाऽभावेनाऽदोषात् । 'ज्ञापनमात्रे मित्त्व'मिति वदतां मते तु—धातूनामनेकार्थत्वात्—'ज्ञा—नियोगे' इति चौरादिकस्यैवेदं रूपमिति ध्येयम् । तेन न ह्रस्वप्राप्तिस्तस्य मित्त्वाऽभावात् ।

अये = हुँम्, [ हैं !!! इति भाषायाम् ] । अतर्कितोपनते, आश्चर्ये,

—अङ्ग ! पश्यामि ।

अभिनवराजलक्ष्मीः

किञ्चिदुन्मनीभावे, श्रवणाभिनये वा—अये इति निपातः । 'अये क्रोध-विषादयोः सम्भ्रमे स्मरणे चापो'ति हैमः ।

किं न्विति । किं नु खलु = किंस्वित् ? । नु' इति विकल्पे, वितर्के वा । 'कि'मिति पृच्छायाम् । 'नु पृच्छायां विकल्पे चे'त्यमरः । 'किं पृच्छायां जुगुप्सने' इत्यमरः । 'निषेधवाक्यालङ्कारे जिज्ञासानुनये खलु' इत्यमरः ।

मयि=सूत्रधारे, स्थापके वा । विज्ञापनव्यग्रे=सभ्यानुरञ्जनप्रसक्ते सति । किं नु खलु शब्द इव = शब्द इव विभाव्यमानः कलकलः किंस्वित् । श्रूयते = अनुभूयते ! कर्णातिथिर्भवतीत्यन्वयः । 'किं नु खलु' इति निपात-समुदायः प्रश्ने इति केचित् । अन्ये तु 'किं न खलु' इत्यस्य कुतो नु खलु इत्यर्थमाहुः । अपरे तु–'अये इति विषादे, क्रोधे वा । स च विज्ञापन–कार्यारम्भविघातकस्य शब्दस्यातर्कितोपनयादेव । किं नु खलु=किं नु कारणम् ? । यत्–मयि विज्ञापनव्यासक्तमात्रे सति—[ न तु अवसितविज्ञापने ]—कुतो हेतोः—शब्द इव = अस्पष्टो ध्वनिरयं श्रूयते इत्यर्थः । एवञ्च प्रकृते 'इव' शब्दोऽस्पष्टतां शब्दस्य सूचयति—" इति व्याचक्षते । विज्ञापनप्रारम्भे एव किमिदं श्रूयते इति तु तत्त्वम् ।

अङ्ग = हंहो ! 'अङ्गे'ति निपात औत्सुक्यं द्योतयति । केचित्तु 'अङ्ग सम्बोधने हर्षे पुनरर्थे च कथ्यते' इति हैमात्—अङ्ग = पुनः—इत्यर्थ-माहुः । अपरेतु–'अङ्गेति निपातो दर्शनविषयं सम्भ्रमं द्योतयति । एवञ्च–आदौ शब्दस्य कारणं परीक्ष्य ज्ञास्यामीत्यर्थः—'इत्याहुः । पश्यामि = कुतः खल्वयं कलकलः, केषाञ्चेति नूनमवधारयामि । पुनरर्थेऽङ्गेत्यव्ययमिति स्वीकारे तु—कुतः पुनरयं कोलाहलः, केषाञ्चेति निश्चिनोमीत्यर्थो बोध्यः ।

( नेपथ्ये- )

उस्सरह ! उस्सरह !! अय्या ! उस्सरह !!!

[ उत्सरत ! उत्सरत !! आर्याः ! उत्सरत !!! ]

**सूत्रधारः**—भवतु, विज्ञातम्—

---

अभिनवराजलक्ष्मीः

एवञ्च प्रारम्भे एव विज्ञापनं विहाय सूत्रधारः पात्रप्रवेशं सूचयितुं शब्द-श्रवणं नाटयति—**नेपथ्ये** इति। कविवाक्यमेतत्। अप्रविष्टेनैव पात्रेण यद्यवनिकाऽन्तरस्थेनोच्यते तन्नेपथ्ये इत्येवमुच्यते। नेपथ्ये = जवनिकायाम्। 'वक्ष्यमाणःशब्दः श्रूयते' इति शेषः। 'नेपथ्यं स्याद्यवनिका रङ्गभूमिः प्रसाधन-'मित्यजयः। नटानां पटान्तरितं रूपपरिवर्त्तनगृहं—नेपथ्यमिति तत्त्वम्।

विज्ञापनप्रारम्भे एव सूत्रधारेण यः [ शब्द इव ] कलकलः [ क्रमशः सन्निहिततया स्पष्टं ] श्रुतः—तं शब्दमेव कविरुपन्यस्यति—**उस्सरहे**ति।

उत्सरत=अपसरत, इतो मार्गादपगच्छत। पलायध्वमिति यावत्। सम्भ्रमाद्द्विरुक्तिः। पद्मावतीपरिचारकैः राजपुरुषैराश्रमवासिमुनिलोकापसारणाय प्रयुज्यमानस्य निरुक्तवाक्यस्य कविनाऽनुकरणङ्कृत्वा प्रकृते उपन्यासः कृतः। पद्मावतीपरिचारकाणाञ्चाद्याप्यप्रविष्टत्वात्तदुक्तिः—'नेपथ्ये' इत्येवमादावुक्त्वैवानुक्रियते कविनेति तत्त्वम्। [भटौ='सिपाही' 'नकीब' 'चोबदार'इति प्रसिद्धौ]।

पद्मावतीपरिचारकप्रभवं तं शब्दं श्रुत्वैव सूत्रधार आह—**भवत्विति**। भवत्विति निपातः-अलमित्यर्थे। तथा च—आस्तां तावदितोऽधिकः प्रयास इत्यर्थः। [अस्तु = अच्छा २]। **विज्ञातमिति**। यतो यस्य वाऽयं शब्द इव श्रूयते तद्विज्ञातं सकलं मयेत्यर्थः। केचित्तु—'भवतु'इत्यव्ययम्—असूयां द्योतयति। यतोऽयं मत्कार्यविघातकः कलकलः समुपस्थितस्तदेतदवधारितं मयेत्यर्थ इति प्राहुः। 'भवत्वान्तरसंवादे निर्दोषे स्मरणेऽपि चे'ति वैजयन्ती।

**'भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः ।**
**धृष्टमुत्सार्यते सर्वस्तपोवनगतो जनः ! ॥ २ ॥'**

अभिनवराजलक्ष्मीः

परे तु—'भवतु' इति न निपातः, किन्तु 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे'ति भवतेः प्राप्तकाले लोट् । श्रूयमाणोऽयं शब्दोऽवसरप्राप्त एवेत्यर्थः । प्राप्तावसरता च—पद्मावतीपरिचारिकाणाम्प्रवेशावसरस्योपस्थितत्वादेवे'ति व्याचक्षते ।

विज्ञातमेव रङ्गे प्रकटयति सूत्रधारः—भृत्यैरिति ।

[ अन्वयः ] मगधराजस्य स्निग्धैः कन्यानुगामिभिः भृत्यैः तपोवनगतः सर्वः जनः धृष्टम्—उत्सार्यते ।

[ विग्रहः ] मगधानां देशविशेषाणां राजा—मगधराजः, तस्य—मगधराजस्य । अनुगच्छन्ति तच्छीलाः—अनुगामिनः, कन्याया अनुगामिनः, कन्यानुगामिनः, तैः—कन्यानुगामिभिः । तपसो वनं—तपोवनं, तपोवनं गतः—तपोवनगतः ।

[अर्थः] मगधराजस्य = मगधेश्वरस्य, पाटलिपुत्रराजगृहमधितिष्ठितश्चक्रवर्तिनो महाराजदर्शकस्य । स्निग्धैः = स्नेहभाजनैः आप्ततमैरिति यावत् । अतएव कन्याऽनुगामिभिः = कन्यारक्षणे नियुक्तैस्तामनुगच्छद्भिः । कन्याऽन्तःपुररक्षाधिकृतैरिति यावत् । भृत्यैः = दर्शकमहाराजभगिनीपद्मावतीपरिचारकैः, राजपुरुषैः । तपोवनगतः = आश्रमस्थः । सर्वो जनः = निखिलोऽपि बालवृद्धयुवस्त्रीपुंसादिसाधारणो लोकः । उत्सारणाऽनर्हस्तपस्विलोकोऽपीति यावत् । धृष्टम् = अविनयं यथा स्यात्तथा । उत्सार्यते = अपसार्यते—मार्गाद्दूरीक्रियते ।

[ भावार्थः ] दर्शकमहाराजभगिनीं पद्मावतीं तपोवनदर्शनादिनाऽऽत्मानं पावयितुमाश्रमपरिसरभुवोऽञ्चलमवतरन्तीं—'तपस्विलोका मा द्राक्षु'रिति धिया, 'तपस्विजनसम्मर्देन तस्या मनसि क्लेशो माभू'दिति धिया

[ निष्क्रान्तः ] ।

—————

## स्थापना ।

अभिनवराजलक्ष्मीः

वा, राजकुलमर्यादारक्षार्थं वा, राजपुरुषास्तपस्विलोकं रुषा तर्जयन्तो मार्गाद-पसारयन्ति । हा हन्त ! दुश्चरितमेतद्राजपुरुषाणां यत्तपस्विजनोद्वेजनं नामेति भावः । इदानीमपि प्रचलति राजनि, तत्कलत्रादौ वा भटैराजकुलमर्यादारक्षार्थं मार्गाल्लोका उत्सार्यन्ते एव । एवञ्च मयि विज्ञापनोन्मुखे एष एव कलकलो नेपथ्ये प्रसरन् मत्कर्णातिथिर्भूत इति—'भवतु विज्ञात' मित्यनेन सह श्लोक-मिमं पठतः सूत्रधारस्याशयः ॥ २ ॥

निष्क्रान्त इति । 'सूत्रधार' इति शेषः । पूर्वरङ्गं प्रयोजयितुं पूर्वं रङ्गं प्रविष्टः सूत्रधार इत्थं पात्राणां मगधराजपुरुषाणां प्रवेशं सूचयित्वा—रङ्गा-न्निर्गत इत्यर्थः । नाटके हि—सूचनां विना पात्रस्य प्रवेशो न भवति, 'नाऽसू-चितप्रवेशोऽस्ती' त्यभियुक्तोक्तेः । अतः पात्रप्रवेशोऽत्र सूत्रधारेण सूचितः । तदुक्तं दशरूपके—

'एषामन्यतमेनार्थं, पात्रं वाऽऽक्षिप्य सूत्रभृत् ।
प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेत् ॥' इति ।

स्थापनेति । 'समाप्ते'ति शेषः । एतावता ग्रन्थेन—'प्रविश्य तद्वदपरः काव्यमास्थापयेत्ततः' इत्यभियुक्तोक्तिमनुसरता स्थापकनाम्ना नटेन, सूत्रधारे-णैव वा कथावस्त्वंशस्य स्थापनात्—स्थापनेत्युच्यते । 'स्थापना' 'प्रस्तावना' 'आमुख'मिति च पर्यायाः । तत्र प्रस्तावनालक्षणं दर्पणे—

'नटी, विदूषको वाऽपि, पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥

अभिनवराजलक्ष्मीः

चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताऽऽक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं, नाम्ना प्रस्तावनाऽपि सा ॥' इति ।

यद्यपीदं साहित्यदर्पणोक्तं लक्षणं प्रकृते न यथावद्घटते, सूत्रधारेण सहान्यस्य संलापाऽभावात्तथाऽपि प्रस्तुताक्षेपिभिर्वाक्यैरालापमात्रस्यैव प्रकृते प्रस्तावनात्वान्न दोषः । तदुक्तं रसार्णवसुधाकरे—

'विधेर्यदैव सङ्कल्पो मुखतां प्रतिपद्यते ।
प्रधानस्य प्रबन्धस्य तदा प्रस्तावना मता ॥' इति ।

किञ्च—

'अर्थस्य प्रतिपाद्यस्य तीर्थं प्रस्तावनोच्यते' । इति च ।

सा च प्रस्तावना पञ्चधा—

उद्घात्यकः, कथोद्घातः, प्रयोगातिशयस्तथा ।
प्रवर्त्तकाऽवलगिते पञ्च प्रस्तावनाभिदाः ॥' इत्युक्तेः ।

तत्र प्रकृते प्रयोगातिशयो नाम प्रस्तावनाभेदः । तदुक्तं दर्पणे—

'यदि प्रयोग एकस्मिन प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत्प्रयोगातिशयस्तदा ॥' इति ।

अत्र परिषद उन्मुखीकरणाय किञ्चिद्विज्ञापयितुमिच्छता स्थापकेन, सूत्रधारेण वा नेपथ्ये कलकलं श्रुत्वा विज्ञापनामप्रयुज्यैव—

भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः ।
धृष्टमुत्सार्यते सर्वस्तपोवनगतो जनः ॥'

—इत्यनेन पद्मावतीपरिचारकाणां मगधराजभृत्यानां प्रवेशं सूचयित्वा निष्क्रान्तेन, स्वप्रयोगमतिशयान[1] एव प्रयोगः प्रयुक्तः ।

१ स्वप्रयोगं = परिषदुन्मुखीकरणाय विज्ञापनारूपं सूत्रधारकार्यम् । अतिशयानः प्रयोगः = तन्निरोधको राजपुरुषप्रवेशः ।

( प्रविश्य– )

¹**भटौ—**उस्सरह ! उस्सरह !! अय्या ! उस्सरह !!!

[ उत्सरत ! उत्सरत !! आर्याः ! उत्सरत !!! ] ।

---

अभिनवराजलक्ष्मीः

स्पष्टश्चेदं—"यथा कुन्दमालायां (नेपथ्ये–) इति इतोऽवतरत्वार्या । सूत्रधारः—कोऽयं खल्वार्याऽऽह्वानेन साहायकमिव मे संपादयति ? ( विलोक्य– ) कष्टमतिकरुणं वर्त्तते—

'लङ्केश्वरस्य भवने सुचिरं स्थिते'ति—
रामेण लोकपरिवादभयाकुलेन ।
निर्वासितां, जनपदादपि गर्भगुर्वी–
सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥

अत्र नृत्यप्रयोगार्थं स्वप्रियाह्वानं चिकीर्षता सूत्रधारेण सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निर्गतेन भार्याह्वानरूपं स्वप्रयोगमतिशयान एव 'इत इतोऽवतरत्वार्ये'ति प्रयोगः प्रयोजितः-" इत्यादिना दर्पणे प्रदर्शितस्तत एवावधार्यम् ।

अथ 'ततो वस्तु प्रयोजये' दित्युक्तेर्वस्तु प्रयोजयता सूत्रधारेण सूचितानां मगधराजपुरुषाणां रङ्गे प्रवेशमाह कविः—प्रविश्येति । कविवाक्यमेतत् । रङ्गं प्रविश्य भटावित्थमाहतुरिति तदर्थः । एवञ्च—कन्यानुगामिनां

---

१ अत्र 'भटाः' इति पाठमन्ये मन्यन्ते, पूर्वं 'भृत्यैर्मगधराजस्ये'त्यनेन बहूनामेव राजपुरुषाणां प्रवेशस्य सूचनाद्द्वयोर्भटयोः प्रवेशस्यानुचितत्वात् ।

अन्ये तु —बहूनां भटानां रङ्गे प्रवेशेऽपि अग्रिमपंक्तिस्थाभ्यां भटाभ्यामेव पर्यायक्रमेण घोषणा प्रकृते उपन्यस्ता, ततो द्वितीयपंक्तिस्थभटद्वयेन घोषणा करिष्यते, ततोऽपरपंक्तिस्थभटद्वयेनेति—न भटाविति द्विवचनानुपपत्तिरित्याहुः ।

परे तु—नाटके बहूनां पात्राणां निषेधात्परिमितपात्रताया एवौचित्येन

[ ततः प्रविशति परिव्राजकब्राह्मणवेषो यौगन्धरायणः, आवन्तिकावेषधारिणी वासवदत्ता च ] ।

अभिनवराजलक्ष्मीः

मगधराजपुरुषाणां प्रवेशाद्रङ्गस्थले तपोवनदृश्यमुपस्थापितं वेदितव्यम् । इयमेव च भटानां घोषणा पूर्वं नेपथ्ये सूत्रधारेणाऽऽकर्णितेति च विवेकः ।

ततः = भटप्रवेशानन्तरमेव । प्रविशति = रङ्गभुवं प्रविशति । परिव्राजकेति । परित्यज्य सर्वं व्रजतीति–परिव्राजकः, परिव्राजकश्चासौ—ब्राह्मणश्च परिव्राजकब्राह्मणः, तस्य वेष इव वेषो यस्यासौ–परिव्राजकब्राह्मणवेष. = उज्जयिनीनिवासिसंन्यासिब्राह्मणाऽनुकारी कापायवस्त्रपरिवृतः ।

परिव्राजकः–संन्यासी, चतुर्थाश्रमी । तत्र परिव्राजकलक्षणमाह मनुः— 'आत्मन्यग्निं समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्'–इति । 'भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी'त्यमरः । 'परिव्राजकतापसौ' इति हैम. । ब्रह्मचर्यं परिसमाप्य गृही भवेत्, गृही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्, 'यदि वेतरथा—ब्रह्मचर्यादेव परिव्रजेत्, गृहाद्वा, वनाद्वे'ति जाबालोपनिषदि च श्रूयते । 'परिव्राजकब्राह्मणवेष' इत्यत्र ब्राह्मणपदोपादानन्तु—'त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः' इति सूत्रकारवचनात्त्रैवर्णिकस्यापि चतुर्थाश्रमेऽधिकारात्क्षत्रियादिसंन्यासिवेषव्युदासायेति गौडाः ।

युगन्धरस्य गोत्राऽपत्यं—यौगन्धरायणः । 'नडादिभ्यः फ'गिति फक् । अवन्तयः = उज्जयिनीदेशः, अवन्तिषु भवा-आवन्ती, आवन्त्येव-आवन्तिका । आवन्तिकाया वेषः—आवन्तिकावेषः, आवन्तिकावेषं धरति तच्छीला—

द्वयोर्भटयोरेव प्रवेशः, निवारका भृत्यास्तु बहव एवेत्याहुः । अत्र भटाः— इत्येव पाठो युक्तः, अग्रे च 'निष्क्रान्ताः' इत्येव पाठः । श्लोकेऽपि— 'परिहरत भटा रुषा प्रवाद'मित्येव पाठ इति तु गौडाः । अत्र युक्ताऽयुक्तत्वे च सहृदयैर्निर्णेये ।

**यौगन्धरायणः**–( कर्णं दत्त्वा- ) कथमिहाप्युत्सार्यते ! । कुतः–

**धीरस्याश्रमसंश्रितस्य वसतस्तुष्टस्य वन्यैः फलै-
र्मानार्हस्य जनस्य वल्कलवतस्त्रासः समुत्पाद्यते ? ।**

---

अभिनवराजलक्ष्मीः

आवन्तिकावेषधारिणी । वासव एनां देयात् इति–वासवदत्ता । 'क्तिच्क्तौ च संज्ञाया'मित्याशिषि क्तः । च=पुनः । तदनुगामिनी वासवदत्ता च प्रविशतीत्यर्थः ।

इयं वासवदत्ता च अवन्तिराजस्य चण्डमहासेनस्य प्रद्योतस्य दुहिता, कौशाम्बीपतेरुदयनस्य महिषी च । अवन्तिदेशोत्पन्नत्वादस्या आवन्तिकावेषादरः । आवन्तिकावेषः = दाक्षिणात्यो वेषः [ दक्षिणी पोशाक ]

**यौगन्धरायण इति** । कर्णं दत्त्वा=श्रवणमभिनीय । कविवाक्यमेतत् । 'यौगन्धरायण' इत्यस्य–'इत्थं प्राहे'ति शेषः । **कथमिति** । इहापि–नगरे इव तपोवनेऽपि—कथं = कस्माद्धेतोः । उत्सार्यते = आश्रमवासितपस्विलोको दूरीक्रियते—इति साश्चर्यं, सखेदञ्च यौगन्धरायणस्योक्तिः ।

**कुत इति** । अस्य 'त्रासः कुतः समुत्पाद्यते' इत्येवमग्रिमश्लोकेन सहैवाऽन्वयः । तपस्विजनापसारणस्याऽनौचित्यं सूचयन् राजपुरुषाणामसमीक्ष्यकारित्वं द्रढयति—**धीरस्येति** ।

[ अन्वयः ] धीरस्य, आश्रमसंश्रितस्य, वन्यैः फलैः तुष्टस्य, वसतः, मानार्हस्य, वल्कलवतः जनस्य–त्रासः 'कुतः' समुत्पाद्यते ? भोः ! उत्सिक्तः, विनयानुपेतपरुष , [ 'विनयाद्यपेतपरुष'इति वा युक्तः पाठः ], चलैर्भाग्यैः विस्मितः–कोऽयं—निभृतम् इदं तपोवनम्—आज्ञया ग्रामीकरोति ? ।

[ विग्रहः ] आ समन्तात् श्राम्यन्ति तपस्विनोऽत्र—आश्रमः, आश्रमं संश्रितः आश्रमसंश्रितः, तस्य–आश्रमसंश्रितस्य । वने भवानि—वन्यानि, तैः-वन्यैः । मानमर्हतीति-मानार्हः । यद्वा–अर्हतीति–अर्हः, मानस्य अर्हः–

**उत्सिक्तो विनयाद्यपेतपरुषो[1] भाग्यैश्चलैर्विस्मितः**
**कोऽयं भो निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञया ?॥३॥**

अभिनवराजलक्ष्मीः

मानार्हः, तस्य— । वल्कलानि सन्त्यस्य—वल्कलवान्, तस्य—वल्कलवतः । विनयाऽनुपेतपरुष इति पाठे—विनयेन अनुपेतो = रहितो विनयानुपेतः, अत एव परुषः = कठिनो—विनयानुपेतपरुषः ।

'विनयाद्यपेतपरुष' इति पाठे तु—विनयादिभिरपेतः = शून्यः, अत एव परुष इति विग्रहः । तपसो वनं—तपोवनम् । अग्रामं ग्रामं करोति सम्पादयति—ग्रामीकरोति । ['वसत' इत्यत्र 'यमिनः' 'शमिनः' इति वा केचित्पठन्ति] ।

[ अर्थः ] धीरस्य = धैर्यशालिनः, चाञ्चल्यविकलस्य, विषयोपभोग-विमुखस्य वा । विजितेन्द्रियग्रामस्य, विषयवितृष्णस्य च । द्वन्द्वसहिष्णोरिति यावत् । आश्रमसंश्रितस्य = तपोवनमधितिष्ठतः, ब्रह्मचर्यादिविविधाश्रमाचार-परिपालनप्रवणस्येति वा । 'आश्रमो ब्रह्मचर्यादौ वानप्रस्थे वने मठे' इति मेदिनी । वन्यैः फलैः = वनोद्भवैः फलैः । तुष्टस्य = सन्तुष्टस्य सतः । वसतः = वने निवसतः । अत एव मानार्हस्य = संमानयोग्यस्य । वल्कलवतो जनस्य = वल्कलधारिणस्तपस्विलोकस्य । 'वल्कं वल्कलमस्त्रिया' मित्यमरः । त्रासः = भयम्, उत्क्लेशश्च । 'दरस्त्रासो भीतिर्भीः साध्वसं भय' मित्यमरः । कुतः कस्माद्धेतोः ? । समुत्पाद्यते = उद्भाव्यते ? । 'राजपुरुषै'रिति शेषः । सर्वथा भोगविमुखस्य यमनियमवत उपकरणविकलस्य पूज्यतमस्य तपस्विलोकस्योत्सारणेन त्रासोत्पादनमत्यन्तमनुचितमिति भावः ।

इत्थमाश्रमपदे भटैः क्रियमाणाया उत्सारणाया अनौचित्यं सूचयन् राज-पुरुषाणामसमीक्ष्यकारितामविनयञ्च प्रकटयंस्तापसः सामर्षमाह—उत्सिक्त इति । भोः = अये ! । आमन्त्रणेऽत्र भोःशब्दः । उत्सिक्तः = निर्मर्यादः, उद्धत

१ 'विनयादपेतपुरुष' इति मुद्रितः पाठस्तु सर्वथाऽयुक्तो भ्रष्ट एव । 'विनयानुपेतपरुषः' पाठा० ।

**वासवदत्ता**— अय्य ! को एसो उस्सारेदि ? ।
[ आर्य ! क एष[1] उत्सारयति ? । ]

अभिनवराजलक्ष्मीः
इति यावत्। ('उद्वृत्त'इति पाठे-उच्छृङ्खल इत्यर्थः)। 'विनयाद्यपेतपरुषः' = विनयसम्पर्कविकलतया कठोराशयः, क्रूरहृदयः। ( विनयानुपेतपरुषः इति पाठेऽपि अविनीततया क्रूर इत्यर्थः)। चलैः = चञ्चलैः,क्षणस्थायिभिः, गत्वरैरिति यावत्। भाग्यैः = सौभाग्यैः। राज्याधिकारैरिति यावत्। यौवनधनबलादिभिरित्यप्यनुसन्धेयम्। विस्मितः = गर्वितः सन्। 'विस्मयोऽद्भुतदर्पयो'रिति हैमः।

कोऽयं – कः खलु पुमान्[2]। अधिकारमत्तः सन्। निभृतं–विनीतं, शान्तमिति यावत्। इदं तपोवनं = इदमाश्रमपदम्। आज्ञया = उत्सारणया, तादृशराजाज्ञाप्रचारणादिना वा। ग्रामीकरोति = ग्रामतुल्यतां प्रापयति ?। अविनीता एव ग्रामादिवासिनो विनेयाः,स्वतो विनीता आश्रमवासिनस्तु न ग्राम्यजनवद्विनयशिक्षामर्हन्ति, तदत्र विनयमुपदिशन्तो राजपुरुषा विनयशून्या एवेति भावः।

अत्र मुद्रितं—'विनयादपेतपुरुष'इति भ्रष्टं पाठमनुसरन्तो राजोपालम्भपरतयोत्तरार्धमुदक्षरं व्याकुर्वाणा अन्ये तु खलु धन्या एव, अधिकारिपुरुषोपालम्भ (नौकरशाहीनिन्दा)-परतया व्याख्यानस्यैव स्वारसिकत्वादित्यत्र सहृदयचेतांसि प्रमाणम्। काव्यलिङ्गमलङ्कारः। परिकरोऽपि। शार्दूलविक्रीडितं वृत्तम्॥३॥

राजपुरुषैः क्रियमाणामुत्सारणघोषणामाकर्ण्य वासवदत्ता यौगन्धरायणं पृच्छतिअय्येति। प्राकृतस्यास्य च–'आर्य ! क एष उत्सारयति ?'इति, 'आर्य ! क एष उत्सार्यते ?'इति च द्विविधा च्छाया भवति। एवञ्च द्व्यर्थकमिदं वाक्यम्। तत्र—'क एष उत्सारयती'त्यस्य—उत्सारणानर्हान् आश्रमवासिनः को नाम पापः समुत्सारयतीत्यर्थः। द्वितीये तु—एभिर्भटैः को नाम जन उत्सार्यते ?।

---

१ 'आर्य ! क एष उत्सार्यते ?' इत्यपिच्छाया। २ परे तु—उत्सिक्त' इत्यादिना पद्मावत्या एव निन्दा बोध्या, तदर्थमेव, तदाज्ञयैव च मुनीनामुत्सारणाया भटैः कृतत्वादित्याहुः। स्पष्टञ्चेदमग्रे 'प्रद्वेषो' बहुमानो वे'त्यत्र 'प्रद्वेष' पदोपादानेन।

**यौगन्धरायणः** — भवति[2] ! यो धर्मादात्मानमुत्सारयति ।

**वासवदत्ता**—[3]अय्य ! ण हि । एव्वं वत्तुकामा—'अहं वि णाम उस्सारइद्व्वा होमि'त्ति ? ।

[आर्य ! न हि । एवं वक्तुकामा—'अहमपि नामोत्सारयितव्या भवामि ?—इति]।

---

अभिनवराजलक्ष्मीः

किमहमपि नाम राजमहिषी साधारणैरेभिर्भटैरुत्सारयितव्या भवामि ?—इत्यर्थः ।

तत्राद्यार्थाभिप्रायेण तावत्—यौगन्धरायण उत्तरयति—**भवतीति** । 'क एष उत्सारयती'ति प्रश्नस्य —'भवति ! यो धर्मादात्मानमुत्सारयति, स एव तपस्विलोकमुत्सारयति' इत्युत्तरमिति भावः । अत्र—'भवति ! योऽधर्मे आत्मानं विनियोजयति'इत्यपि पाठः ।

भवति = देवि ! वासवदत्ते ! । भवतीशब्दस्य सम्बोधने रूपमिदम् । धर्मात् = श्रेयसः, आत्मानं = सर्वतः प्रियमात्मानमपि । उत्सारयति = दूरीकरोति । मुनीनामुत्सारणं नामाऽधर्मजनकं कर्मेत्येतावता सूचितम् । एवञ्च

---

१ नाटके 'पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मना'मित्युक्तेर्यौगन्धरायणस्य संस्कृतेन प्रकृते भाषणमुपन्यस्तम् । 'शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिता'मित्युक्तेर्वासवदत्तायाश्चाऽत्र प्राकृतं प्रयुज्यते ।

२ 'विदूषकेन राज्ञी च चेट्या च भवतीत्यपि' इति भरतोक्तेः, 'वदेद्राज्ञीश्च, चेटीश्च भवतीति विदूषकः' इति विश्वनाथोक्तेश्च 'भवती'ति सम्बोधनमत्र यौगन्धरायणेन प्रयुक्तम् । तत्र 'विदूषक'इत्युपलक्षणमन्येषामपि । कनिष्ठभगिनीत्वेन वा 'भवती'त्यामन्त्रणम् ।

३ 'ब्राह्मणैः सचिवो वाच्यो ह्यमात्य ! सचिवेति च । शेषैरन्यजनैर्वाच्यो हीनैश्चार्येति नित्यशः ॥' इति—'आर्येति चाग्रजः' इति, 'आर्येति ब्राह्मणं ब्रूया'दिति च भरतोक्तेरार्यनाम्ना यौगन्धरायणस्यामन्त्रणम् ।

**यौगन्धरायणः**—भवति ! एवमनिर्ज्ञातानि दैवतान्यवधूयन्ते ।

**वासवदत्ता**—अय्य ! तह परिस्समो परिखेदं ण उप्पादेदि जह अअं परिभवो ।

[ आर्य ! तथा परिश्रमः परिखेदं नोत्पादयति, यथाऽयं परिभवः ] ।

अभिनवराजलक्ष्मीः

राजपुरुषाणां निसर्गत एव क्रूराशयानामेतावता निन्दा गम्यते ।

वासवदत्ता तु पुनः—'नाहमेवं पृच्छामि – 'क एष उत्सारयती'ति, किं तर्हि ?—'क एष उत्सार्यते' इति पृच्छामीत्याशयेनाह—**अय्य णहीति** ।

आर्य !=अमात्यश्रेष्ठ ! न हि=नायं ममाभिप्राय इत्यर्थः । किन्तु एवम् = इत्थं, वक्तुकामा । अयं भावः—न हि एवं वक्तुकामा = नह्यहं भवन्तमेवं पृच्छामि—'क एष उत्सारयती'ति, यस्योत्तरं भवता दत्तं—'यो धर्मादात्मान-मुत्सारयती'ति । ( नह्येवमिति पाठे एवं = यथा भवता निर्धारितं तथा । न वक्तुकामा = न विवक्षामीत्यर्थः । )

तर्हि किं वक्तुमिच्छसीति प्रश्ने आह—अहं वीति । 'किन्तु'इतरजनवत्,—अहमपि=राजमहिषीवासवदत्ताऽपि । नामेति–क्रोधे, विस्मये, कुत्सायाञ्च । 'नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने' इत्यमरः । 'ताव'दिति पाठान्तरम् ।

उत्सारयितव्या = इतो निष्कासनीया भवामि किम् । इति=इत्थम् । 'मे विवक्षे'ति शेषः । एवञ्च 'क एष उत्सार्यते ? इत्येव मे प्रश्न'इति—वासवदत्तया स्वाशयः प्रकटितः ।

यदि–'को एसो उस्सारेदी'त्यस्य–'क एष उत्सार्यते' इत्यर्थो न स्यात्तदा 'न ह्येवं वक्तुकामा'इत्येवं वासवदत्तोक्तिरेव अयुक्ता स्यादतोऽस्मद्रीत्या वासवदत्तावाक्यस्य द्व्यर्थकताऽवश्यमङ्गीकार्येति सर्वं समञ्जसमिति गौडाः ।

तदेवं वासवदत्तावाक्येन तदाशयं बुद्ध्वा यौगन्धरायणस्तदुत्तरमाह-**भवतीति** । भवति=श्रीमति ! सुभगे ! एवम् = इत्थम्, त्वमिवेति यावत् । अनिर्ज्ञातानि=तत्त्वतोऽपरिचितानि । दैवतानि - देवा अपि । भवादृशा अपि अवधू-

**यौगन्धरायणः**—भुक्तोज्झित एष विषयोऽत्रभवत्या, नाऽत्र (भवत्या) चिन्ता कार्या।

---

अभिनवराजलक्ष्मीः

यन्ते = अवज्ञायन्ते। तिरस्कारं लभन्ते इति यावत्। 'लोके जनै'रिति शेषः। निगूढं चरन्तो दिव्यानुभावा देवा अपि अविज्ञाततत्त्वैर्लोकैः प्रकामं बत! तिरस्क्रियन्ते, का कथा मनुष्याणाम्?। एवञ्चोदयनराजमहिषी महासेनदुहिताऽपि महानुभावापि च अविज्ञातयाथार्थ्यैरेभिस्त्वं (वासवदत्ता) यदि राजपुरुषैः सावज्ञमुत्सार्यसे, तर्हि नात्र त्वयाऽणुरपि खेदो विधेय इति भङ्ग्यन्तरेण महामन्त्रिणा यौगन्धरायणेन—'त्वमपि उत्सारणीयैवैभि'रित्युत्तरमुपन्यस्तम्। विधीयमानस्य कार्यस्य गौरवमुदीक्ष्य भवत्या ईदृशानि नान्तरीयकाणि कष्टानि सोढव्यान्येवेति तु निगूढ आशयो यौगन्धरायणस्य।

परिश्रमः = लावाणकाभिधानादुदयनमहाराजस्कन्धावारादेतदाश्रमपदं यावत् पादचारेण यदागमनं तेन जनितो यः श्रमः स खलु। तथा = तादृक्। परिखेदं=व्यथाम्। नोत्पादयति = न जनयति। यथा = यादृक्। अयं परिभवः = साधारणराजपुरुषकर्तृकोत्सारणालक्षणः खल्वयमनादरः। एवञ्च अनया उत्सारणया नितरां व्यथितं मे मनः समाधानं नैव धत्ते इति भावः। उत्तमप्रकृतेर्मानोन्नताया वासवदत्ताया अतिभूमिङ्गतां मनोव्यथां परिसान्त्वनेनापनिनीषुर्महामन्त्री यौगन्धरायणः कार्यगौरवं स्मारयति—**भुक्त** इति।

अत्र भवत्या = महामाननीयया महाराजोदयनमहिष्या भवत्या। एष विषय = ईदृशो राजकुलोचितः प्रतिष्ठापुरस्सरं गमनादिरूपः सत्कारः। पूर्वं भुक्तः पश्चादुज्झितः—भुक्तोज्झितः = अनुभूय परित्यक्तः। आकण्ठं (कण्ठेहत्य) पूर्वमास्वादितः, स्वेच्छयैव च कार्यविशेषसिद्धये परित्यक्तश्चेति न तत्र भवत्या किञ्चित्कालम् आ कार्यसिद्धेर्मनसः खेदो विधेयः।

ननु मास्तु सत्कारः, तिरस्कारस्तु दुःखाकरोत्येवात आह—**अत्रे**ति।

कुतः—

**पूर्वं [1]तवाऽप्यभिमतं गतमेवमासी-**
**च्छ्लाघ्यं गमिष्यसि पुनर्विजयेन भर्तुः ।**

---

अभिनवराजलक्ष्मीः

अत्र = उत्सारणादिलक्षणे परिभवे । चिन्ता = खेदः । न कार्या = न विधेया । कार्यवशात्परिगृहीतसाधारणवेषया निगूहितस्वानुभावया भवत्या खेदो न विधेय इत्याशयः ।

ननु माभून्नाम मम सत्काराभिलाषः, तिरस्कारोत्थः क्लेशस्तु कथं नाम मया सोढव्य इत्याशङ्क्याह—**कुत इति** । यत इत्यर्थः । अस्य च अग्रिमेण 'पूर्व'मिति श्लोकेन सहैव सम्बन्धः ।

[ अन्वयः ] पूर्वं—तवाऽपि एवम् अभिमतं गतम् आसीत् । भर्तुः विजयेन पुनः श्लाघ्यं गमिष्यसि ( च ) । कालक्रमेण परिवर्त्तमाना जगतः भाग्यपङ्क्तिः—चक्रारपङ्क्तिरिव गच्छति । 'पूर्वं त्वये'ति तु मुद्रितः पाठः ।

[ विग्रहः ] कालस्य क्रमः—कालक्रमः, तेन—कालक्रमेण । चक्रस्याराणि—चक्राराणि, चक्राराणां पङ्क्तिः-चक्रारपङ्क्तिः । (यद्वा—चक्रवद्गच्छति अर्यते वा चक्रारः=अरघट्टः, तन्निबद्धा घटपंक्तिरिति वार्थः।) भाग्यस्य पंक्तिः-भाग्यपंक्तिः ।

[ अर्थः ] पूर्वम् = अरिकृतप्रधर्षणात्पूर्वम्, आवन्तिकारूपपरिग्रहात्पूर्वं वा । उदयनपद्मावत्योः परिणयस्य सिद्धये स्वयमङ्गीकृतात् प्रच्छन्नप्रवासात्पूर्वमिति यावत् । [1]तवाऽपि = अत्र भवत्या वासवदत्ताया अपि । एवं = परिजनविभवोपेतं । श्लाघ्यं = राजकुलोचितम् । [1]गतं = गमनम् । भावे क्तः ।

---

१ 'तवे'ति षष्ठी 'गत'मिति भावे क्तस्य योगे—'छात्रस्य हसित'मितिवत्, 'नपुंसके भावे क्तस्य योगे षष्ठ्या उपसङ्ख्यान'मिति वचनात् । 'त्वयाऽपी'ति मुद्रितपाठस्तु चिन्त्यः। वार्त्तिकप्रत्याख्याने कर्त्तरि तृतीया वा बोध्येति तु केचित् ।

**कालक्रमेण[1] जगतः परिवर्त्तमाना**
**चक्रा[2]ऽरपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः ॥४॥**

अभिनवराजलक्ष्मीः

आसीत् = अभवत् । शत्रुकृताद्राज्यापहारात्पूर्वं भवत्या अपि परिजनविभवोपेतं राजपुरुषनिरूप्यमाणमार्गम्, अपसारितसकलपुरुषञ्च गमनमीदृशमेवासीदेवेति भावः । एवञ्च अन्तःपुरोचित एवायमितरसाधारणजनोत्सारणालक्षणः समुदाचारस्तत्र खेदो न भवत्या विधेय इति हृदयम् ।

ननु याऽहं पूर्वमीदृशेनैव परिच्छेदेन सहिता श्लाघ्यं गतागतमकार्षं, सेयं दुरदृष्टवशाद्वने पादचारेण प्राकृतजनवत्परिभ्रमामि, किञ्च साधारणैर्भटैः प्रयुक्तं तिरस्कारमनुभवामीत्येव मे खेदो मनसि वर्त्तते इत्याशङ्क्याह-श्लाघ्यमिति । भर्त्तुः = स्वपत्युः, महाराजस्य वा–उदयनस्य । विजयेन–पद्मावतीपरिणयात्सिद्धादिष्टेनावश्यम्भाविना साम्राज्यलाभेन । पुनः = भूयोऽपि । श्लाघ्यं = प्रशंसनीयम्, परिजनविभवभ्राजमानं यथा स्यात्तथा । गमिष्यसि = गतागतं, सुखोपभोगञ्च करिष्यसि ।

ननु मनोरथस्तवायं न जाने कदा फलिष्यतीत्यत आह—कालेति । कालक्रमेण = कालवशात् । अदृष्टशुभाशुभदशावशादिति वा । परिवर्त्तमाना = परिवर्त्तनं भजमाना, परिणमन्ती वा । जगतः = संसरतः प्राणिमात्रस्य । 'जगत्स्याद्विष्टपे क्लीबं, वायौ ना, जङ्गमे त्रिषु' इति विश्वः ।

भाग्यपङ्क्तिः = भाग्यपरिपाटी । सौभाग्य—दौर्भाग्य-धोरणीति यावत् । चक्रारपङ्क्तिरिव=रथचक्रनिहितकाष्ठश्रेणिरिव । अरघट्टनिबद्धघटश्रेणिरिव वा । [ अराणि = रथचक्रनेमिधारणकाष्ठानि,—रथनाभिरथनेम्योरन्तराले यानि तिर्यक्स्थाप्यन्ते । ] 'अरो जिनेऽरं चक्राङ्गे शीघ्रशीघ्रगयोरपि' इति हैमः ।

गच्छति=क्रमेण नीचैरुपरि च गच्छति । एवञ्च कतिपयदिवसावसानमेवै-

---

परेतु 'सताङ्गत' मितिवत्तत्र गतमिति शेषेषष्ठी । केचित्तुमतं तु न युक्तं, 'नपुंसके भावे क्त' इत्यनेनाकर्मकेभ्य एव भावे क्तस्य विधानादित्याहुः ।

[ प्रविश्य ]

**भटौ**—उःसरह ! [ उत्सरह !! ] अय्या ! उस्सरह !!! ।

[ उत्सरत ! [ उत्सरत !! ] आर्याः ! उत्सरत !!! ] ।

अभिनवराजलक्ष्मीः

तद्भवत्या दुःखम्, एतदनन्तरं नूनमनुत्तमा साम्राज्योपभोगसुखप्राप्तिरिति शुभोदर्कोऽयं प्रच्छन्नप्रवासस्त्वया किञ्चित्कालं निर्वहणीय एवेति भावः[1]। तदुक्तं-

'सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
चक्रवत्परिवर्त्तन्ते दुखानि च सुखानि च ॥' इति ।
'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' । इति च ।

उपमा, अर्थान्तरन्यासश्चाऽलङ्कारः[2] । वसन्ततिलकाख्यं वृत्तम्[3] ॥ ४ ॥

इत्थं सम्भाषणव्यग्रे यौगन्धरायणे भटौ पुनस्तथैवोत्सारणां विधत्त इति सूचयन्नाह—उत्सरतेति । अत्र 'प्रविश्ये' त्युचितोऽपि पाठो मूले न दृश्यते ।

१ अत्र—'पूर्वन्त्ववाऽप्यभिमत' मित्यादिना मुखसन्धेः परिन्यासो नाम तृतीयमङ्गं प्रदर्शितम् । तदुक्तं भरतेन—'तन्निष्पत्तिः परिन्यासः' इति । परिन्यासो नामेतिवृत्तस्य निश्चयापत्तिरूपतया परितो हृदये न्यासः । उपक्षेपस्तु इतिवृत्तस्य सङ्क्षेपतोऽभिधानम् । परिकरश्च तस्यैव किञ्चिदुन्मेष इति—पूर्वाभ्यान्ताभ्यामस्य भेदः स्पष्ट एव ।

२ सामान्येन=चक्रारपङ्क्तेरिव भाग्यपङ्क्तेर्गमनेन, विशेषस्य=श्लाघ्यगमनादेः समर्थनादर्थान्तरन्यासोऽलङ्कारः । तदुक्तं—

"सामान्यं वा विशेषेण, विशेषस्तेन वा यदि ।
कार्यञ्च कारणेनेदं कार्येण च समर्थ्यते ॥
साधर्म्येणेतरेणाऽर्थान्तरन्यासोऽष्टधा ततः ॥" इति ।

३ 'उक्ता वसन्ततिलका तभजा जगौ गः' इति तल्लक्षणम् ।

[ ततः प्रविशति काञ्चुकीयः ]

अभिनवराजलक्ष्मीः

ततः = तदनन्तरम् वासवदत्तायौगन्धरायणयोरित्थं परस्परमालापमाचरतोरेव,भटोत्सारणासमकालमेव च । काञ्चुकीयः = कञ्चुकपरिवृताङ्गो धृतदण्डो राजपरिचारकविशेषः । [ अचकन पगड़ीधारी राजा का वृद्ध मुसाहिब ] । 'काञ्चुकीय' इत्यस्य स्थाने 'कञ्चुकीय' इत्यपि केचित्पठन्ति ।

'कारकाः कञ्चुकीयाश्च तथा वर्षवराः पुनः ।
औपस्थायिकनिमुण्डाः स्त्रीणां प्रेषणकर्मणि' ॥

—इति नाट्यशास्त्र ( अ० ३४ श्लो० ६२ ) संवादात् ।

[ ३२ पृष्ठस्थटिप्पणीशेषः— ]

अत्र प्रसङ्गान्नाटके वस्तुविन्यासप्रकारो वर्ण्यते । स च यथा दर्पणे—

'बीजं, बिन्दुः, पताका च, प्रकरी, कार्यमेव च ।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥'

अर्थप्रकृतयः=प्रयोजनसिद्धिहेतवः । योज्याः=नाटके प्रयोज्याः ।

तत्र बीजं यथा—'अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति ।
फलस्य प्रथमो हेतुर्बीजन्तदभिधीयते ।' इति

प्रकृते बीजञ्च वत्सराजस्योदयनस्य पद्मावतीप्राप्तिहेतुर्दैवानुकूल्यलालितो यौगन्धरायणव्यापार एवेत्यवधेयम् । बिन्दुलक्षणञ्च—

'अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ।' इति ।

पताका च—'व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ।' इति ।

सा च प्रकृते विदूषकचरितमेव ।

प्रकरीलक्षणञ्च—'प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ।' इति ।

अभिनवराजलक्ष्मीः

परे तु—'ये नित्यं सत्त्वसम्पन्नाः कामदोषविवर्जिताः।
ज्ञानविज्ञानकुशला काञ्चुकीयास्तु ते मताः ॥'

—इत्युक्तेर्यथाश्रुतमेव पाठं युक्तं मन्यन्ते। तत्र 'काञ्चुकीय' इति पाठे 'वेणुकादिभ्यश्छ'णिति शैषिकेण च्छणा तथा रूपं साधनीयं, 'कञ्चुकीय' इति पाठे तु गहादेराकृतिगणत्वाच्छ इत्यवधेयम्। अर्थस्तु यथाकथञ्चिन्निर्वाह्यः।

[ टिप्पणीशेषः—]

**कार्यञ्च—**

'समापनन्तु यत्सिद्ध्यै तत्कार्यमिति संमतम्।' इति।

तच्च प्रकृते पद्मावतीपरिणय-साम्राज्यलाभादिकमेव। तत्र—

'अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः।
आरम्भ-यत्न-प्राप्त्या-ऽऽशा-नियताप्ति-फलागमाः ॥' इति।

तत्र आरम्भस्तु—

'भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये।' इति।

प्रकृते यथा-पद्मावत्या हस्ते वासवदत्तानिक्षेपार्थं यौगन्धरायणस्यौत्सुक्यम्।

**यत्नादयो यथा—**

'प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः।
उपायाऽपायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः ॥
अपायाऽभावतः प्राप्तिर्नियताऽऽप्तिस्तु निश्चिता।
साऽवस्था फलयोगः स्याद्यः समग्रफलोदयः ॥' इति।

यथा प्रकृते पद्मावतीलाभादिः फलयोगः। एवमन्यत्राप्यूह्यम्। तत्र यथासङ्ख्यं निरुक्तपञ्चावस्थासम्बन्धादितिवृत्तस्य सन्ध्याख्याः पञ्च भागाः। तदुक्तं—

'यथासङ्ख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः।
पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः ॥

**काञ्चुकीयः**[1]—सम्भषक[2] ! न खलु न खलूत्सारणा कार्या ।

अभिनवराजलक्ष्मीः

'काञ्चुकीय' इत्यस्य 'प्राहे' ति शेषः । सम्भषक इति । राजपुरुषस्य

मुखं, प्रतिमुखं, गर्भो, विमर्श, उपसंहृतिः ।
इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते ॥'

अस्य = सन्धेः । तत्र मुखसन्धेर्लक्षणमाह **विश्वनाथः**—

**'यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम् ॥'** इति ॥

यथा प्रकृते प्रथमाङ्के मुखसन्धिः ।

तत्र मुखसन्धेरङ्गानि द्वादश उपक्षेपादीनि दर्पणे उक्तानि । तत्र—

**'काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ।'** इति ।

**काव्यार्थस्य** = प्रकृतायाः कथायाः । **समुत्पत्तिः** = संक्षेपेण प्रक्षेपः ।

प्रकृते यथा पद्मावतीप्रवेशावसरे—**"भवति ! एवमनिर्ज्ञातानि दैवतान्यप्यवधूयन्ते"** इत्यादिना काव्यार्थस्योपक्षेपो मुखसन्धेः प्रथममङ्गम् ।

अग्रे च—'**आर्य ! तथा परिश्रमः परिखेदं नोत्पादयति**' इत्यादिवासवदत्तोक्त्या, '**भुक्तोज्झित एप विषयोऽत्र भवत्या**' इत्यादियौगन्धरायणोक्त्या च परिकरो नाम मुखसन्धेर्द्वितीयमङ्गं दर्शितम् । '**समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः**' इत्युक्तेः ।

[ इति ३२ पृष्ठस्थटिप्पण्याः शेषः ] ।

१ 'काञ्चुकीयस्य कर्त्तव्या वयोऽवस्थाविशेषतः—' इत्युक्तेः 'काञ्चुकीय' इत्यपि भरतसम्मतं कञ्चुकिनामधेयमिति **तत्त्वविदः** ।

२ 'शम्भलक' इति तु परे पठन्ति । तत्र—शम्भलते इति शम्भलको मधुरभाषी ।

पश्य—

**परिहरतु भवान् रुषाऽपवादं[1]**
**न परुषमाश्रमवासिषु प्रयोज्यम् ।**

---

अभिनवराजलक्ष्मीः

उत्सारणाकारिष्वन्यतमस्य प्रधानभूतस्य कस्यचन नामधेयम् । 'शम्भलके'त्यपि केचित्पठन्ति । प्रधानत्वाच्च भटान्तरं परित्यज्यापि सम्भषक एव काञ्चुकीयेनोपदिश्यते इति भावः । अत एवैकवचनसङ्गतिः, अन्यथोत्सारणाकारिणोर्द्वयोरेव भटयोः प्रवेशादेकमुद्दिश्य कञ्चुकिनो निषेधवचनसङ्गतं स्यात् ।

**न खल्विति** । नैवेत्यर्थः । 'सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः' इति वार्त्तिकात्सम्भ्रमे द्वित्वम् । उत्सारणा - अपनयनम् । 'आश्रमवासिना' मिति शेषः । पश्य = विचारय । परे तु—'पश्ये' त्यस्याग्रिमलोकस्थेन 'वसन्ती' त्यनेन सम्बन्धः, 'पश्य मृगो धावती' तिवदिति गौडाः । **परिहरत्विति** ।

---

'भल परिभाषणे' । क्रूरभाषीति तु विरुद्धलक्षणयाऽर्थः ।

**गौडास्तु—'सम्भषके '** त्यस्य स्थाने—'**भटा**' विति, '**भटाः**' इति वा पाठङ्कल्पयन्ति, अग्रेऽपि च '**पश्ये**' त्यत्र 'पश्यत'मिति 'पश्यते'ति वा पाठङ्कल्पयन्ति, 'परिहरतु' इत्यत्र च 'परिहरतमितः' इति 'परिहरत भटाः' इति वा यथायथं पाठमिच्छन्ति । अत एव अग्रे—'**उभौ—अय्य तह**' इत्युक्तिः सङ्गच्छते, अन्यथा सम्भषकमुद्दिश्य निषेधे प्रवृत्ते उभयोर्भटयोरङ्गीकारोऽनुचितः स्यात् । अत्र च सहृदयचेतांसि प्रमाणम् । बहुवचनपाठपक्षे च—अग्रे—"**भटाः—अय्य तह [ निष्क्रान्ताः ]**" इति बहुवचनान्तं पठनीयमित्यवधेयम् ।

---

१ '**रुषाऽववाद**'मिति '**रुषा प्रवाद**' मिति वा पाठमन्ये मन्यन्ते । '**नृपाऽपवाद**'मिति तु मुद्रितः पाठः । राजनिन्दामिति च तदर्थः । स च नातीव रुचिरः ।

**नगरपरिभवान् विमोक्तुमेते**
**वनमभिगम्य [1]मनस्विनो वसन्ति ॥ ५ ॥**

अभिनवराजलक्ष्मीः

[ अन्वयः ] भवान् रुषा अपवादं [ अपवादं, प्रवादं वा ] परिहरतु। (यतः —) आश्रमवासिषु परुषं न प्रयोज्यम्। ( पश्य ) एते मनस्विनः नगरपरिभवान् विमोक्तुं वनम् अभिगम्य वसन्ति।

[ विग्रहः ] आश्रमे वसन्ति तच्छीलाः—आश्रमवासिनः, तेषु—आश्रमवासिषु। नगरे परिचिताः समुचिताः, सुलभाः, अनुभूयमाना वा परिभवाः-नगरपरिभवाः, तान्—नगरपरिभवान्।

[ अर्थः ] हे सम्भषक ! ( हे शम्भलक ! इति वा )। भवान्—रुषा = क्रोधेन, पुरुषया वाचेति वा। 'कोपक्रोधाऽमर्षरोषप्रतिघा रुट् क्रुधौ स्त्रियौ' इत्यमरः। अववादं = समुत्सारणवचः, समुत्सारणाज्ञां वा। 'अववादस्तु निन्दायामाज्ञाविश्रम्भयोरपी'ति रत्नकोशः। 'अववादस्तु निर्देशे निन्दा-विश्रम्भयोरपी'ति हैमः। 'प्रवाद'मिति पाठे—प्रकृष्टं वादं-प्रवादम् = उच्चैर्घोषणामित्यर्थः। सावष्टम्भं वच इति वा। परिहरतु = परित्यजतु। ( भटयोर्द्वित्वात् 'परिहरतमितो रुषा प्रवाद'मिति द्विवचनानुसारिपाठे तु— इतः = आश्रमपरिसरादेवेत्यर्थः। अत एव 'न परुषमाश्रमवासिषु प्रयोज्य'-मित्यग्रिमवाक्यं स्वरसतः सङ्गच्छते )।

ननु राजकुलसंमानप्रदर्शनाय समुचितोऽयमाचारः, तं भवान्कुतो निषेधतीत्यत आह—नेति। आश्रमवासिषु = तपोवनवासिषु तपस्विषु। परुषं = क्रूरं समुत्सारणावाक्यं, न प्रयोज्यं = न प्रयोक्तुमुचितम्।

ननु कुतो न तत्र प्रयोज्यमित्याशङ्क्याह—नगरेति। ( पश्य = विचारय— ) नगरपरिभवान् = ग्रामपुरनगरादिसुलभान् समुत्सारणादि-तिरस्कारान्। विमोक्तुं=परिहर्तुम्। एते [1]मनस्विनः-इमे मानधनाः, उन्नत-

१ 'तपस्विन' इति पाठस्तु शोभनः। तपोधना इति हि तदर्थः। तपोऽन्तराय-

**उभौ**—अय्य ! तह । [ आर्य ! तथा ] ।

( **निष्क्रान्तौ** ) ।

---

अभिनवराजलक्ष्मीः

चेतसः । वनमभिगम्य = काननमागत्य, वसन्ति = निवसन्ति । ( —इति पश्य = विचारयेति पूर्वेण सम्बन्धः ) ।

अत्र 'नृपाऽपवाद'मिति मुद्रितं नितरां भ्रष्टं पाठमादाय उत्सारणां राजनिन्दाजनकतयाऽध्यवस्यन्तो—"भवान् नृपापवादं = ( नगरेष्विवेहापि तपोवने राजाज्ञयोत्सारणां कर्त्तुं प्रवृत्त इति दुष्टभृत्योऽयं राजेत्यस्मद्राजनि वृथैवाऽपरैरारोप्यमाणं )—राज्ञः परीवादं-परिहरतु । अन्यत्रेवात्रापि समुत्सारणां माऽनुतिष्ठतु । अनुज्ञायां लोट्—" इत्येवं व्याचक्षाणा महान्तो विद्वांसो विद्वांस एव । 'न परुषमाश्रमवासिषु' इत्यग्रिमवाक्यस्याऽसम्बद्धतापत्तेः । अर्थान्तरन्यासोऽलङ्कारः । पुष्पिताग्रा वृत्तम् । 'अयुजि नयुगरेफतो यकारो, युजि च नजौ जरगाश्च पुष्पिताग्रा' इति वृत्तरत्नाकरोक्तेः ।

**उभाविति** । प्रधानराजपुरुषस्य वचोऽस्माभिरवश्यमुरीकरणीयं, तपोवनगौरवञ्च रक्षणीयमिति विमृशन्तौ भटावित्थमाहतुरित्यर्थः । 'उभा'वित्यत्र भटा इत्यपि केचित्पठन्ति । आर्य = कञ्चुकिन् ! । तथा = यथा भवान्पश्यति तथैवोचितं, भवदुपदिष्टं शिरसाऽभिनन्दावः, तदिह उत्सारणां परित्यजावश्चेत्यर्थः । 'आर्येति ब्राह्मणं ब्रूया'दित्युक्तेरार्यनाम्ना सम्बोधनमिह काञ्चुकीयस्य भटाभ्यामुपात्तमित्यवधेयम् । निष्क्रान्तौ = रङ्गान्निर्गतौ ।

---

भूतान्नगरपरिभवान्दूरंत एव परिहर्तुमिमे मुनयोऽत्र वने वसन्ति तपश्चरणाय, तदत्रापि समेत्य तेषां तपसोऽन्तरायजननं नाम नास्माकमुचितमिति—सहृदयचेतश्चमत्कारी खल्वयमर्थस्तपस्विन इति पाठे लभ्यते इति गौडाः ।

**यौगन्धरायणः**—हन्त ! सविज्ञानमस्य दर्शनम् ।
वत्से ! उपसर्पावस्तावदेनम् ।
**वासवदत्ता**—अय्य ? तह । [ आर्य ! तथा ] ।
**यौगन्धरायणः**— (उपसृत्य—) भोः ! किङ्कृतेयमुत्सारणा ?।

अभिनवराजलक्ष्मीः

**हन्तेति** । हर्षे निपातोऽयम् । 'आश्रमे समुत्सारणा नोचिते'ति-यौगन्धरायणाभिमतस्य उत्सारणानिवारणस्य कञ्चुकिना स्वयमेव निष्पादितत्वात्तस्य युक्तो हर्षः । उत्सारणाप्रभवस्य वासवदत्ताऽवमानस्य स्वत एव निवृत्तेश्च नितरां प्रहर्ष इत्यवधेयम् । सविज्ञानं = विवेकमनोहरम् । अस्य = कञ्चुकिनः । दर्शनं = ज्ञानम् । विचारः । वत्से=वासवदत्ते । तावत्= प्रथमम्, इदानीम् ! एवं = कञ्चुकिनम् । उपसर्पावः = अस्य समीपं गच्छावः । 'स्वसेति भगिनी वाच्या ज्येष्ठा, वत्सेति चानुजा' इति भरतोक्तेरनुजायाः ( तथात्वेनाऽभिमतायाः ) वासवदत्ताया अनेन 'वत्से' इति सम्बोधनमत्रोक्तम् । स्वभगिनीत्वस्य स्वयमेवाग्रे वक्ष्यमाणत्वादिति ध्येयम् ।

वासवदत्तायाश्च—'आर्येति पूर्वजो भ्राता वाच्यः' इति भरतोक्तेरार्येति सम्बोधनम् ।

आर्य = महामन्त्रिन् यौगन्धरायण ! । यथा = यथा भवानभिवदति, अभिलषति च, अथैव तत् । [किञ्च] अनुष्ठेयं भवदुक्तं वचो मयाऽपीत्यर्थः । 'कञ्चुकिनो विवेकपूर्णं दर्शनम्, उपसर्पणीयश्च स' इति यदुक्तं भवता तत्तथैवेत्यहमप्यविगच्छामीति वासवदत्तया यौगन्धरायणोक्तस्यानुमोदनमाचरितमिति भावः ।

उपसृत्य = समीपं गत्वा । कविवाक्यमेतत् । भोः = अये कञ्चुकिन् ! 'सौम्य' 'भद्रमुखे'त्येवं 'हे'पूर्वञ्चाधमं वदेत्' इति भरतोक्तेर्महामात्यस्येदानीं तपस्विभूमिकामुपगतस्य च यौगन्धरायणस्य 'भोः' शब्देन कञ्चुकिकृतमामन्त्रणं युज्यते एव । भरतोक्तौ 'हे'शब्दो 'भो'इत्यादेरुपलक्षणमिति च तत्त्वविदः।

**काञ्चुकीयः**—'भोस्तपस्विन् !—' ।

**यौगन्धरायणः**—( आत्मगतम्— ) 'तपस्वि'न्निति गुणवान्[1] खल्वयमालापः, अपरिचयात्तु न श्लिष्यते मे मनसि ।

अभिनवराजलक्ष्मीः

किङ्कृता = केन हेतुना कृता ? । उत्सारणा = मार्गात्तपस्विजनानामपनयनम् । 'भटैरुत्सारणा कुतः क्रियते स्मे'ति प्रश्नाशयः ।

कञ्चुकी तदुत्तरमाह—**भो** इति । तपस्विन् = हे परिव्राजक ! । तपस्विन्नित्येवमात्मनः सम्बोधनमाकर्ण्य मध्ये एव स्वयमेव महामात्यो विचारमभिनयति— आत्मगतमिति । रहस्यभूतत्वेन सर्वाऽश्राव्यतया स्वमनस्येव वक्ष्यमाणप्रकारेण यौगन्धरायणो विचिन्तयति स्मेति कविवाक्यमेतत् । 'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मत'मिति विश्वनाथः ।

तपस्विन्नित्ययं='भोस्तपस्वि'न्नित्येपः । आलापः=सम्बोधनम् । गुणवान् खलु=उचित एव । श्रेष्ठ एव । मद्योग्य एव । ( यद्वा—गुणवान्-नाऽयोग्यः )। खल्विति स्वचित्तपरिसान्त्वने निपातः । 'निषेधवाक्यालङ्कारे जिज्ञासानुनये खलु' इत्यमरः । ( अनुनयः=परिसान्त्वनम् ) । यद्यपि-परिव्राजकभूमिकाङ्गतस्य मम तपस्विपदेन सम्बोधनमस्योचितमेव । तु = परन्तु । अपरिचयात् = आत्मनस्तथा सम्बोधनस्याद्य यावदश्रवणात् । मे मनसि न शिलष्यते = न मे मनस आवर्जनाय प्रभवति । न मां सन्तोषयतीति यावत् । महामात्यस्य मेऽधिकारानुरूपैः 'आर्य ! 'महामात्य !' 'सचिवे'त्यादिभिर्गुणवत्तरैरेवालापैरामन्त्रणस्य सर्वैरेवाचरणात्तपस्विन्नित्ययं साधारण आलापो मे न परिचितो, योग्यश्चेति—एतावता महामन्त्रिणः किञ्चिदिव मनसि खेदस्य

---

१ 'गुणवान् खल्वयमालापः' इत्यनेन मुखसन्धेरङ्गं विलोभनं नामोक्तम् ।

**काञ्चुकीयः**—भोः ! श्रूयताम्,—एषा खलु **गुरुभिरभिहितनाम-धेयस्याऽस्माकं महाराजदर्शकस्य** भगिनी **'पद्मावती'** नाम ।

अभिनवराजलक्ष्मीः

प्रादुर्भावः सूच्यते । परेतु—मामुद्दिश्य तपस्विशब्दस्य प्रशस्ततपश्चरणशीलार्थकस्य प्रयोगादनेन कञ्चुकिनाऽतितरां संमानितस्याऽपि मे मनसि न हर्ष उद्भवति, कार्यविशेषसिद्धये एव परिव्राजकवेषस्य मयाऽङ्गीकाराद्वस्तुतस्तथाविरहादिति । तत्कार्यसिद्धिनिविष्टचेतसो मे मनसि न श्लिष्यते = न मां हर्षतरलितं करोतीति वा यौगन्धरायणेन स्वावस्था प्रकटितेति योजयन्ति ।

'श्लिषधातोः परस्मैपदितयाऽऽत्मनेपदं चिन्त्य'मिति महामहिमानः शास्त्रिप्रभृतयः । गौडास्तु—पूर्ववाक्यस्थस्य—'आलाप' इत्यस्य अर्थवशेन तृतीयान्ततया विपरिणतस्य सम्बन्धमभिप्रयन्तः—'श्लिष्यते इति भावे प्रत्ययः ।' एवञ्च—"तपस्विन्निति गुणवान् खल्वयमालापः । अपरिचयात्तु न [—गुणवता आलापेन ] श्लिष्यते मे मनसि—". इत्येवमन्वयः । अर्थवशाद्विभक्तेर्विपरिणामस्तु प्रसिद्ध एवेति वदन्ति ।

'भोस्तपस्विन्'इति सम्बोधनेऽन्यमनस्कमिवोद्विग्नमिव च विभाव्यमानं यौगन्धरायणं दृष्ट्वा परचित्तानुविधानदक्षः कञ्चुकी सर्वसाधारणं—'भो' इति सम्बोधनं प्रयोजयन्स्वोक्तिं पुनः प्रवर्त्तयन्नाह—**श्रूयतामिति** । श्रूयताम् = आकर्ण्यताम् । एषा खलु = इयं खलु, आश्रमे प्रविष्टा, पुरतो विभाव्यमाना च । गुरुभिः = स्वपित्रादिभिः, नत्वस्माभिः । भृत्यैः साक्षाद्राजनामोच्चारणस्यानुचितत्वात्तथोक्तिरिति हृदयम् । 'गुरुर्महत्याङ्गिरसे पित्रादौ धर्मदेशके' इति हैमः । अभिहितम् = कृतम् । उच्चारितं वा नामधेयं यस्यासौ तस्य । अस्माकं = प्रजावर्गस्य । राज्ञि स्वानुरागसूचनाय च अस्माकमितिपदमुपात्तम् ।

महाराजदर्शकस्य = 'दर्शके'तिगुरुभिरुच्चारितनामधेयस्य, अस्माकं महाराजस्येति सम्बन्धः । भगिनी = स्वसा । पद्मावती नाम = 'पद्मावती'ति नाम्ना प्रसिद्धा । 'अस्ती'ति शेषः । 'एषे'ति निर्देशस्तु अस्या अतिसन्निहितत्वादेवेति बोध्यम् ।

**सैषा नो महाराजमातरं महादेवीमाश्रमस्थामभिगम्याऽनुज्ञाता तत्रभवत्या, राजगृहमेव यास्यति, तदद्याऽस्मिन्नाश्रमपदे वासोऽभिप्रेतोऽस्याः ।**

---

अभिनवराजलक्ष्मीः

अत्र 'गुरुरभिभिहितनामधेयस्ये'त्युक्तिर्महाराजस्य स्वस्वामिनः साक्षान्नामोच्चारणस्यात्यन्तमनुचितत्वात्, नामोच्चारणं विना यथावत्परिचयस्य दातुमशक्यत्वाच्च कञ्चुकिना चातुर्येण 'गुरुभिर्यस्य दर्शक इति नामाभिधीयते'इत्येवंरीत्या पारोक्ष्येण स्वमहाराजनाम निर्दिष्टम् । 'गुरुभिस्तथा नाम गृह्यते नत्वस्माभि'रिति सूचनेन च स्वदोषपरिमार्जनञ्च विहितमिति गूढमाकूतम् । 'स्वामिनो नाम भृत्यादिवर्गैः साक्षान्न गृह्यते' इति च सत्सम्प्रदायः ।

सैषा = पुरतो विभाव्यमाना दर्शकमहाराजभगिनी सा एषा पद्मावती । नः = अस्माकम् । महाराजमातरं = दर्शकमहाराजजननीं, स्वमातरञ्च । 'नः' इत्यस्य 'महाराजे'त्यनेन सम्बन्धः । तथा च--नः = अस्माकं यो महाराजस्तस्य—मातरमिति रीत्याऽन्वयः । सापेक्षत्वेऽपि 'देवदत्तस्य गुरुकुल'मितिवन्नित्यसापेक्षत्वात्समासः । 'स्वजननी'मित्येवं वक्तव्ये 'महाराजमातर' मित्युक्तिर्गौरवातिरेकसूचनायैवेत्यवधेयम् ।

महादेवीं = महादेवीतिनामधेयाम् । आश्रमस्थाम् = वानप्रस्थाश्रममुरीकृत्य निकटवर्तिनि कस्मिंश्चित्तपोवने तपश्चरन्तीम् । तपोवनस्थामिति वा । अभिगम्य = प्राप्य । तद्दर्शनेन स्वात्मानं पावयित्वेत्यपि बोध्यम् । तत्र भवत्या = पूजनीयया महाराजजनन्या महादेव्या । अनुज्ञाता = इतः प्रतिनिवृत्त्य राजगृहं गन्तुं दत्ताऽनुज्ञा । राजगृहं = राजगृहाभिधानां मगधराजधानीम् । यास्यति = गमिष्यति । जिगमिषतीति वा ।

तत् = मार्गस्य मध्ये समागतस्यास्याश्रमस्य दिदृक्षया, श्रमाद्वा, तपस्विजनदर्शनार्थं वा । अद्य = अस्मिन्दिवसे । अस्मिन्नाश्रमपदे = भवदधिष्ठिताया-

तद्भवन्तः—

**तीर्थोदकानि समिधः कुसुमानि दर्भा-**
**न्स्वैरं वनादुपनयन्तु तपोधना[1], नः ।**

अभिनवराजलक्ष्मीः

मस्यान्तपोवनभुवि । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः । वासः = निवासः । अस्याः = दर्शकमहाराजभगिन्याः पद्मावत्याः । अभिप्रेतः = अभिलाषविषयीभूतः ।

एवञ्च तत्प्रवेशकालोचितं राजकुलसमुदाचारं पालयद्भिराश्रमपदगौरवं मुनीनामनुत्सारणीयताञ्चाऽपरामृशद्भिरेवोत्सारणा भटैः प्रवर्त्तितेति क्षन्तव्यं तदिति पूर्वेण सम्बन्धः ।

तत् = मुनिनामुत्सारणाया नितान्तमनुचितत्वादधर्ममूलत्वाच्च । भवन्तः = मान्यास्तत्रभवन्तः । अस्य च 'भवन्तः, तपोधनाः—तीर्थोदकादीनि स्वैरमुपनयन्त्वि'तिरीत्याऽग्रिमश्लोकेन सहान्वयो बोध्यः । तीर्थोदकेति ।

[ अन्वयः ] हे तपोधनाः ! भवन्तः—तीर्थोदकानि, समिधः, कुसुमानि, दर्भान् ( च ) स्वैरं वनात्—उपनयन्तु । धर्मप्रिया नः नृपसुता तपस्विषु धर्मपीडां न हि इच्छेत् । ( तपस्विषु— ) एतत् अस्याः कुलव्रतम् ।

[ विग्रहः ] तीर्थानामुदकानि—तीर्थोदकानि । तप एव धनंयेषान्ते तपोधनाः । धर्मः प्रियो यस्याः सा-धर्मप्रिया । नृपस्य सुता-नृपसुता । धर्मस्य पीडा—धर्मपीडा, तां—धर्मपीडाम् । प्रशस्तं तपोऽस्त्येषान्ते-तपस्विनः, तेषु-तपस्विषु । कुलागतं व्रतं-कुलव्रतम् । कुलस्य कुले वा व्रतमित्यपि विग्रहः ।

[अर्थः] तपोधनाः=हे तपस्विनः । भवन्तः=पूज्या भवन्तः । तीर्थोदकानि= । पूजाद्यर्थं पवित्रजलाशयसलिलानि । 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु ।

१ 'तपोधनानी'ति, 'तपोधनाना'मिति च क्वचित्पाठः । तत्र-'तपोधनानी' ति पाठे—तपोधनानि = तपःसाधनानि कुसुमादीनीत्यन्वयो बोध्यः । 'तपोधना-वः'इत्यपि केचित्पठन्ति । तत्र—'वो युष्माकं धर्मपीडा' मिति सम्बन्धो ध्येयः।

**धर्मप्रिया नृपसुता न हि धर्मपीडा-**
**मिच्छेत्तपस्विषु कुलव्रतमेतदस्याः ॥ ६ ॥**

---

अभिनवराजलक्ष्मीः

योनौ जलावतारे च ऋषिजुष्टजलेषु चे'तिविश्वमेदिन्यौ । समिधः = होमाद्यर्थं काष्ठानि । कुसुमानि = देवपूजाद्यर्थं पुष्पाणि । दर्भान्=अग्निहोत्राद्यर्थं कुशांश्च। वनात् = आश्रमपरिसरकाननभुवः, स्वैरं = यथेच्छं, यथाऽभिलाषम् उपनयन्तु । समायन्तु । आनयन्तु इति यावत् । 'प्रैषातिसर्गे'तिकामचारानुज्ञारूपेऽतिसर्गे लोट् । 'तपोधनानां मुनीनां गतागतं नावरोद्धव्य' मित्यवधार्य परित्यक्ता खलु समुत्सारणाऽस्मद्भटैः, तद्भवन्तो यथेच्छं निरातङ्का विहरन्तु नाम, नात्रास्माकं कन्यान्तःपुरपालकानामणीयस्यपि विप्रतिपत्तिरिति भावः ।

ननु धर्माऽधर्मविवेकशीलेन भवता 'मुनीनामुत्सारणा धर्म' इति विभाव्योत्सारणा निवारिता, तथापि राजपुत्री पद्मावती तु परपुरुषदर्शनं परिजिहीर्षन्ती कोपेन कदाचिदस्मानुत्सारयेदित्यत आह—**धर्मेति** । धर्मप्रिया = धर्मवल्लभा । धर्मरुचिः, धर्मरक्षाप्रवणेति यावत् । नः = अस्माकम् । नृपसुता = राजपुत्री पद्मावती । तपस्विषु = तापसेषु विषये । धर्मपीडां = धर्मोपरोधं, तपोबाधां । नेच्छेत् = कदाचिदपि नाभिलष्येत् । यद्वा-इच्छेदिति वर्त्तमाने 'इच्छार्थेभ्यो विभाषा वर्त्तमाने' लिङ् । एवञ्च इच्छेदित्यस्य इच्छतीत्यर्थः । तदेवं भवतामुत्सारणन्तस्याः कथमप्यनुमतं न भविष्यतीत्याशयः ।

तदेवाह—**कुलेति** । अस्याः = पद्मावत्याः । एतत् = धर्मपालनं, धर्मान्तरायनिवारणञ्च । कुलव्रतम् = वंशपरम्पराप्राप्तोऽनुच्छेद्यो नियमः । 'नियमो व्रतमस्त्रिया' मित्यमरः । परे तु—तपस्विषु विषये एतदस्याः कुलव्रतमिति रीत्या सम्बन्धमत्राहुः ।

[ अत्र'धर्मप्रिया' 'नृपसुता' 'तपोधना' इत्यादिविशेषणानां साभिप्रायतया परिकरालङ्कारः, काव्यलिङ्गञ्च । **वसन्ततिलकं वृत्तम्** ] ॥ ६ ॥

**यौगन्धरायणः**–( **स्वगतम्**[2] )–एवम्[1] ! एषा सा मगधराज-
पुत्री **पद्मावती** नाम !! या **पुष्पकभद्रा**दिभिरादेशिकै[3]रादिष्टा
'स्वामिनो देवी भविष्यती'ति ! ! ! ।

ततः—

**प्रद्वेषो, बहुमानो वा सङ्कल्पादुपजायते ।**
**भर्तृदाराभिलाषित्वादस्यां मे महती स्वता ॥ ॥७॥**

अभिनवराजलक्ष्मीः

यौगन्धरायणः पद्मावतीवृत्तान्तं श्रुत्वा स्वगतमाह—एवमिति । 'एव'-मिति स्मरणाभिनयेऽवधारणे च । 'एवं प्रकारोपमयोरङ्गीकारेऽवधारणे' इति धरणिः । एवम्=इदमित्थं वर्त्तते । [ एवम्=ओह ! यह बात है ।] एषा सा=पुरतो विभाव्यमाना । 'सा' इत्यस्य 'या' इत्यनेन सम्बन्धः । मगध-राजपुत्री = मगधाधिराजदुहिता, दर्शकमहाराजभगिनी । पद्मावती नाम = पद्मावतीति नाम्ना प्रसिद्धा । का सा ? इत्याकाङ्क्षायामाह-सेति । पुष्पक भद्रादिभिः = पुष्पकभद्रमुखैः । 'पुष्पभद्रके'ति केचित्पठन्ति । आदेशिकैः = दैवज्ञैः । आदिष्टा = अभिहिता । 'किमादिष्टे' त्याशङ्कयाह—**स्वामिन इति** स्वामिनः = उदयनस्य, देवी = महिषी । भविष्यति=भवित्री । इतिनाऽऽदेशा-नुकरणम् । इति = इत्थमादिष्टेत्यर्थः । सिद्धैर्दैवज्ञैर्योदयनमहिषी भवित्रीत्येव-मादिष्टा सेयं पद्मावतीति मयाऽवधारितमिति यावत् । ततः = यतः स्वामिनो देवीयं भविष्यति-अतो हेतोः । अस्य च अग्रिमेण श्लोकेन सहैवान्वयः ।

भर्तृदाराः–भर्तृदाराः । भर्तृदारा इति=इयं पद्मावती मम भर्त्तुरुदयनस्य

१ एवम् ! एषा सा 'मगधराजपुत्री'त्यादिना युक्तिनामकं मुखसन्धेरङ्गं प्रदर्शितम् । 'युक्तिः—अर्थानां सम्प्रधारण'मित्युक्तेः ।

२ 'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्' इति दर्पणकृत् ।

३ आदेशं—शुभाशुभपर्यालोचनम्—आह—आदेशिकः । 'आहौ प्रभू-तादिभ्य' इति ठक् ।

**वासवदत्ता—( स्वगतम्— )** 'राअदारिअ'त्ति सुणिअ भइणिआसिणेहो वि मे एत्थ सम्पज्जइ ।

[ राजदारिकेति श्रुत्वा भगिनिकास्नेहोऽपि मेऽत्र सम्पद्यते ]।

---

अभिनवराजलक्ष्मीः

महिषी भवतु इति–) अभिलषति तच्छीलः–भर्तृदाराभिलाषी, तस्य भावस्तत्त्वात् = भर्तृदाराभिलाषित्वात् । भर्तुरुदयनस्येयं महिषी भवत्वित्येवं मनोरथशीलत्वादिति यावत् । मे = मम यौगन्धरायणस्य । अस्यां = पद्मावत्याम् । महती = उत्कृष्टतमा । स्वस्य भावः-स्वता=आत्मीयभावः । 'जायते' इतिशेषः ।

कुत एतदित्यत आह-प्रद्वेष इति । प्रकृष्टो द्वेषः-प्रद्वेषः = उत्कटो विरोधः । बहुमानो वा = स्नेहाधिक्यं वा । 'वस्तुषु' इति शेषः । सङ्कल्पादेव = अभिलाषविशेषादेव । उपजायते = उत्पद्यते ।

स्वशब्दोऽत्रात्मीयवाची । मुनिजनोत्सारणया यस्या विनयादिशून्यतां दर्पोद्धुरताञ्च विभाव्य यत्र मम पूर्वं द्वेष आसीत्तस्यामेव पद्मावत्यामिदानीं यथावत्परिचयाद्बलवती स्वजनबुद्धिरनुरागदृष्टिश्च जातेति तत्त्वम् ।

[ केचित्तु—'भर्तृदाराभिलाषित्वा'दित्यत्र 'भर्तृदारा' इति भावप्रधानो निर्देशः । भर्तृदारात्वमस्यां भवत्वित्यभिलाषशालित्वान्मे महती खल्वत्र पद्मावत्यां वात्सल्यभरिता दृष्टिरित्येवं व्याचक्षते ]। अर्थान्तरन्यासोऽनुप्रासश्चालङ्कारः । 'भर्तृदाराभिलष्यत्वात् , भर्तृदाराभिलापित्वात्' इति वा परे पठन्ति ॥ ७ ॥

स्वगतम् = आत्मगतम् । कविवाक्यमेतत् । राजदारिकेति = इयं पद्मावती राजपुत्रीति । श्रुत्वा = कञ्चुकिमुखादाकर्ण्य । मे = वासवदत्तायाः । भगिनिकास्नेहः = अल्पा [कनिष्ठा] भगिनी–भगिनिका, तस्यामिव स्नेहः = अनु-

---

१ अस्याः पद्मावत्याः कृते मुनीनामुत्सारणां दृष्ट्वाऽस्यां द्वेषबुद्धिर्मे पूर्वमुत्पन्नाऽसीत् , अत एव 'उत्सिक्तो विनयादपेतपरुषो भाग्यश्चलैर्विस्मितः कोऽयं भो

**[ ततः प्रविशति पद्मावती सपरिवारा, चेटी च ] ।**

**चेटी**—एदु एदु भट्टिदारिआ, इदं अस्समपदं पविसदु ।

[ एत्वेतु भर्तृदारिका, इदमाश्रमपदं प्रविशतु ] ।

**[ ततः प्रविशत्युपविष्टा तापसी ] ।**

**तापसी**—साअदं राअदारिआए ।

[ स्वागतं राजदारिकायाः ] ।

---

अभिनवराजलक्ष्मीः

रागो, वात्सल्यभावश्च । अत्र = पद्मावतीविषये । संपद्यते — उत्पद्यते ।

इत्थं विचिन्तयतोरेव वासवदत्तायौगन्धरायणयोः कविः पद्मावत्याः प्रवेशमाह—**तत इति** । ततः = कञ्चुकिकथनानन्तरं । वासवदत्ता-यौगन्धरायणयोः स्वगतं कथनानन्तरञ्च । सपरिवारा = राजोचितसख्यादिपरिजनपरिवृता । इदं पद्मावत्या विशेषणम् । चेटी च = दासी च । अस्याः पृथगुक्तिः- अग्रे एतत्कर्तृकसंवादसिद्धये एव । **चेटीति** । 'पद्मावतीम्प्रतीत्थमाहे'ति शेषः ।

एत्वेत्विति । भर्तृदारिका = राजपुत्री । एतु = अग्रे आगच्छतु । सम्भ्रमे द्विरुक्तिः । 'राजा भट्टारको देवस्तत्सुता भर्तृदारिके'त्यमरः । इदम् = अग्रे दृश्यमानम् । आश्रमपदं = तपोवनस्थलम् । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु'इत्यमरः । 'प्रविशतु' इति प्रार्थनायां लोट् । ततः = 'आश्रमपद' मित्युक्त्याऽऽश्रमसन्निधानसूचनात् । उपविष्टा = आश्रमभुवि उटजे उपविष्टा ।

तापसी = तपस्विपत्नी । प्रविशति = रङ्गभुवि समवतरति ।

---

निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञया'इत्येवं मया पद्मावत्या निन्दैवोपन्यस्ताऽऽसीत् । इदानीन्तु —'इयमेव सा पद्मावती-यामुदयनेन योजयितुमिच्छामी'ति निर्धारिते सति, अस्याम्मे महती आत्मीयबुद्धिरुत्पन्नेत्यहो सङ्कल्पमहिमेत्येवं परे व्याचक्षते । तन्मते पूर्वत्र 'उत्सिक्त' इत्यादिना पद्मावत्या एव निन्दोपन्यस्तेति ध्येयमिति गौडाः ।

**वासवदत्ता—( स्वगतम्– )** इअं सा राअदारिआ ! । अभिजणाणुरूवं खु से रूवं ।

[ इयं सा राजदारिका ! । अभिजनाऽनुरूपं खल्वस्या रूपम् ] ।

**पद्मावती—** अय्ये ! वन्दामि । [ आर्ये ! वंदे ] ।

**तापसी—** चिरं जीव । पविस जादे ! पविस । तबोबणाणि णाम अदिहिजणस्स सअगेहं ।

[ चिरं जीव । प्रविश जाते ! प्रविश । तपोवनानि नामाऽतिथिजनस्य स्वगेहम् ] ।

---

अभिनवराजलक्ष्मीः

स्वागतम् = शोभनमागमनम् । 'अस्तु' इति शेषः । राजदारिकायाः = राजपुत्र्याःपद्मावत्याः । भवत्या आगमनेनाऽस्माकं मनसि हर्षो जातः । अस्मदाह्लादजनकतया शोभनं भवत्या आगमनमिति भावः । त्वां दृष्ट्वा प्रसन्नाः स्म इति यावत् ।

स्वगतम् = स्वमनसि विचारयति । इतरऽश्राव्यमपि प्रेक्षकपरिपच्छ्राव्यं वचः 'स्वगत' मित्युच्यते ।

सा = यदर्थमाश्रमवासितपस्विलोकस्यास्माकञ्चोत्सारणाऽसीत्सेयम् । राजदारिका = राजपुत्री । **अभिजनानुरूपमिति** । अभिजनस्य = महतो राजकुलस्य । (रूपस्य योग्यम्–) अनुरूपं = सदृशम् । अस्याः = राजदारिकायाः पद्मावत्याः, रूपं = सौन्दर्यम् , अङ्गसौष्ठवं, लावण्यञ्च । 'खलु' इति वाक्यालङ्कारे । आर्ये = पूजनीये । वन्दे = प्रणमामि, पादावुपगृह्णामीति वा । 'भवेदभिजनः ख्यातो जन्मभूम्यां कुलध्वजे । कुलेऽपि च पुमान्'—इति मेदिनी ।

चिरं = चिरकालम् । जीव = प्राणान्धरेः । जाते = वत्से ! हे राजपुत्रि ! हे पुत्रि ! इति वा । एतेन तापस्यास्तत्र वात्सल्यमाविष्कृतम् । 'जातं त्रिलिङ्गमुत्पन्ने' इति मेदिनी । प्रविश = अस्मत्पर्णशालाभ्यन्तरमागच्छ । प्रविशेति

**पद्मावती**— भोदु भोदु। अय्ये! विस्सत्थह्मि। इमिणा बहुमाणवअणेण अणुग्गहिदह्मि।

[ भवतु भवतु आर्ये! विश्वस्ताऽस्मि। अनेन बहुमानवचनेनाऽनुगृहीताऽस्मि ]।

अभिनवराजलक्ष्मीः

पुनरुक्तिः–निर्भयं, निःसङ्कोचञ्च प्रविशेति सूचनाय। तपोवनानि = आश्रमकाननानि। नामेति प्रसिद्धौ निपातः। 'नाम प्राकाश्य-सम्भाव्य-क्रोधोपगम-कुत्सने' इत्यमरः। अतिथिजनस्य = अतिथिलोकस्य, आगन्तुकलोकस्य, अध्वनीनमात्रस्येति वा। 'स्युरावेशिक आगन्तुरतिथिर्ना गृहागते' इत्यमरः। 'अतिथिः कुशपुत्रे स्यात्पुमानागन्तुकेऽपि चे'ति विश्वः। 'अध्वनीनोऽतिथिर्ज्ञेयः' इति स्मृतिः। मनुरपि—

'एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः।

अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते॥'' इति।

[अतिथि = 'बटाऊ' बटोही'] । स्वगेहम् = आत्मभवनान्येव। 'स्वगेह'–मित्येकवचनं—'वेदाः प्रमाण'मितिवत्। एतेन–गृहनिर्विशेषमत्र निःसङ्कोचं प्रविश, मा भूत्तेऽणुरपि मनसि सम्भ्रमो, विचारश्चेति सूचितम्।

**भोदु इति**। भवत्विति निपातो वचनस्य यथार्थतां बोधयति। यथा भवती वदति तथैव तत्, तपोवनानि नामाऽतिथिजनस्य स्वगृहाण्येव, नास्त्यत्र सन्देहलेशोऽपीत्यर्थः। 'भवत्वान्तरसंवादे निर्दोषे स्मरणेऽपि चे'ति वैजयन्ती। [ आन्तरसंवादः = स्वचिन्तितोक्तिः ]। अत्र द्विरुक्तिस्तु— नात्र मयाऽणुरपि सन्देहः क्रियते' इति सूचनाय सम्भ्रमे एव।

यद्वा—भवत्विति–अलमर्थे निपातः, 'कृतं त्वलम्। भवत्वस्तु च किं

**वासवदत्ता—( स्वगतम्- )** ण हि रूवं एव्व, वाआ वि खु से महुरा। [ न हि रूपमेव, वागपि खल्वस्या मधुरा ]।

**तपस्वी—** भद्दे ! इमं दाव भद्दमुहस्स भइणिअं कोच्चि राआ ण वरेदि ?।

[ भद्रे ! इमां तावद्भद्रमुखस्य भगिनिकां कश्चिद्राजा न वरयति ? ]।

---

अभिनवराजलक्ष्मीः

तुल्याः'इति हैमात्। अलमलं मान्ये ! अधिकेन श्रमेणेत्यर्थः। विस्रब्धाऽस्मि = विश्वासमुपगतास्मि। आत्मगृहवदेवात्रापि निर्विशङ्काऽस्मीति यावत्। 'विस्रम्भः केलिकलहे विश्वासे प्रणये वधे'इति विश्वः। विश्वस्ताऽस्मी'ति मुद्रितः पाठः। जातविश्वासाऽस्मीति तदर्थः। 'विश्वस्तो जातविश्वासे विश्वस्ता विधवा स्त्रिया'मिति मेदिनी। [ परं—विश्वस्ता = विधवे'तिविरुद्धमतिकृत्त्वात्तथा पाठो नितरामनौचित्यमावहतीति 'विस्रब्धाऽस्मी'त्येव पाठ उचित इत्यत्र कवि-चेतांसि प्रमाणमिति गौडाः ]।

अनेन = भवदुपन्यस्तेन। बहुः मानो यस्मात्तथाविधं वचनं—बहुमान-वचनं, तेन—बहुमानवचनेन = सादराऽऽमन्त्रणेन, सस्नेहभाषणेन च।

अनुगृहीताऽस्मि = अनुकम्पिताऽस्मि। महदेव मे सौभाग्यं यन्मयि तपस्विजनस्याऽपीदृशो वात्सल्यभाव इति भावः।

रूपमेव = नह्यस्या राजदारिकाया रूपमेव। 'मधुर'मिति सुन्दरमिति वा शेषः। मधुरं = हृदयावर्जनप्रभविष्णु। किन्तु—वागपि = वचनमपि। अस्याः = पद्मावत्याः। मधुरा = हृद्या। यद्वा—'रूपमेवे'त्यस्य—'केवलं रूप-मेव नास्याश्चित्तमावर्जयति, किन्तर्हि वागप्यस्या मधुरे'त्यर्थो बोध्यः। एतेन वलोभनं नाम मुखसन्धेरङ्गं दर्शितम्। 'गुणाख्यानं विलोभन'मित्युक्तेः।

**चेटी**— अत्थि राआ पज्जोदो णाम उज्जइणीए। सो दारअस्स कारणादो दूदसम्पादं करेदि।

[ अस्ति राजा प्रद्योतो नामोज्जयिन्याः । स दारकस्य कारणाद्दूतसम्पातं करोति । ]

---

अभिनवराजलक्ष्मीः

'तापसी'त्यस्य 'चेटीं प्रतीत्थमाहे'ति शेषो बोध्यः। भद्रे = चेटिके !। इमां = राजदारिकाम्। भद्रमुखस्य = कुशलिनो महाराजदर्शकस्य। भगिनिकां = कनिष्ठां भगिनीं—पद्मावतीम्। कोऽपि = कश्चिदपि।

न वरयति = भार्यार्थे न गृह्णाति किम्?। एवंविधरूपगुणशीलाया युवावस्थामभिप्राप्तायाः पद्मावत्या विवाहार्थं कोपि राजा सम्प्रति नाभिलाषं प्रकटयति किमिति चेटीं प्रति प्रश्नः। समानदृष्टेस्तपस्विजनस्य चेट्या अपि 'भद्रे' इति सम्बोधनं युक्तमेव। परे तु—'भद्दे' इत्यत्र 'हाद्धी'ति पाठं युक्तं मन्यमानाः—"हा धिक्! इमां भद्रमुखस्य भगिनिकां कोऽपि राजा न वरयति—" इति तपस्याः चिन्तापरमेवेदं वाक्यम्। एतेन च पद्मावत्यां क्षणमात्रदृष्टायामपि तापस्याः सुदृढमात्मीयभावो ध्वनित इत्यपि बोध्यमित्याहुः। एवं चिन्तयन्तीं तापसीं प्रति चेटी प्राह—अत्थीति। केचित्तु-तापस्याः प्रश्नं बुद्ध्वा चेटी समाधत्ते—अत्थीति—इति व्याचक्षते।

'प्रद्योतो नाम उज्जयिन्या राजाऽस्ती'ति सम्बन्धः। नामेति प्रसिद्धौ। उज्जयिनी = विशाला। 'विशालोज्जयिनी समे' इति वैजयन्तीकोशः। स = प्रद्योतः। दारकस्य = स्वपुत्रस्य। कारणात् = हेतोः। स्वपुत्रार्थमित्यर्थः। दूतस्य सम्पातः—दूतसम्पातः, तं—दूतसम्पातं = दूतप्रेषणम्। प्रद्योतस्य उज्जयिनी-

**वासवदत्ता**—( आत्मगतम्– ) भोदु भोदु। एसा अ अत्तणीआ दाणिं संवुत्ता।

[ भवतु भवतु। एषा चाऽऽत्मीयेदानीं संवृत्ता। ]

**तापसी**—अहो खु इअं आइदी इमस्स बहुमाणस्स। 'उभआणि राअउलाणि महत्तराणि'त्ति सुणीअदि।

[ अहो खल्वियमाकृतिरस्य बहुमानस्य। 'उभे राजकुले महत्तरे' इति श्रयते ]।

---

अभिनवराजलक्ष्मीः

राजस्य सूनुना सह अस्याः सम्बन्धस्य वार्ता प्रचलतीत्यर्थः। एतेन अद्यया-वद्वाग्दानं पद्मावत्याः कुत्रापि न जातमिति सूचितम्।

**भवत्विति**। युक्तमेतदित्यर्थः। निर्दुष्टमेतदिति यावत्। [ भवतु भवतु = 'ठीक है–ठीक है' ] 'भवत्वान्तरसंवादे निर्दोषे स्मरणेऽपि चे'ति **केशवः**। सम्भ्रमे द्वित्वम्।

अत्र केचित्तु—'भवत्विति भूधातोर्लोटि रूपम्, स्वभ्रातृनिमित्तो दूत-सम्पातो भवनक्रियायाः कर्त्ता। दूतसम्पातो भवत्वित्यर्थः। इष्टत्वादादरेण द्विरुक्तिरिति व्याचक्षते। परेत्वेवं व्याख्यानं नाऽऽद्रियन्ते। अत्र युक्ताऽयु-क्तत्वे सहृदयकविहृदयहृदयसंवेद्ये एवेति वयमत्र विरमामः।

आत्मीया = स्वजनकोटिनिविष्टा। इदानीं = सम्प्रति। चेटीमुखादस्या वार्त्तायाः श्रवणादारभ्य। संवृत्ता = जाता। प्रद्योतस्योज्जयिनीराजस्य चण्ड-महासेनाऽपरनामधेयस्य हि पुत्री वासवदत्ता, पुत्रौ च तस्य पालक-गोपालक-नामानौ। एवञ्च स्वभ्रातुः पालकस्य, गोपालकस्य वा विवाहार्थं पद्मावत्या

**पद्मावती**—अय्य ! (किं[1]) दिट्ठो मुणिजणो अत्ताणं अणुग्गहीदुं। अभिप्पेदप्पदाणेण तवस्सिजणो उवणिमन्तीअदु दाव 'को किं एत्थ इच्छदि'त्ति ?।

[ आर्य ! (किं[1]) दृष्टो मुनिजन आत्मानमनुग्रहीतुम्। अभिप्रेतप्रदानेन तपस्विजन उपनिमन्त्र्यतां तावत्—'कः किमत्रेच्छती'ति ]।

अभिनवराजलक्ष्मीः

वरणस्य वार्तां चेटीमुखादाकर्ण्य वासवदत्तायाः पद्मावत्यां भाविस्वभ्रातृजायात्वप्रत्ययेनात्मीयभावोन्मेषो युक्त एवेति तत्त्वविदः।

इयं = पुरतो दृश्यमाना, प्रत्यक्षमनुभूयमाना च। आकृतिः = पद्मावत्या रूप-गुण-शील-ललितमङ्गसंस्थानम्। अस्य = उज्जयिनीराजप्रद्योतपुत्रवधूत्वप्रातिरूपस्य। बहुमानस्य = अतिमहतः संमानस्य। अर्हा = योग्या। 'खलु' इति निश्चये। अनितरसाधारणसौन्दर्यगुणगणालङ्कृताया अस्याः पद्मावत्याः प्रद्योतेन स्वपुत्रार्थे वरणमुचितमेवेत्याशयः। उभे राजकुले = उज्जयिनीमहाराजकुलं, मगधराजकुलश्चेत्युभे अपि राजकुले। महत्तरे = श्रेष्ठतया लोके प्रसिद्धिं गते ; प्रशस्ततरे इति यावत्। इति = इत्थम्। श्रूयते = कर्णाकर्णिकयाऽऽकर्ण्यते। एवञ्च शोभनोऽयं सम्बन्धः, शीघ्रमेव स्वीकरणीय इति ध्वनितम्।

**आर्येति**। मया मुनिजनदर्शनं कृतमित्यर्थः। 'किं' शब्दघटितपाठे तु—

आर्य = तात कञ्चुकिन्! वृद्धत्वादार्येति सम्बोधनम्। आत्मानमनुग्रहीतुं = भवता स्वात्मसन्तोषाय। आत्मानं पवित्रीकर्तुमिति यावत्। मुनिजनः = तपस्विलोकः। किं दृष्टः = किं त्वया विलोकितः, पूजितश्च। 'तपस्विजनदर्शनव्यापारस्तेऽवसितो न वा?'। अथ अवसितस्तर्हि मदुक्तं—( तपस्विजनानां प्रतिग्रहार्थमाह्वानं )—कुरु' इति वाक्यार्थः।

१ **गौडास्तु**—किमित्यधिकं प्रमादात् पतितं। यद्वा 'आर्य कञ्चुकिन्' इत्येवं पाठः स्यात्। तदेवं—मया मुनिदर्शनेनात्मा पवित्रतां नीतः। इदानीं मुनीनाहूय, तेभ्यो धनानि दित्सामीत्यर्थ इति मन्यन्ते। युक्ततरश्चायमेवार्थः।

**काञ्चुकीयः**—यदभिप्रेतं भवत्या [:]।

अभिनवराजलक्ष्मीः

[ तापसस्त्रीजनसम्भाषणप्रसक्तां पद्मावतीमालोक्य लब्धावकाशतया तपस्विजनदर्शनादिना स्वात्मानं सम्भावयन्तं कञ्चुकिनं प्रति पद्मावती प्रश्नपूर्वकं कार्यान्तरे योजयितुं स्वाशयमाविष्करोति—**आर्येति**। यथा मया तापसपत्नीनां दर्शनेनात्मा पवित्रतां नीतस्तथा भवताऽपि किं मुनिजनदर्शनं विहितमिति प्रश्नवाक्यमेतत्। यदि भवता मुनिदर्शनादिकमावश्यकं स्वकृत्यं यथावदनुष्ठितं, तर्हि स्वस्वाभिलषितग्रहणाय तपस्विलोकं मद्वाचा प्रार्थयस्व — 'कस्य किमभिप्रेतं ? 'मया कस्मै किं दीयता'मिति-मुनिजनदर्शनप्रसक्तं कञ्चुकिनमाज्ञापयन्ती पद्मावती-प्रवक्ति—**अभिप्रेतेति** ]। तावत् = प्रथमम्। अभिप्रेतप्रदानेन = 'यस्य यदभीष्टं तद्दीयते महाराजदर्शकभगिन्या पद्मावत्ये'-त्यभीष्टप्रदानघोषणापुरस्सरम्। उपनिमन्त्र्यताम् = सत्कारपूर्वकमाहूयताम्। स्वस्वाभीष्टवस्तुप्रतिग्रहार्थमाहूयतामिति यावत्। कः किमत्रेच्छतीति = 'कः किल तापसोऽत्राश्रमे किमभीष्टं वस्तु ग्रहीतुमिच्छति' इत्येवमुपनिमन्त्र्यतामिति पूर्वेण सम्बन्धः। [ सर्वोऽपि आश्रमवासी तापसलोकः—अभीष्टवस्तुदानस्वीकारपूर्वकं सादरं मद्वाचा प्रष्टव्यः—'किं वस्तु कस्मै देय'मिति तु तत्त्वम्' ]।

तपस्विलोकायाऽभीष्टं दातुमुत्सुकाया राजपुत्र्या आज्ञां कञ्चुकी शिरसा

१ अत्र—'अप्य किमिति'—प्रतीके "—आत्मानं = मां पद्मावती-मनुग्रहीतुं = मदीयवस्तुस्वीकारेण मां कृतार्थयितुं—**मुनिजनो दृष्टः किं ?** = त्वया कश्चन तपस्वी उत्सुको दृष्टःकिमिति—कञ्चुकिनं प्रति पद्मावत्याः प्रश्नः। स्वयमर्थितया मां सम्भावयितुमुत्सुकः कश्चन तापसोऽत्राश्रमे भवताऽवलोकितः किमिति गूढ आशयः। इदानीमभीष्टप्रदानप्रतिज्ञया तपस्विजनाह्वानमादिशति—**अभिप्रेतेति**।—" इत्येवं व्याख्यानन्तु महापण्डितानामेव शोभते। मुनिदर्शनादिकार्यान्तरव्यासक्तं कञ्चुकिनमावश्यके मुनिजनाह्वानरूपे कृत्ये प्रेरयितुं प्रवृत्तेऽस्मिन्पद्मावतीवाक्ये तादृशार्थगन्धस्याप्यभावेन तथा व्याख्यानस्य नितरामनुचितत्वात्।

परे तु किमिति पाठ एव नास्तीति न कश्चनाऽत्र दोष इत्याहुः।

भो भो आश्रमवासिनस्तपस्विनः ! शृण्वन्तु !! शृण्वन्तु भवन्तः !!! इहात्रभवती मगधराजपुत्री अनेन विस्रम्भेणोत्पादितविस्रम्भा धर्मार्थमर्थेनोपनिमन्त्रयते ।

**कस्यार्थः कलसेन, को मृगयते वासो, यथानिश्चितं दीक्षां पारितवान्किमिच्छति पुनर्देयं गुरोर्यद्भवेत् ? ।**

---

अभिनवराजलक्ष्मीः

वहन्नाह—यदभीति । भवत्याः = राजपुत्र्याः । यदभिप्रेतं = यदभीष्टम् । तद्यथावदनुतिष्ठामी'ति शेषः । तपस्विलोकोपनिमन्त्रणं यदि भवत्यै रोचते तर्हि तथाऽनुतिष्ठामीति भावः । 'भवत्ये'तिपाठे तु भवत्या = त्वया यदभिप्रेतं तद्युक्तमित्यर्थः ।

इत्थं राजदारिकाया आज्ञामादाय किञ्चित्पदान्तरमपक्रम्याश्रमाभिमुखीभूत्वा काञ्चुकीय इत्थमुद्घोषयति—भो भो इति । शृण्वन्तु शृण्वन्त्विति । 'क्रियासमभिहारे चे'ति द्वित्वम् । पौनःपुन्यं भृशार्थश्च क्रियासमभिहारः । एवञ्च सावधानाः सन्तो भवन्तो भृशं शृण्वन्त्वित्यर्थः ।

इह = अस्मिन्नाश्रमपदे । अत्रभवती = माननीया । मगधराजपुत्री = मगधाधिराजस्य दर्शकस्य भगिनी । अनेन = भवद्भिरुपदर्शितेन । विस्रम्भेण = प्रणयेन, विश्वासेन च । जातविस्रम्भा = प्ररूढविश्वासा । भवदुपदर्शितवात्सल्येन जातधार्ष्ट्येति यावत् । 'विस्रम्भः केलिकलहे विश्वासे प्रणयेऽपि चे'ति विश्वः । 'विश्रम्भ'शब्दस्तालव्यादिरपि । 'धर्माय इति धर्मार्थम् = आत्मनो धर्मस्य सङ्ग्रहार्थम् । आत्मनो धर्मवृद्धिमुद्दिश्येति यावत् । अर्थेन = धनेन करणभूतेन । धनग्रहणायेति यावत् । उपनिमन्त्रयते = ( धनं प्रतिग्रहीतुं— ) सादरं प्रार्थयते । 'युष्मा'निति शेषः । युष्मभ्यं धनं दातुमिच्छतीत्यर्थः ।

उपनिमन्त्रणप्रकारमेवाह—कस्यार्थ इति । कस्य = कस्य तापसस्य ।

**आत्मानुग्रहमिच्छतीह नृपजा धर्माभिरामप्रिया,**
**यद्यस्यास्ति समीप्सितं वदतु तत्कस्याद्य किं दीयताम्[१]॥**

अभिनवराजलक्ष्मीः

कलसेन = घटेन । अर्थः = प्रयोजनम् ? । 'अस्ती'ति शेषः । कस्य खलु तापसस्य, ब्रह्मचारिणो वा निकटे ताम्रकलसो नास्तीति यावत् । 'तालव्या अपि दन्त्याश्च शम्बशूकरपांशवः । कलशः शम्बलञ्चैव जिह्वायां रशना तथे'ति रन्तिदेवात्तालव्यान्तोऽपि कलशशब्दोऽस्तीत्यवधेयम् । कः = कः खलु तापसः । वासः = वस्त्राणि । जात्यभिप्रायेणैकवचनम् । मृगयते = अन्विष्यति ? । अभिलषतीत्यर्थः । कस्याश्रमवासिनो निकटे वस्त्राणि न सन्तीति यावत् ।

पुनः = किञ्च । दीक्षां = वेदवेदाङ्गविद्यादिव्रतं । पारितवान् = समापितवान् –ब्रह्मचार्यादिः । किम् = किं नाम ? कियत्परिमितं धनमिति यावत् । इच्छति = गुरवे दातुमभिवाञ्छति । यत्–निश्चयमनतिक्रम्य–यथानिश्चयं = पूर्वमेव दातुं प्रतिज्ञातं, गुरोर्देयं भवेत् = गुरवे देयं भवेत् ? । यद्विद्याप्रारम्भकाल एव गुरवे गुरुदक्षिणात्वेन दातुं प्रतिज्ञातं तत्कियन्मानं धनं ब्रह्मचार्यादिरिच्छति ? । 'कस्य नाम स्नातकस्य कियन्मानं धनं गुरवे गुरुदक्षिणात्वेन देयमस्ती'ति प्रश्नस्याशयः । [ 'यथानिश्चय'मित्यस्य 'दीक्षां पारितवा' नित्यनेन सम्बन्धं कृत्वा —'इदमेवं कर्त्तव्य'मिति निश्चयाऽनतिक्रमेण दीक्षाम्—अध्ययनव्रतं पारितवान् = उत्तीर्णो जनः–किमिच्छति–''इत्येवं व्याख्यानन्तु काव्यतत्त्वानऽभिज्ञानामेव, 'यथानिश्चित'मित्यस्य देये एव सम्बन्धस्य युक्तत्वात्, दीक्षायां 'यथानिश्चित'मित्यस्य सम्बन्धे फलाभावाच्चेति काव्यतत्त्वविदो वदन्ति ।

१ 'यद्यद्यस्ये'ति पाठान्तरम् ।

**यौगन्धरायणः—( आत्मगतम्- ) हन्त ! दृष्ट उपायः ।**
**( प्रकाशम्- ) भोः ! अहमर्थी ।**

---

अभिनवराजलक्ष्मीः

इह = अत्राश्रमे । 'समुपागते'ति शेषः । प्रतिग्रहस्वीकारविषये इति वाऽर्थः । धर्मेणाभिरामाः, यद्वा—धर्मः—अभिरामः—प्रियो येषान्ते—धर्माभिरामाः = तपस्विनः [ यद्वा धर्मेऽभिरमन्ते इति धर्माभिरामाः । धर्माभिरामाः प्रिया यस्याः सा—धर्माभिरामप्रिया=तपस्विजनवल्लभा । केचित्तु—धर्मेऽभिरामः—रतिर्येषान्ते, धर्माभिरामास्तेषां प्रिया=प्रीतिविधायिनीत्येवं व्याचक्षते ] । नृपाज्जाता नृपजा = राजपुत्री पद्मावती । आत्मनः—अनुग्रहम्—आत्मानुग्रहं = स्वस्य कृतार्थताम् । इच्छति = अभिवाञ्छति । तपस्विभ्यो यथाभिप्रेतं वस्तु दत्त्वा स्वस्य कृतार्थतां विधातुमिच्छति,—अतः—यस्य = यस्याश्रमनिवासिनः । अद्य = इदानीम् । यत्=यद्वस्तु, समीप्सितं = समभीप्सितम्, अभिलषितम् । अस्ति = वर्त्तते । तद्वदतु = तदिह कथयतु । कस्य=कस्मै । किं दीयताम्=किं नु खलु दीयतामिति । इत्येवमियं घोषणा पद्मावतीवचनात् कञ्चुकिनोपन्यस्ता ।

एवञ्च 'यस्य यदभीष्टं भवेत्तद्वदतु नाम, राजपुत्री तस्मै तदेव वस्तु दत्त्वा स्वात्मनोऽनुग्रहं विधातुमिच्छति'—इति रीत्या काञ्चुकीयेन सादरं तपस्विनां स्वेष्टप्रतिग्रहार्थमाह्वानमुपन्यस्तमिति ध्येयम् । शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

कन्यान्तःपुरपरिचारकस्य काञ्चुकीयस्य वचनेन—'पद्मावती तपस्विभ्योऽभिलषितं दातुं प्रतिजानीते'इति ज्ञात्वा 'वासवदत्तानिक्षेपावसरोऽय'-मिति निश्चिन्वानो यौगन्धरायणः स्वगतं सहर्षमाह—हन्तेति । हर्षद्योत-

**पद्मावती**—दिट्ठिआ सहलं मे तवोवणाभिगमणम् ।

[ दिष्ट्या सफलं मे तपोवनाभिगमनम् ] ।

**तापसी**—संतुट्ठतपस्सिजणं इदं अस्समपदं, आअन्तुएण इमिणा होदव्वं ।

[ सन्तुष्टतपस्विजनमिदमाश्रमपदम् । आगन्तुकेनानेन भवितव्यम् ! ] ।

**काञ्चुकीयः**—भोः ! किं क्रियताम् ।

---

अभिनवराजलक्ष्मीः

कोऽयं निपातः । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयो'रित्यमरः । दृष्टः= ज्ञातः, उपलब्ध इति यावत् । उपायः = वासवदत्तानिक्षेपोपायः ।' प्रकाशं = प्रकटम् । 'इत्थमाहे'ति शेषः । 'सर्वश्राव्यं प्रकाशं स्या'दिति भरतः ।

**भो इति** । कञ्चुकिसम्बोधनमेतत् । अहमर्थी = अहमस्मि याचकः । पद्मावत्याः सकाशादहं किञ्चिदिच्छामि, तद्दातु राजपुत्रीति भावः । 'अर्थी पुमान् याचके स्यात्सेवके च विवादिनी'ति मेदिनी ।

अर्थिनो लाभेन प्रसन्ना पद्मावती स्वगतं प्रकाशं वाऽऽह—**दिष्ट्येति** । दिष्ट्येत्यव्ययं हर्षे । 'सत्पात्रस्य याचकस्य लाभेने'ति शेषः । सफलं=कृतार्थम् । मे=मम पद्मावत्याः । तपोवनेऽभिगमनम्—तपोवनाऽभिगमनम्=आश्रमागमनम् । हन्त ! सफलो मे मनोरथ इति यावत् । 'दिष्ट्या समुपजोषश्चेत्यानन्दे' इत्यमरः । 'दिष्ट्येति संमदे'इति च हैमः । [ संमदो हर्षः ] ।

सन्तुष्टतपस्विलोकेऽस्मिन्नाश्रमे कोऽप्यर्थी नास्ति, कुतोऽयं जन आश्रमनाम कलङ्कयितुमुपस्थित इत्यमर्षान्विता तापसी तर्कयति—**सन्तुष्टेति** । सन्तुष्टाः तपस्विजना यत्र तत्—सन्तुष्टतपस्विजनम्=निरभिलाषतापसजनपरिपूर्णम् ।

**यौगन्धरायणः**— इयं मे स्वसा, प्रोषितभर्तृकामिमामिच्छाम्यत्र-
भवत्या कञ्चित्कालं परिपाल्यमानाम्।

अभिनवराजलक्ष्मीः

आश्रम एव पदं=स्थानम्। आश्रमस्य पदमिति वा—आश्रमपदम्=आश्रम-स्थानम्। नात्राऽस्माकमाश्रमे कोऽपि तापसः कस्मादपि किमप्यभिवाञ्छति। सन्तुष्टान्तरा हि आश्रमपदनिवासिन इति तदाशयः। तर्हि कथमयं याचतेऽत आह—**अनेनेति**। अनेन=याचकेन। आगन्तुकेन=पान्थेन, अतिथिना, भवितव्यं=नूनं भवितव्यमिति तापस्या वितर्कः। 'स्युरावेशिक आगन्तुरतिथिर्ना गृहागते' इत्यमरः। हा हन्त! एकदा तु ईदृशः समय आसीद्यदाऽऽश्रमे एकस्यार्थिनो लाभेन चक्रवर्त्तिनोऽपि कृतार्थमात्मानं मन्वन्ते स्म, आश्रमनिवासिनश्च साभिमानम्—'आगन्तुकेनानेन भवितव्य'-मिति दृढं वक्तुं शक्नुवन्ति स्म, इदानीन्तु कालमाहात्म्येन विदुषामपि याचकानां गृहेगृहे तिरस्कारं प्रत्यहं पश्याम इति दैवदुर्विलसितमेवेत्यहो! दौर्भाग्यं भारतस्य।

भोः=भोस्तपस्विन्! किङ्क्रियतां=तव कोऽनुयोगोऽनुष्ठीयताम्?। 'आज्ञापय भगवन्! किन्ते प्रियमुपाहराम' इति प्रश्नाशयः। इत्थं पृष्टो यौगन्धरायणो वासवदत्तां दर्शयन्नाह—**इयमिति**। इयं=मत्पार्श्ववर्त्तिनी। मे=मम। 'मे' इति निपातोऽयं ममेत्यर्थे। स्वसा=भगिनी। कनिष्ठा भगिनीत्यर्थतो लब्धम्। प्रोषितः—प्रवासं गतः—भर्त्ता—पतिर्यस्याः सा—प्रोषितभर्तृका, ताम्—असन्निहितपतिकाम्। केनापि प्रयोजनेन स्थानान्तरं गतो भर्त्ता यस्याः सा तामिति यावत्। अत्र भवत्या=माननीयया पद्मावत्या। कञ्चित्कालं=भर्तृ-प्राप्तिं यावत् स्वल्पं कालम्। परिपाल्यमानाम्=रक्ष्यमाणाम्। इच्छामि=कामये। अत्र-भवत्याः पद्मावत्या निकटे एनां स्थापयितुमिच्छामीति भावः।

कुतः,—

**कार्यं नैवाऽर्थैर्नाऽपि भोगैर्न वस्त्रै-**
**र्नाहं काषायं वृत्तिहेतोः प्रपन्नः ।**
**धीरा कन्येयं दृष्टधर्मप्रचारा**
**शक्ता चारित्रं रक्षितुं मे भगिन्याः ॥ ९ ॥**

अभिनवराजलक्ष्मीः

ननु कुतो भवानिमां कन्यामेवात्र भवत्याः सन्निधौ स्थापयितुमिच्छति ? नान्यद्धनादिकं कामयते ? किञ्च किन्तेऽत्रास्याः स्थापनेऽभिमतमित्यत आह—कुत इति । यत इत्यर्थः । केनापि हेतुना इमामत्र स्थापयामि, इतोऽधिकं किञ्चिदपि धनादिकं नेच्छामीत्याशयः । स्वाभिप्रायमेव विशदयति—कार्यमिति । मम—अर्थैः = धनैः, कार्यं = प्रयोजनं, नैव = नैवास्ति । नाहं धनमिच्छामीति यावत् । नापि = नैव । भोगैः=भोग्यैः । पदार्थैर्दासदासीगजतुरगरथगृहादिभिः, कलत्रादिभिर्वा । 'कार्यमस्ती'ति शेषः । न = न पुनः । वस्त्रैः = वसनैः । 'ममकार्यमस्ती'ति शेषः । ननु कुत एतदित्याशङ्क्याह—नाहमिति । अहं—वृत्तेर्हेतुर्वृत्तिहेतुः, तस्मात्—वृत्तिहेतोः——स्वजीविकोपार्जनार्थम् । कषायेण रक्तं वस्त्रं—काषायम् । उपचारात्परिव्रजनमपि काषायमित्युच्यते । काषायं—प्रव्रजनं, काषायवस्त्राणि वा । जात्यभिप्रायेणैकवचनम् । न प्रपन्नः = नैव स्वीकृतवानस्मि । एवञ्च वैराग्येणैव ( कार्यान्तरार्थं वा ) सर्वं विहाय प्रव्रजितस्य मे किं भोगैर्धनेन च प्रयोजनमित्याशयः । अहं यौगन्धरायणः स्ववृत्तिहेतोर्न संन्यासिवेषं प्रपन्नः, किन्तु स्वामिनो मे उदयनस्य साम्राज्यलाभादिकं कार्यमुद्दिश्यैव-प्रव्रज्यामिमां प्रपन्नोऽस्मी'ति तु गूढ आशयोऽत्र बोध्यः ।

ननु कथमियं पद्मावती भवतो भगिनीं पालयितुं शक्तेत्याशङ्क्याह—धीरा इति । दृष्टो = ज्ञातः, धर्मस्य प्रचारो = रहस्यं, सूक्ष्मा प्रवृत्तिर्वा

**वासवदत्ता —( आत्मगतम्— ) हुँ ! इह मं णिक्खिविदु-कामो अय्ययोगन्धरायणो । होदु । अविआरिअ कमं ण करिस्सदि ।**

[ हुँम् ! इह मां निक्षेप्तुकाम आर्ययौगन्धरायणः । भवतु । अविचार्य क्रमं ( कर्म वा ) न करिष्यति ] ।

---

अभिनवराजलक्ष्मीः

यया सा—दृष्टधर्मप्रचारा = विदितधर्मतत्त्वा । '[ दृष्टो धर्मप्रचारः = धर्माचरणं यस्याः सेति विग्रहे—विज्ञातधर्माचारेत्यर्थः ] । धीरा—गभीराशया, व्यवहारकुशला, विदुषी च । इयं कन्या = इयं राजकन्या पद्मावती । मे = मम, भगिन्याः = कनीयस्याः स्वसुरावन्तिकायाः । चारित्रं = शीलम् । 'निष्ठा च शीलं चारित्रं चरित्रं चरितं तथे'ति रत्नकोशः । रक्षितुं = परिपालयितुं, यथावत् पर्यपस्थापयितुम् । शक्ता = समर्था । 'अतो हेतोः—प्रोषितभर्तृकामिमामिच्छाम्यत्र भवत्या कञ्चित्कालं परिपाल्यमानाम्—' इत्यनेन पूर्वेण वाक्येन सह सम्बन्धोऽस्याऽनुसन्धेयः । 'कुत'इत्यनेन कृतायाः शङ्कायाः—'कार्य'मित्यादिना श्लोकेन च समाधानमुपन्यस्तमिति ध्येयम् । [ काव्यलिङ्गमलङ्कारः । वैश्वदेवी वृत्तम् । 'पञ्चाश्वैश्छिन्ना वैश्वदेवी ममौ यौ' इति वृत्तरत्नाकरोक्तेः ] ॥ ९ ॥

हुँमिति वितर्के । 'हुँ वितर्के परिप्रश्ने'इत्यमरः । 'हम्'इति तु मुद्रितः पाठः । इह = पद्मावतीसन्निधौ, मगधराजकुले वा । मां = वासवदत्तामवन्तिकावेषधारिणीम् । निक्षेप्तुं = निक्षेपत्वेन स्थापयितुं कामः—अभिलाषो यस्यासौ—निक्षेप्तुकामः = न्यासत्वेन स्थापयितुकामः । 'तुङ्काममनसोरपी'ति मलोपः । आर्यश्चासौ यौगन्धरायणश्च—आर्ययौगन्धरायणः = मान्यो महामन्त्री यौगन्धरायणः । इति सम्भावयामीत्यर्थः । भवतु = यथा स इच्छति, तथाऽनुतिष्ठतु

**काञ्चुकीयः**—भवति ! महती खल्वस्य व्यपाश्रयणा । कथं प्रतिजानीमः ? । कुतः,—

**सुखमर्थो भवेद्दातुं, सुखं प्राणाः, सुखं तपः ।**
**सुखमन्यद्भवेत् सर्वं, दुःखं न्यासस्य रक्षणम् ॥१०॥**

अभिनवराजलक्ष्मीः

नाम । नात्र मया विचारणा कार्येति भावः । 'भवत्वान्तरसंवादे निर्दोपे स्मरणेपि चे'ति वैजयन्ती । अविचार्य=यथावत्सर्वतोभावेन विचारमकृत्वैव । क्रमं=पादविक्षेपं, कार्यस्य प्रारम्भं, कार्ये प्रवृत्तिमिति यावत् । 'कम्म'मितिपाठे तु कर्म=कार्यमित्यर्थः । न करिष्यति=नैव विधास्यति । अतस्तत्र विचारणा मया न क्रियते । एवञ्च यथाऽयमभिवाञ्छति, तथा करोतु नामेति भवत्वित्यनेन सूचितम् । 'हमित्यसम्मता'विति केषाञ्चिद्व्याख्यानन्तु नितरां हेयमेव ।

अर्थिनो यौगन्धरायणस्य वचनं श्रुत्वा काञ्चुकीयः पद्मावतीमाह—**भवतीति** । श्रीमति ! । अस्य=तापसस्य । महती=नितरां गुर्वी । व्यपाश्रयणा=आश्रयविषयिणी याच्ञा, अभिलाषः, प्रार्थनेति यावत् । [ 'सवाल' 'मांग' इतिभाषा ] ।

कथं प्रतिजानीमः=स्वीकुर्मः । यदयमभिलषति तद्दातुं कथं स्वीकुर्म इत्याशयः ।

ननु कथं न तत्स्वीकार्यमत आह—**कुत इति** । यतः । अतो हेतोरित्यर्थः । अस्याग्रिमेण श्लोकेन सहान्वयः ।

हेतुमेव विशदयति—**सुखमिति** । अर्थः=धनम् । सुखं=सुखं यथा स्यात्तथा । अनायासेनेति यावत् । दातुम्=अर्थिसात्कर्त्तुम् । भवेत्=सम्भवेत् । 'शक्य' इति शेषः । किञ्च—सुखं=सुखपूर्वकम्, अनायासेनैवेति यावत् । प्राणाः=असवः, जीवितं, शरीरमिति यावत् । 'दातुं

**पद्मावती**— अय्य पढमं उग्घोसिअ 'को किं इच्छदि'त्ति अजुत्तं दाणिं विआरिदुं । जं एसो भणादि तं अणुचिठ्ठदु अय्यो ।
[ आर्य ! प्रथममुद्घोष्य 'कः किमिच्छती'ति, अयुक्तमिदानीं विचारयितुम् । यदेष भणति तदनुतिष्ठत्वार्यः ]

**काञ्चुकीयः**—अनुरूपमेतद्भवत्याऽभिहितम् ।

**चेटी**—चिरं जीवदु भट्टिदारिआ एवंसच्चवादिणी ।

अभिनवराजलक्ष्मीः

शक्या भवेयु'रिति शेषः । भवेदित्यस्य वचनविपरिणामेन वाऽन्वयो बोध्यः । तपः=तपश्चर्या सुखं कर्त्तुं शक्या । तपसः फलमपि, 'सुखं दातुं शक्यं भवे'दिति वा सम्बन्धः । अन्यत्=इतो व्यतिरिक्तमपि प्रियतरं वस्तु सर्वमपि सुखं दातुं शक्यं भवेदपीति सम्बन्धः । परन्तु—न्यासस्य = निक्षेपस्य । [ 'धरोहर' 'थाती' ] । रक्षणं = यथावत्पालनम् । दुःखं=दुःखजनकमेव । अतो न शक्यन्तत्कर्त्तु मनायासेनेति तत्त्वम् । अर्थिभ्यो धनादिकं दातुमनायासेनैव शक्यते, परं तदीयन्यासरक्षणन्तु महदेव दुष्करमिति नैतस्य तापसस्य वचः स्वीकार्यमिति भावः । धनप्राणतपःप्रभृतिदानापेक्षयाऽपि दुष्करं खलु न्यासस्य रक्षणमिति हृदयम् । १०

**प्रथमम्**=आदौ । पूर्वमविचार्येति यावत् । उद्घोष्य=उच्चैर्घोषणां कृत्वा । उद्घोषणाप्रकारमेव निर्दिशति–**क इति** । इति=इत्थम् । 'उद्घोष्येति' सम्बन्धः । **इदानीम्**=उद्घोषणानन्तरं समुपस्थितेऽर्थिनि । विचारयितुम्='इदं देयमनायासेन', 'इदं न देय'मिति चिन्तनम् । अयुक्तम्= अनुचितमेव ।

तत्किं कार्यमत आह–**यदेष इति** । यत्=यत्कार्यम् । एषः=अर्थी ! **विचारयितुम्**=इदमस्माभिरनुष्ठातुं शक्यते' इदं न कर्त्तुं शक्यते' इत्यादि विभावयितुम् । **अनुतिष्ठतु**=अङ्गीकरोतु । अस्य मनोरथः पूरणीय एवेति यावत् ।

**एवंसत्यवादिनी**=यदस्माभिः प्रतिज्ञातन्तदवश्यं निर्वहणीयमेव, कामं

( चिरं जीवदु भर्तृदारिकैवं सत्यवादिनी ) ।

**तापसी**—चिरं जीवदु भद्दे ! ( चिरं जीवतु भद्रे ! ) ।

---

अभिनवराजलक्ष्मीः

सुकरं वा भवतु, दुष्करं वा भवत्वि'त्येवं सत्यवादिनी । भद्रे = कल्याणिनि । तापसः यौगन्धरायण इति यावत् । भणति = कथयति, साधयितुं प्रार्थयते इति यावत् । तत् = तत्कार्यं, न्यासपरिरक्षणस्वीकारात्मकम् । अनुतिष्ठतु = विदधातु । न्यासरक्षणं स्वीकरोतु भवान् । नायं विचारावसर इति भावः ।

रूपस्य योग्यम्–अनुरूपम् = स्ववंशादिमर्यादोचितं, राजकुलललनोचितं, युक्ततममिति यावत् । एतत् = न्यासपरिरक्षणमङ्गीकार्यमिति । अभिहितम् = उक्तम् । तथैवानुतिष्ठामीति भावः ।

पद्मावत्या न्यासपरिरक्षणस्वीकृतिर्दानवचनमाकर्ण्य तदौदार्यं प्रकटयन्ती चेटी प्राह—चिरमिति । भर्तृदारिका = राजपुत्री । 'राजा भट्टारको देवस्तत्सुता भर्तृदारिके'त्यमरः । एवम् = इत्थम् । सत्यं वदति तच्छीला = सत्यवादिनी = सत्यभाषिणी । स्वप्रतिज्ञातस्य दुष्करस्यापि कार्यस्य निर्वहणे नितरां बद्धभावेति यावत् ।

चेटीप्रयुक्तां सत्यवादिन्याः पद्मवत्या आशिषमनुमोदमाना तापसी प्राह–चिरमिति । भद्रे–सुभगे ! कल्याणशीले ! चिरं जीवतु । 'भवती'– इति शेषः । तापसीचेट्योराशिषमनुमोदमानः काञ्चुकीयोऽप्याशिषं प्रयुङ्क्ते- भवतीति । तथा । चिरञ्जीवतु इत्यर्थः । यद्वा—काञ्चुकीये—'अनुरूपमेत- द्भवत्याऽभिहित'मित्येवं पद्मावतीप्रशंसां प्रयुज्याऽग्रे कथयितुं प्रवृत्ते एव, मध्ये चेटीतापसीभ्यामाशिषः प्रयुक्ताः, ततः कञ्चुकी लब्धावसरः स्वं वक्तव्यं पूर-

**काञ्चुकीयः**—भवति ! तथा । (उपगम्य–) भोः ? अभ्युपगतमत्र-भवतो भगिन्याः परिपालनमत्र-भवत्या ।

**यौगन्धरायणः**—अनुगृहीतोऽस्मि तत्रभवत्या । वत्से ! उपसर्पाऽत्रभवतीम् ।

अभिनवराजलक्ष्मीः

यति—भवतीति । एवञ्च 'अनुरूपमेतद्भवत्याऽभिहितम्, ( अतः— ) तथा'—[ तथैव अनुतिष्ठामि' ] इत्येकमेवं वाक्यं खण्डशः कञ्चुकिना प्रयुक्तमित्यवधेयम् । पुनरवशिष्टस्य वाक्यखण्डस्य प्रवर्त्तनाय च 'भवती'ति पुनः सम्बोधनमिति च तत्त्वम् ।

अन्ये तु—'अनुरूपमेतद्भवत्याऽभिहित'मित्युक्त्यैव–'तथाऽनुतिष्ठामी'ति लब्धमेव, अतो—'भवति ! तथे'ति न पूर्ववाक्यस्य शेषः, किन्तु आशीर्वादपरकमेवैतद्वाक्यान्तरम् । 'तथे'त्यस्य च 'चिरञ्जीवतु' इत्यर्थ इत्याहुः । युक्ताऽयुक्तत्वे चात्र सहृदयैरवधार्यं इति गौडाः ।

उपगम्य = यौगन्धरायणसन्निधौ गत्वा । 'इत्थमुवाचे'ति शेषः । अभ्युपगतम् = अङ्गीकृतम् । अत्र भवतः = मान्यस्य भवतः । भगिन्याः = प्रोषितभर्तृकायाः स्वसुरावन्तिकायाः । परिपालनं = रक्षणम् । अत्र भवत्या = माननीयया राजपुत्र्या पद्मावत्या ।

अनुगृहीतः = कृतार्थतां नीतः । सफलो मे मनोरथ इत्याशयः । वत्से = आवन्तिके ! । अत्र भवतीं = राजपुत्रीं माननीयां पद्मावतीम् । उपसर्प = अस्याः समीपमुपगच्छ । राजपुत्री सन्निधौ याहि ।

**वासवदत्ता—( त्मगतम्–)** का गई ? । एसा गच्छामि मंदभाआ । [ का गतिः ? । एषा गच्छामि मन्दभागा[1] ] ।

**पद्मावती**–भोदु[2] भोदु । अत्तणीआ दाणिं संवुत्ता ।

[ भवतु भवतु । आत्मीयेदानीं संवृत्ता ] ।

**तापसी**–जा ईदिसी से अ इदी, इयं वि 'र अदारिअ'त्ति तक्केमि ।

[ यत्-ईदृश्यस्या आकृतिः, इयमपि 'राजदारिके'ति तर्कयामि ] ।

अभिनवराजलक्ष्मीः

'आत्मगत'मित्यस्य वासवदत्ता यौगन्धरायणाद्यश्राव्यमपि प्रेक्षकश्राव्यं यथा स्यात्तथा नाट्येनेत्थमाहेत्यर्थः ।

का गतिः = किं नु विधेयम् ? । क उपायः ? । नास्त्युपाय इत्यर्थः । एषा गच्छामि = इयमहं राजमहिषी भूत्वाऽपि परस्याश्रयं गच्छामि शरणार्थिनी । मन्दः = अशुभः, भागः = भागधेयं–यस्याः सा–मन्दभागा = मन्दभाग्या । मन्दप्रारब्धा, भाग्यरहितेति यावत् । 'भागो भाग्यैकदे ।यो'रिति रुद्रकोशः । भवतु भवतु=अलमलं चिन्तया, खेदेन वा । यद्वा-भवतु भवतु= युक्तं जातम् । [ ठीक है-ठीक है ] । आर्या=भवती वासवदत्ता । आत्मीया= स्वीया । इदानीम् = सम्प्रति । इतः प्रभृति । संवृत्ता = जाता । यत् = यतः ।

१ **मन्दभागेति** । पतिवियुक्ता सती परगृहे आश्रयार्थं गच्छामीत्यहो मे मन्दभाग्यत्वमित्यर्थः । यद्वा—पतिवियुक्ताया मे आलम्बनभूतो यौगन्धरायणोऽपि मामन्यत्र निक्षिप्य गच्छतीत्यहो मे दौर्भाग्यमित्यर्थो बोध्यः ।

२ पद्मावती तस्या उपसर्पन्त्या विषण्णं वदनं दृष्ट्वा तां समाश्वासयति— भोदु इति । अलं विचारेण । आत्मीया = स्वजनकोटिनिविष्टा । एवञ्च मन्निकटे उपसर्पन्त्या भवत्याः को नु खेदावसरः ? । तदलं खेदेन । आर्ये ! त्वं निर्विशङ्कमायाहीत्यर्थः ।

**चेटी**—सुट्ठु अय्या भणादि । अहं वि 'अणुहूदसुह'त्ति पेक्खामि ।

[ सुष्ठु आर्या भणति । अहमपि 'अनुभूतसुखे'ति पश्यामि ] ।

**यौगन्धरायणः**—( **आत्मगतम्**- ) हन्त भोः ! अधमवसितं

---

अभिनवराजलक्ष्मीः

ईदृशी = एतादृशाऽनुपमसौन्दर्यशालिनी, रूपलावण्यलक्षणसम्पन्ना च । अस्याः = आवन्तिकायाः । आकृतिः = शरीरसंस्थानम् । 'अत' इति शेषः । इयमपि = पद्मावतीवत् आवन्तिकाऽपि । राजदारिका = राजपुत्री । इति = इत्थम् । तर्कयामि = विचिन्तयामि । अङ्गसौष्ठवादिलक्षणविशेषैरस्या राजपुत्रीत्वमनुमीयते इत्यर्थः । एवञ्चाऽनयोः समं सख्यं भविष्यतीति सूचितम् ।

सुष्ठु = युक्तियुक्तम् । आर्या = भवती । तापसीवचनानुमोदनमेतत् । अहमपि = अहं चेट्यपि । पश्यापि = तर्कयामि । किन्तर्कयसीत्यत आह—**अनुभूतेति** । अनुभूतं सुखं यया सा–अनुभूतसुखा=उपभुक्तराजोचितभोगा । अस्या वपुःप्रकर्षः सुखोपभोगसम्पदमनुवदतीति यावत् । तन्नूनमियमपि राजपुत्री भवितुमर्हतीति सुष्ठूक्तं भवत्या इति हृदयम् ।

पद्मावतीहस्तस्थापितां वासवदत्तां दृष्ट्वा यौगन्धरायणो विचिन्तयति—हन्तेति । हन्तेति निपातो हर्षातिशये । 'भो' इति आत्मनः सम्बोधनम् ।

भारस्य = मनसि निर्धारितस्य स्वामिनः पद्मावतीपरिणय—साम्राज्यलाभादिरूपकार्यभारस्य । अर्धमवसितम् = अर्द्धो भागः, इदानीं पद्मावतीसन्निधौ वासवदत्ताया निक्षेपान्निष्पन्नः । अपगत इदानीं मे कार्यस्य अर्धो

[१]भारस्य। यथा मन्त्रिभिः सह समर्थितं, तथा परिणमति। ततः प्रतिष्ठिते स्वामिनि तत्र-भवतीमुपनयतो मे इहाऽत्रभवतो मगधराजपुत्री विश्वासस्थानं भविष्यति।

अभिनवराजलक्ष्मीः

भार इत्यर्थः। किञ्चावशिष्टोप्यर्द्धो भारोऽपगतप्राय एवेत्याह—यथेति। मन्त्रिभिः सह=रुमण्वदादिभिर्वत्सराजामात्यैः सह। समर्थितं=मयाविचारितं, यथाऽस्माभिर्मन्त्रितमिति यावत्। तथा = तथैव। परिणमति=दैवात्कार्यं नः तथैव स्वयमेव सिद्धयति। एवञ्चाचिरादेवाभिलषितसिद्धिर्भविष्यतीति सूचितम्।

वासवदत्तायाः पद्मावतीहस्ते निक्षेपस्य प्रयोजनं निर्दिशति—तत इति। पद्मावतीविवाहात्साम्राज्ये लब्धे सति। स्वामिनि = अस्मत्प्रभुवरे च उदयने। प्रतिष्ठिते=राजसिंहासनमधिष्ठिते सति। तत्र भवतीं=मान्यां वासवदत्तामिमाम्। उपनयतः = पुनरपि उदयनसमीपं प्रापयतः। मे = मम। इह = अस्मिन्विषये। वासवदत्ताशीलपरिरक्षणविधाविति यावत्। मगधराजपुत्री = इयं पद्मावती। विश्वासस्थानं = विश्वासयोग्या साक्षिभूता। भविष्यति = सम्पत्स्यते। एवञ्च वासवदत्तोदयनयोः पुनर्मिलने वासवदत्ताशीलशुद्धिविषयके विवादे जायमाने एषा पद्मावती महत्कुलप्रसूतत्वादिना, सम्बन्धविशेषवशाच्च

१ अयम्भावः—स्वामिसाम्राज्यलाभार्थं यत्नो हि भारः। तस्य मुख्यतो भागद्वयम्, एकः पद्मावतीपरिणयसंघटनात्मकः। अपरो तावत्कालं वासवदत्तानिगूहनात्मकः। तत्र वासवदत्तानिक्षेपेण अर्धो भारोऽपगत इव। इत्थं हि मया मन्त्रिभिः सह निर्धारितमासीत्, यत्—वासवदत्तां पद्मावत्या हस्ते एव निक्षिप्य, वासवदत्तामरणख्यापनेन पद्मावतीविवाहः सम्पाद्यः, पश्चात्सहायसम्पत्त्या, सिद्धादेशेन च राज्यारूढे स्वामिनि वासवदत्तामुपनेष्यामः। पद्मावती च तच्छीलरक्षादिविधौ नः साक्षिभूता भविष्यतीति। तत्र न्यासपर्यन्तो भागो मन्त्रस्य यथानिर्णयं सिद्धः। अवशिष्टं स्वल्पं कार्यं साधनीयमिति हन्त! हर्षावसरोऽयमस्माकमित्याशयः।

कुतः—

[1] **पद्मावती नरपतेर्महिषी भवित्री,**
**दृष्टा विपत्तिरथ यैः प्रथमं प्रदिष्टा ।**

अभिनवराजलक्ष्मीः

विश्वसनीया साक्षिभूता भविष्यतीति युक्तोऽस्या हस्ते वासवदत्तानिक्षेपोऽस्माकमिति भावः । एवञ्च—पद्मावतीहस्तेऽस्या निक्षेपादुचिता रक्षा भविष्यतीति पूर्वमेवास्माभिर्निर्धारितं, तदत्र निक्षेपात्साधु निर्वहतीति सूचितम् । [अत्र 'हन्त भो' इत्यनेन 'प्राप्ति'नामकं मुखसन्धेरङ्गं निर्दिष्टम् । 'प्राप्तिः सुखागमः' इति दर्पणोक्तेः ] ।

ननु पद्मावतीपरिणयमात्रादेवोदयनस्य कथं साम्राज्यलाभः स्यात्, एवञ्च व्यर्थ एवायमनर्थमूलो भूयान् व्यवसायो भवतामित्याशङ्क्याह–कुत इति । यत इत्यर्थः । अतो हेतोरिति यावत् । हेतुमेव विशदयति—**पद्मावतीति** ।

[अन्वयः] पद्मावती नरपतेर्महिषी भवित्री । अथ यैः प्रथमं प्रदिष्टा विपत्तिः [ सा अस्माभिः— ] ( अथ ) दृष्टा । इदं तत्प्रत्ययात्कृतम् । सुपरीक्षितानि सिद्धवाक्यानि उत्क्रम्य विधिर्न गच्छति ।

[ अर्थः ] पद्मावती = दर्शकभगिनी पद्मावती । नरपतेः = उदयनस्य ।

---

१ ननु पद्मावत्या वत्सराजेन परिणयो भावीत्यत्रैव कस्ते प्रत्ययः, येनेदृशं महद्कार्यमनुष्ठितं भवताऽत आह–**पद्मावतीति** । **केचित्तु** यैः–पुष्पकभद्रादिभिः, पूर्वम् = 'आदौ कष्टो भविष्यती'त्येवं–या **विपत्तिः** – राज्यापहारादिरूपा विपत्तिः–प्रदिष्टा=आदिष्टाऽऽसीत्, सा विपत्तिः, दृष्टा=अस्माभिर्यथावदनुभूतैव । अथ=विपत्तिनिपातानन्तरं । पद्मावती नरपतेः = उदयनस्य, महिषी= देवी, भवित्री=भाविनी 'इत्यपि तैः प्रदिष्टमस्ती'ति शेषः । तत्प्रत्ययात्= तादृशसिद्धादेशविश्वासात् । प्रथमोपदिष्टविपद्दर्शनरूपप्रत्ययात्पद्मावतीविवाहसिद्धिरूपे द्वितीयादेशे विश्वासात्—अस्माभिरिदं कार्यमित्थमाचरितमित्याशयमाहुः ।

**तत्प्रत्ययात्कृतमिदं, न हि सिद्धवाक्या-**
**न्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि ॥११॥**

अभिनवराजलक्ष्मीः

महिषी = पट्टाभिषिक्ता धर्मपत्नी । 'कृताभिषेका महिषी'त्यमरः । भवित्री = भाविनी । भविष्यतीति यावत् । सुनिश्चितमेतदिति भावः ।

ननु कथमेतदवगम्यते इत्यत आह—दृष्टेति । अथ यैः=पुष्कभद्रादिभिरादेशिकैः । प्रथमं=ब्रहोः कालात्पूर्वमेव । प्रदिष्टा=आदिष्टा, भावित्वेन निर्दिष्टेति यावत् । विपत्तिः=शत्रुकृतराज्यासहारादिरूपा विपत्तिः । सा (अथ=ततः पश्चात् कियता कालेन । दृष्टा = अनुभूता) । यथार्थतया अस्माभिरनुभूता । 'अत्रअस्माभि'रिति शेषो बोध्यः । एवञ्च स्थालीपुलाकन्यायेन सिद्धोक्तादेशस्य सत्यत्वेनावश्यभावित्वेन चास्माकं निश्चयो युक्त एवेति भावः । तदाह—तदिति । तेषु=सिद्धवाक्येषु—प्रत्ययः=विश्वासः-तत्प्रत्ययः, तस्मात्=सिद्धवचनेषु विश्वासाद्धेतोः । यद्वा—तत्प्रत्ययात्=तदादिष्टविपत्तिदर्शनरूपप्रत्ययादित्यर्थः । इदं=वासवदत्ताया दाहस्य ख्यापनं, पद्मावतीसन्निधौ स्थापनञ्चेत्येवमादिकम् । कृतम्=अस्माभिराचरितम् ।

ननु सर्वाणि सिद्धवाक्यानि सत्यान्येव न भवन्तीत्यत आह हीति । =यतः सुपरीक्षितानि=यथावत्परीक्ष्य सत्यतया निश्चितानि । सिद्धवाक्यानि=सिद्धादेशिकवचनानि । उत्क्रम्य=उल्लङ्घ्य । विधिः=दैवम् । 'दैवं दिष्टंभागधेयं भाग्यं स्त्री नियतिर्विधिः' इत्यमरः । न=नैव । गच्छति=प्रसरति । न फलति । एवञ्च प्राथमिकादेशवदपराण्यपि सर्वाण्येव सिद्धवचनानि यथावत्फलिष्यन्त्येवेति–उदयनेन सह पद्मावतीविवाहोऽवश्यम्भावी, किञ्च साम्राज्यलाभोऽपि नियतं भविष्यत्येवेति सुप्रतिष्ठिते राजनि वासवदत्तासमागमो भविष्यतीति सफलोऽस्माकं मनोरथो भविष्यतीति भावः । वसन्ततिलकं वृत्तम् ॥११॥

( ततः प्रविशति ब्रह्मचारी ) ।

**ब्रह्मचारी**—( ऊर्ध्वमवलोक्य— ) स्थितो मध्याह्नः । दृढमस्मि परिश्रान्तः । अथ कस्मिन् प्रदेशे विश्रमयिष्ये[1] ? ।

( परिक्रम्य— )

भवतु । दृष्टम् ,—अभितस्तपोवनेन[2] भवितव्यम् ।

---

अभिनवराजलक्ष्मीः

अथ पद्मावतीपरिणयप्रधानसामग्रीभूतस्य वासवदत्ताया उदयनविषयकस्यानुरागस्य सिद्धये उदयनवृत्तान्तं श्रावयितुं तद्वृत्तान्तकोविदं ब्रह्मचारिणं प्रवेशयति - **तत इति** । ततः = इत्थं वार्त्ताप्रवृत्तेरनन्तरम् । प्रविशति = रङ्गस्थलं प्रविशति । ब्रह्मचारी = वेदाध्ययनव्रती वर्णी । ऊर्ध्वमवलोक्य = गगनदर्शनं नाटयित्वा । 'इत्थमाहे'ति शेषः । तदुक्तिमुपन्यस्यति—**स्थित इति** । स्थितः = सञ्जातः । अह्नो मध्यं—मध्याह्नः । सूर्यो ललाटं तपति, प्रखरश्च आतपः, तेन ज्ञायते यदिदानीं मध्याह्नवेला समुपस्थितेति भावः ।

दृढं=नितान्तं । परिश्रान्तः=मार्गव्रजनायासेन परिश्रान्तोऽस्मि । अत इतोऽधिकं गन्तुं न शक्नोमीत्यपि बोध्यम् । अत एवाह—**अथेति** । मध्याह्नस्य प्रवृत्तत्वादात्मनश्च परिश्रान्तत्वेन विश्रामस्यावश्यकता सूचिता । प्रदेशे = स्थाने । विश्रमयिष्ये = विश्रममाचरिष्यामि । मार्गखेदमपनेष्यामीति यावत् ।

परिक्रम्य=किञ्चित्पदान्तरं गत्वा, इतस्ततोवलोक्य च । भवतु=अलमधिकेन श्रमेण । भवत्वित्यलमर्थे निपातः । दृष्टम् = अवलोकितं विश्रामस्थानम् । किन्तदित्यत आह—**अभित इति** । अभितः = समन्तात् , अभिमुखं वा ।

---

१ विश्रमयिष्ये = विश्रम्य स्वात्मानं जाताश्वासं विधास्ये । विगतक्लमङ्करिष्ये इति यावत् ।

२ अभितः=सर्वतः । अभिमुखे इति वा । 'समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः' इत्यमरः ।

तथाहि—

**विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया,**
**वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः॥**

---

अभिनवराजलक्ष्मीः

तपोवनेन भवितव्यम् = पुरतो दृश्यमानेन प्रदेशेनावश्यमाश्रमेण भवितव्यम्। नूनमयमाश्रम एव पुरतो दृश्यते इति यावत्। अत्रैव विश्रामं करिष्यामीति तु हृदयम्।

ननु कथन्त्वयाऽवगतम्—'अभित आश्रमेण भवितव्य'मिति ?। अत आह—तथाहीति। एतैश्चिह्नैरवगच्छामि नूनमग्रे आश्रमपदमिति। तानि चिह्नान्येव दर्शयति—विश्रब्धमिति।

[अन्वयः] देशागतप्रत्यया अचकिताः हरिणाः विश्रब्धं चरन्ति। दयारक्षिताः सर्वे वृक्षाः पुष्पफलैः समृद्धविटपाः (च) सन्ति। कपिलानि गोकुलधनानि भूयिष्ठम् सन्ति। दिशः—अक्षेत्रवत्यः सन्ति। इदं निःसन्दिग्धं तपोवनम्। हि अयं धूमः बह्वाश्रयः[२]।

[विग्रहः] न चकिताः—अचकिताः। देशेन, देशाद्वा—आगतः प्रत्ययो येषान्ते देशागतप्रत्ययाः। पुष्पाणि च फलानि—पुष्पफलानि तैः। समृद्धा विटपा येषान्ते–समृद्धविटपाः। दयया रक्षिताः—दयारक्षिताः। गवां कुलानि–गोकुलानि, गोकुलान्येव धनानि—गोकुलधनानि प्रशस्तानि। क्षेत्राणि सन्ति यासु ताः–क्षेत्रवत्यः, न क्षेत्रवत्यः—अक्षेत्रवत्यः। सन्दिग्धं-सन्देहः, निर्गतं सन्दिग्धं यस्मात्तत्–निःसन्दिग्धम्। बहव आश्रया यस्यासौ बह्वाश्रयः। 'वह्न्याश्रय' इति पाठे तु—वह्निराश्रयो यस्यासौ—वह्न्याश्रयः।

---

१ देशागतप्रत्ययाः=तपोवनरूपदेशविशेषसामीप्यसञ्जातगाढविश्वासाः। अतएव—अचकिताः = अपरिचितजनसम्मर्देऽपि अपरित्रस्ताः।

२ 'वह्न्याश्रय' इत्येव तु युक्तः, सुन्दरश्च पाठ इति गौडाः।

**भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो[1] दिशो,**
**निःसन्दिग्धमिदं तपोवनमयं[2] धूमो हि[3] बह्वाश्रयः॥१२॥**

अभिनवराजलक्ष्मीः

( अर्थः ) अत्र हि प्रदेशे—देशागतप्रत्ययाः=तपोवनप्रदेशोत्पन्न-विश्वासाः। अत एव—अचकिताः=निर्भयाः। हरिणाः=मृगाः। विश्रब्धं=निर्विशङ्कं। विश्वस्ताः सन्तः। चरन्ति=घासकवलान् गृह्णन्ति, इतस्ततः प्रचरन्ति, क्रीडन्ति च।

'तपोवनेऽस्मिन्न कोऽपि जनः—(व्याधो वा, मृगयारसिको वा-) अस्मान्हन्तुं समर्थ' इति प्ररूढविश्वासाः—जनकोलाहल—पथिकजनगतागता-दिभिरप्यचकिता हरिणा यथेच्छं निर्विशङ्कं परिभ्रमन्ति, यथाभिलाषं घासक-वलान् उपभुञ्जते चेति निःसन्दिग्धमिदं तपोवनमेव, नहि-मृगा अन्यत्रैवं निर्विशङ्कं क्रीडन्ति, चरन्ति चेति भावः।

दयारक्षिताः=ग्रीष्मसन्ताप-वन्यजन्तुपीडनादिभिर्मा बाधिषतेति समुत्पन्न-कारुण्यैमुनिभिरालवालरचना-जलसेचन-वृतिनिर्माणादिभिर्विहितरक्षाः। सर्वे वृक्षाः=सकला अपि पादपाः। पुष्पफलैः=पत्रैः, पुष्पैः, फलैश्च। समृद्धविटपाः=परिपूर्णाभिः शाखाभिः समलङ्कृताः सन्ति। 'अस्मिन्प्रदेशे' इति शेषः।

---

१ गोकुलानि धनानीव—गोकुलधनानि। गोकुलान्येव धनानीति वा विग्रहः।

२ 'निस्सन्दिग्धमिदं तपोवन' मित्युक्त्या तपोवने निश्चिते—पुरतो लम्ब-मानमाज्यगन्धिधूमं दृष्ट्वाऽऽह—**अयमिति**। अयं पुरतो विभाव्यमानः—धूमः=आज्यगन्धी धूमः। हि=निश्चयेन। **बह्वाश्रयः**=अनेककुटीकोणोत्थितः। एवञ्चाऽत्र मुनिजननिवासोऽवश्यं भवेदिति सूचितम्। अत एवाह—**यावत्प्र-विशामीति**। अत्राऽन्येऽपि विशिष्टा अर्था विस्तरभयात्त्यज्यन्ते।

३ **परे** तु—'**धूमो हि—वह्न्याश्रयः**' इति पठित्वा 'यत्र२धूमस्तत्रा-ऽग्नि'रितिरीत्या नूनमत्र तपस्विजननिवासेन भवितव्यमित्यर्थमाहुः।

अभिनवराजलक्ष्मीः

परन्तु–एवं व्याख्यानेऽसमर्थसमासाश्रयणादपरितुष्यन्तो गौडास्तु–"पुष्पफलैरित्युपलक्षणे तृतीया, पुष्पफलैरुपलक्षिता वृक्षाः, समृद्धविटपाः = नवीनकोमलपल्लवललिताः, परिपुष्टशाखाशतसमलङ्कृताः विस्तारपरिपेशलाश्च । 'शाखायां पल्लवे स्तम्बे विस्तारे विटपोऽस्त्रिया'मिति रभसः । 'स्कन्धादूर्ध्वं तरोः शाखा कट्प्रो विटपो मतः' इति कात्यः–" इति व्याचक्षते । आलवालरचना–वृतिसंनिवेश–विहितरक्षाः, पुष्पफलपल्लवादिभिः समृद्धाः, शाखाशतैश्च परिपूर्णा विस्तारभाजोऽत्र प्रदेशे सर्वेऽपि वृक्षा विभाव्यन्ते, तन्नूनमनेन तपोवनेनैव भवितव्यमित्याशयः ।

ननु पालितानां हरिणानां निश्शङ्कं प्रचारो ग्रामोपवनसीमस्वपि, भिल्लपल्ल्यादिष्वपि च सम्भाव्यते, फलाद्यर्थमारोपितानां वृक्षाणां पुष्पफलसमृद्धिः, परितो रक्षा चारामादिषु, ग्रामोपवनेषु च सम्भाव्यते, तत्कथमिदमाश्रमपदमेवेत्यत आह–**भूयिष्ठमिति** । कपिलानि = कपिलवर्णानि । गोकुलधनानि = गोयूथान्येव धनानि । भूयिष्ठं = विपुलं । 'दृश्यन्तेऽत्र प्रदेशे' इति शेषः । कपिलवर्णाया[१] गोः क्षीरस्याऽज्यादेश्चातिप्रशस्ततया हवनाद्यर्थमाश्रमेषु कपिलवर्णगोबाहुल्यम्भवतीति नूनमिदमाश्रमपदमेवेति भावः ।

ननु ग्रामेऽप्येतद् गृहमेधिनां गोष्ठेषु सम्भाव्यते इति कुत एतदत आह–**अक्षेत्रेति** । अक्षेत्रवत्यः = केदारशून्याः। दिशः=दिगुपलक्षिताः प्रदेशाः। 'अत्र सन्ती'ति शेषः । ग्रामनगरादिषु हि भूः कृषीवलैः समन्ततः कृष्टा, उप्तधान्या, कलमादिहरिता च भवति । अत्र तु कृषियोग्याऽपि भूरकृष्टैव दृश्यतेऽतो नूनमिदमाश्रमपदमेवेति भावः । ऋषयो हि उञ्छशिलाभिर्जीवन्ति, फलैर्मूलैर्वा,

---

१ 'अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत नित्यशः ॥ १ ॥' इति स्मृतिः ।

—यावत् प्रविशामि ।

( प्रविश्य- )

अये ! आश्रमविरुद्धः खल्वेष जनः ।

( अन्यतो विलोक्य- )

अथवा तपस्विजनोऽप्यत्र । निर्दोषमुपसर्पणम् ।

---

अभिनवराजलक्ष्मीः

न तु कृषिं कुर्वन्तीति तत्त्वम् । अत एवाह—**निःसन्दिग्धमिति** । निश्चितमिदमित्यर्थः । इदृग्विधैः कारणकलापैर्निश्चिनोमि, यत्—इदं = पुरतो दृश्यमानं वनं, तपोवनं=तापसाश्रमवनमेवेति भावः । किञ्च–अयं=पुरत उद्गच्छन्, धूमः = बह्वाश्रयः = बहव आश्रया यस्यासौ-बह्वाश्रयः = नानाश्रयः । नानास्थानेभ्यो निर्गच्छन् पुरतो धूमो गगनमण्डलमाक्रामति, तन्नूनमिदं तपोवनमिति भावः । 'बह्वयाश्रय' इति तु गौडाः पठन्ति । एतेन आश्रमपदेषु भूतानुकम्पा, पुष्पफलादिसम्पत्प्रकर्षः, विपुलं गोकुलम्, अकृष्टपच्या भुवः, यज्ञादिकर्मसमृद्धिश्चेति सूचितमिति ध्येयम् । [ काव्यलिङ्गम् । शार्दूलविक्रीडितं वृत्तम् । ] ॥ १२ ॥

यावत्प्रविशामि = अभ्यन्तरं प्रविशाम्येव । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे'इत्यमरः । 'प्रविश्य निश्चिनोमी'ति यावत् । 'प्रविश्ये'ति कविवाक्यम् । आश्रमाभ्यन्तरं प्रविष्टो ब्रह्मचारी—राजपुरुषान्, काञ्चुकीयं, ( स्त्रीजनं, परिचारिकासमूहं, ) दासीदासञ्चालोक्य साश्चर्यं ब्रूते–**अये इति** । 'अये'इत्याश्चर्ये । आश्रमविरुद्धः=तपोवनवासितपस्विलोकातिरिक्तो नगरवासी ।

एष जनः=राजकुमारी, परिचारकवर्गः, काञ्चुकीयश्च । अन्यतोऽवलोक्य= यस्यां दिशि राजपरिचारकवर्ग आसीत्ततोऽन्यस्यां दिशि दृष्टिनिक्षेपं कृत्वा । 'प्राहे'ति शेषः । कविवाक्यमेतत् । अथवा = किञ्च । न केवलमाश्रमविरुद्ध एव जनोऽत्र, किन्तु । अत्र = अस्मिन्प्रदेशे । तपस्विजनोऽपि = तापसीयौगन्धरायणप्रमुखस्तापसलोकोऽप्यस्ति । एवञ्चाऽऽश्रमपदमेवैतत्, अनेना-

( उपसृत्य[1]- )

अये ! स्त्रीजनः ! ।

**काञ्चुकीयः**—स्वैरं स्वैरं प्रविशतु भवान्। सर्वजनसाधारण-माश्रमपदं नाम ।

**वासवदत्ता**[2]—हं । [ हुं ] ।

अभिनवराजलक्ष्मीः

श्रमविरुद्धेन लोकेन तु आगन्तुकेनैव भवितव्यमित्याह—**निर्दोषमिति** । दोषान्निष्क्रान्तं—निर्दोषम् = दोषशून्यम् । अयमाश्रम एवेति नात्र प्रवेशे कोऽपि दोष इत्याशयः ।

दोषः = आपत्तिरपराधश्च । उपसर्पणं = प्रवेशः, निकटे गमनञ्च ।

उपसृत्य = निकटे गत्वा, अन्तः प्रविश्य वा । 'अवलोक्य चे'त्यपि बोध्यम् । 'ब्रह्मचारी इत्थमाहे'ति शेषः । कविवाक्यमेतत् । अये = आश्चर्यमेतत् । यद्वा 'अये' इति सम्भ्रमे, व्याकुलीभावे वा निपातः । अत्र = आश्रमे । स्त्रीजनः = स्त्रीलोकः । पद्मावतीप्रमुख आश्रमवासिव्यतिरिक्तः स्त्रीलोकोऽत्रास्तीति न मम प्रवेशोऽत्रोचित इति भावः ।

पद्मावतीप्रमुखं स्त्रीलोकं दृष्ट्वा परावृत्य गच्छन्तं ब्रह्मचारिणं प्रति कञ्चुकी ससम्भ्रमं तावदाह—**स्वैरमिति** । निःशङ्कमित्यर्थः । सम्भ्रमे द्वित्वम् । 'मन्दस्वच्छन्दयोः स्वैरः' इत्यमरः । क्रियाविशेषणत्वाद् द्वितीया ।

सर्वजनसाधारणं = अविशेषेण सर्वलोकोपभोगार्हम् । सर्वजनप्रवेशोचितं च । नात्र स्त्रीपुंस-स्वपरभेद उचित इति यावत् । सर्वेषु जनेषु साधारणमिति विग्रहः । 'साधारणन्तु सामान्य'मित्यमरः ।

कञ्चुकिवचनेन स्वैरं प्रविशति ब्रह्मचारिणि—तद्दर्शनं परिजिहीर्षन्ती वासवदत्ता स्फुटं ब्रह्मचारिप्रवेशे स्वाननुमतिं सूचयन्ती, सावधानतया स्ववस्त्रादिकं व्यवस्थापयन्ती च मुखावगुण्ठनमाकर्षति—**हमिति**[2] । असम्मतावनौ-

१ मुद्रितपुस्तकेषु तु नेदं दृश्यते । २ 'हुँ' इति केचित्पठन्ति ।

**पद्मावती**—अम्मो ! परपुरुसदंसणं परिहरदि अय्या । भोदु, सुपरिबालणीओ खु मण्णासो[1] ।

[ अम्मो ! परपुरुषदर्शनं परिहरत्यार्या । भवतु । सुपरिपालनीयः खलु मन्न्यासः ] ।

**काञ्चुकीयः**—भोः ! पूर्वं प्रविष्टाः स्मः, प्रतिगृह्यतामतिथि-सत्कारः ।

**ब्रह्मचारी**—(आचम्य-) भवतु भवतु । निवृत्तपरिश्रमोऽस्मि ।

---

अभिनवराजलक्ष्मीः

चिन्त्ये वा 'ह'मिति निपातः । वासवदत्ताया मुखावगुण्ठनादिकं दृष्ट्वा पद्मावती सख्यादिकं प्राह—**अम्मो** इति । 'अम्मो' इति आश्चर्ये, खेदे, वितर्के च देशी । तापसजनदुर्लभावऽगुण्ठन-परपुरुषदर्शनपरिहारादि—व्यापारदर्शना-दाश्चर्यमत्र पद्मावत्याः । **अये** इति तत्संस्कृतच्छाया । आर्या = वासवदत्ता । भवतु = यथेयमिच्छति, तथाऽस्तु । यथेच्छमवगुण्ठनादिकमस्या भवत्विति यावत् । मन्न्यासः = मदीयो न्यासः । यथेयमिच्छति परपुरुषदर्शनपरिहारं, तथा मया संविधेयं, सुष्ठु परिरक्षणीया हि न्यासभूता आर्या आवन्तिकेत्याशयः ।

काञ्चुकीयस्तावद्ब्रह्मचारिणमाह—**भो** इति । पूर्वं = त्वत्तः पूर्वमेव । प्रविष्टाः = आश्रमपदे वयं प्रविष्टाः स्मः । अतो भवानस्माकमप्यतिथिभूतो नूनमस्मत्सत्कारमर्हति । अतः—अतिथिसत्कारः = अतिथिभूतस्य भवतः सत्कारायोपकल्पितं पाद्यार्घ्यादिकम् । प्रतिगृह्यताम् = स्वीक्रियताम् । आचम्य = आतिथेयं पाद्यार्घ्याचमनीयादिकं च स्वीकृत्य । भवतु भवतु =

---

१ केचित्तु—यत इयमावन्तिका परपुरुषदर्शनं स्वयमेव परिहरति, अतः सुपरिपालनीया = अनायासेनैव रक्षणीया स्यादित्येवमर्थमाहुः ।

**यौगन्धरायणः**—भोः! कुत आगम्यते?, क्व गन्तव्यं?, क्वाऽधिष्ठानमार्यस्य?।

**ब्रह्मचारी**—भोः! श्रूयताम्—राजगृहतोऽस्मि, श्रावस्तीं प्रति, विद्याग्रहणार्थं[1]—वत्सभूमौ[2] **लावाणकं** नाम ग्रामस्तत्रोषितवानस्मि।

---

अभिनवराजलक्ष्मीः

अलमलमियता। न भूयसोपचारेणाऽस्त्यस्माकं प्रयोजनमित्याशयः।

ननु कुत एतदित्यत आह—**निवृत्तेति**। निवृत्तपरिश्रमोऽस्मि = अपगतमार्गश्रमोऽस्मि। इत्थमातिथेयीमर्चामादाय निवृत्तमार्गश्रमं सूपविष्टं ब्रह्मचारिणं यौगन्धरायणः पृच्छति—**भो इति**। भोः = भो ब्रह्मचारिन्। 'आगम्यते'इत्यस्य, 'गन्तव्य'मित्यस्य च—'भवते'ति शेषः। आर्यस्य = माननीयस्य भवतः। अधिष्ठानं = निवासभूमिः। 'अधिष्ठानं रथस्याङ्गे प्रभावेऽध्यासने पुरे'इत्यजयः। यौगन्धरायणप्रश्नत्रयस्य क्रमश उत्तरमाह—**भो इति**। भोः = भोः परिव्राजक!। श्रूयताम् = भवताऽऽकर्ण्यतामुत्तरमेतस्य। उत्तरमाह—**राजेति**। राजगृहाभिधानाया मगधराजधान्या गयापरिसरवर्त्तिन्याः सकाशादहमागच्छामीत्यर्थः। 'गम्यमानाऽपि क्रिया कारकविभक्तीनां निमित्त'-मित्युक्तेरत्र पञ्चमी। 'कुत आगम्यते'? इति प्रश्नस्योत्तरमेतत्। 'क्व गन्तव्य'-मित्यस्योत्तरमाह-**श्रावस्तीमिति**। 'श्रावस्तीं प्रति'। 'गन्तव्यं मये'ति शेषः।

**विद्याग्रहणार्थमिति**। तृतीयप्रश्नस्योत्तरम्। विद्याग्रहणाय लावाणकाख्ये वत्सभूमौ=वत्सदेशवर्त्तिनि-ग्रामे (पलामू,हजारीबाग जिला)। उषितवानस्मि= स्थितवानस्मि। एवञ्च 'क्वाधिष्ठानमार्यस्ये'ति तृतीयप्रश्नस्य-'लावाणके

---

१ अत्र—'श्रुतिविशेषणार्थं वत्सभूमौ' इति तु मुद्रितः पाठः।

२ वत्सभूमि = 'बैसवाडा' (कन्नौजराज्य)।

**वासवदत्ता**–(आत्मगतं–) हा लावाणअं णाम ! लावाणअ-संकित्तणेण पुणो णवीकिदो विअ मे सन्दावो ।

[हा लावाणकं नाम ! । लावाणकसङ्कीर्तनेन पुनर्नवीकृत इव मे सन्तापः] ।

**यौगन्धरायणः**—अथ परिसमाप्ता विद्या ? ।

**ब्रह्मचारी**—न खलु तावत् ।

---

अभिनवराजलक्ष्मीः

स्थितवानस्मी'त्युत्तरमिति ध्येयम् । 'विद्याग्रहणार्थ'मित्यस्य 'श्रावस्तीं प्रती'त्यत्र, 'उषितवानस्मी'त्यत्र च मध्यमणिन्यायेन सम्बन्धो बोध्य; । यौगन्धरायणस्य तु—'अथ परिसमाप्ते'ति प्रश्न उत्तरत्र तत्सम्बन्धाभिप्राणैवेत्यपि बोध्यम् ।

अत्र—"श्रुतिविशेषणार्थं वत्सभूमौ लावाणकं नाम ग्रामः" इति मुद्रितः पाठः । तत्र 'श्रुतिविशेषणार्थ'मित्यस्य—श्रुतेः, श्रुतीनां वा अधीतानां, विशेषणम् = अर्थग्रहणादिनोपस्करणं, तदर्थम्–इत्यर्थो बोध्यः । परन्त्वस्मिन्पाठे यौगन्धरायणकृतप्रश्नत्रयस्योत्तरं यथावन्न लभ्यते इति नायं शुद्धः पाठ इति यथाबुद्धिशोधितोऽस्माभिः । 'लावाणक'नामसङ्कीर्त्तनसमधिगतराज्यापहारादिपूर्वविषयस्मृतिर्वासवदत्ता आत्मगतं = स्वगतं प्राह–**हा इति** । 'हा' इति खेदे, शोके वा । 'हा विषादे च कुत्साढुःखार्थयोरपी'ति मेदिनी । लावाणकसङ्कीर्तनेन = लावाणकनामोच्चारणेन । पुनः = पुनरपि । सन्तापः = राज्यापहार—प्रियविप्रयोगा—ऽज्ञातवास—परगृहप्रवेशादिरूपः क्लेशः । नवीकृत इव = स्मारित इव, नवीनतां प्रापित इव ।

'विद्याग्रहणार्थं लावाणके उषितवानस्मी'त्येवं तृतीयप्रश्नोत्तरं श्रुत्वा परिपृच्छति—**अथेति** । अथेत्ययं प्रश्ने निपातः । 'मङ्गलानन्तरारम्भप्रश्न-कार्त्स्न्येष्वथो अथे'त्यमरः । विद्या = साङ्गा वेदविद्या । **परिसमाप्तेति** । विद्यासमाप्त्याऽऽश्रमान्तरं प्रविविक्षुर्गुरुकुलं विहायान्यत्र–[स्वगेहं] व्रजसि किमिपि प्रश्नाशयः । न खलु=नैव ।।तावत्=साकल्येन । 'परिसमाप्ता विद्ये'ति शेषः । न पूर्णेति यावत् । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे इत्यमरः ।

**यौगन्धरायणः**—यद्यनवसिता विद्या—किमागमनप्रयोजनम् ? ।

**ब्रह्मचारी**—तत्र खल्वतिदारुणं व्यसनं संवृत्तम् ।

**यौगन्धरायणः**— कथमिव ? ।

**ब्रह्मचारी**—तत्रोदयनो नाम राजा प्रतिवसति ।

**यौगन्धरायणः**—श्रूयते तत्रभवानुदयनः । किं सः ? ।

**ब्रह्मचारी**—तस्याऽवन्तिराजपुत्री **वासवदत्ता** नाम पत्नी दृढमभिप्रेता किल ।

---

अभिनवराजलक्ष्मीः

अनवसिता=अपरिसमाप्ता । 'तर्हि'ति शेषः । आगमनप्रयोजनं=लावाणकं विहाय इहागमनस्य श्रावस्तीप्रयाणस्य च किं प्रयोजनम् । 'किमर्थं परित्यक्तवानसि लावाणक'मित्याशयः । तत्र=लावाणके । अतिदारुणं=नितरां भीषणम् । 'दारुणं भीषणं भीष्मं घोरं भीमं भयानक'मित्यमरः । व्यसनं = विपत्तिः, अशुभं वा । 'व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगयादिषु । दैवाऽनिष्टफले पापे विपत्तौ, निष्फलोद्यमे' इति मेदिनी । संवृत्तं = जातम् । कथमिव = किंनाम तद्व्यसनम् ? । 'कथय—कीदृशं तद्व्यसन'मिति प्रश्नाशयः । कथमिवेति निपातसमुदायः प्रश्ने । तत्र=लावाणके । उदयनो नाम राजा = शत्रुकृतराज्यापहारपरिक्लिष्टः कौशाम्बीं नाम स्वराजधानीं परित्यज्य तत्र कृतवसतिरुदयनो नाम राजा । प्रतिवसति=तिष्ठति । तत्रभवान् = माननीयः । उदयनः श्रूयते । उदयनमहाराजस्य कीर्त्तिरस्माभिरपि श्रुतैव । तं राजानं विद्म इत्यर्थः ।

किं सः = तस्य राज्ञः किं नाम व्यसनं वृत्तं ? । यथावदुपवर्णयेत्यर्थः । तस्य = उदयनस्य । अवन्तिराजपुत्री = उज्जयिनीपतिचण्डमहासेनदुहिता । नामेति प्रसिद्धौ । दृढं = नितराम् । अभिप्रेता = वल्लभा । किल=इति श्रूयते ।

**यौगन्धरायणः**—भवितव्यम् । ततस्ततः ! ।

**ब्रह्मचारी**—ततस्तस्मिन् मृगयानिष्क्रान्ते राजनि ग्रामदाहेन सा दग्धा ।

**वासवदत्ता**—(आत्मगतम्-) अलं अं अलीअं एदं । जीवामि मंदभाआ ।

[ अलीकम् ! अलीकमेतत् । जीवामि मन्दभागा[1] ] ।

**यौगन्धरायणः**—ततस्ततः ? ।

**ब्रह्मचारी**—ततस्तामभ्यवपत्तुकामो यौगन्धरायणो नाम सचिव-

अभिनवराजलक्ष्मीः

'किलशब्दस्तु वार्त्तायां सम्भाव्याऽनुनयार्थयो'रिति विश्वः । भवितव्यं = युक्तमेवैतत् । अर्हा खलु सा तादृशसत्कारस्येति भावः । यद्वा—भवेदेवं, तेनास्माकं न किमपि प्रयोजनमित्यर्थः । [ भवितव्यं = 'होगा—इससे क्या ?' ] ।

ततस्ततः = अग्रे कथय, अग्रे । सम्भ्रमे द्वित्वम् । विपत्तिमेव व्यावर्णय, तत्पत्नीवृत्तान्तेन वर्णितेनात्र किं प्रयोजनमिति वाक्यार्थः । [ ततस्ततः = तब आगे क्या हुआ ! शीघ्र कहो ] । तस्मिन् = राजनि उदयने नृपतौ ।

मृगयानिष्क्रान्ते = आखेटकार्थं वनं प्रति गते सति । 'पापर्द्धिर्मृगयाऽऽखेटो मृगव्याऽऽच्छोदने अपि' इति हैमः । सा = वासवदत्ता । ग्रामस्य दाहः—ग्रामदाहः, तेन—ग्रामदाहेन = लावाणकग्रामदाहेन कुतश्चित्प्रवृत्तेन । दग्धा = भस्मीभूता ।

अलीकं = मिथ्यैव । मन्दभागा = मन्दप्रारब्धा । अत्र विपत्तिग्रस्ततया किल स्वस्या मन्दप्रारब्धतां तर्कयति वराकी वासवदत्ता । ततस्ततः = अग्रे किं जातं तत्कथय ? । ततः = वासवदत्तायामग्निदाहव्यसनमभिपन्नायाम् । तां=वासवदत्ताम् । अभ्यवपत्तुकामः[2]=व्यसनात्खल्वस्मादुद्धर्तुकामः ।

१ 'भाग्या' पा० । २ 'अग्नि से बचाने का यत्न करता हुआ जल मरा' ।

स्तस्मिन्नेवाऽग्नौ पतितः ।

**यौगन्धरायणः**—सत्यं 'पतित' इति । ततस्ततः ? ।

**ब्रह्मचारी**—ततः प्रतिनिवृत्तो राजा तद्वृत्तान्तं श्रुत्वा, तयोर्वियोगजनितसन्तापस्तस्मिन्नेवाऽग्नौ प्राणान् परित्यक्तुकामोऽमात्यैर्महता यत्नेन वारितः ।

**वासवदत्ता**—( आत्मगतम्– ) जाणामि जाणामि अय्यउत्तस्य मइ साणुकोसत्तणं ।

[ जानामि जानामि—आर्यपुत्रस्य मयि सानुक्रोशत्वम् ] ।

**यौगन्धरायणः**—ततस्ततः ? ।

---

अभिनवराजलक्ष्मीः

सचिवः = उदयनप्रधानामात्यः । तस्मिन् = ग्रामदाहाय प्रवृत्ते वह्नौ । पतितः = पतित्वा प्राणाञ्जहौ ।

इत्थं ब्रह्मचारिवर्णितं स्वस्याग्निपतनवृत्तान्तमाकर्ण्य तदसत्यमिव मन्यमानः पृच्छति—**सत्यं पतित इति** । किं सत्यमेतत्—यदसौ सचिवोऽग्नौ पतित इति तदर्थः । यद्वा—स्वगर्हणामेवोपन्यस्यति—**सत्यमिति**। पतितः= मन्दप्रारब्धः । ईदृशकूटमन्त्रणापापकारितया क्रूराशयः, नूनं पतितः = नीच एव ।

प्रतिनिवृत्तः = आखेटकं विधाय पुनर्लावाणकं प्राप्तः । तद्वृत्तान्तं = तादृशव्यसनवार्ताम् । तयोः = वासवदत्ता-यौगन्धरायणयोः । वियोगेन जनितः सन्तापो यस्यासौ—वियोगजनितसन्तापः = तद्वियोगार्त्तः । अमात्यैः = रुमण्वद्वसन्तकादिभिर्मन्त्रिभिः । महता = अतिभूयिष्ठेन, यत्नेन = प्रयत्नेन कथमपि । वारितः = अवरुद्धः । आर्यपुत्रस्य = उदयनस्य 'आर्यपुत्रेति सम्भाष्यो भर्त्ता स्त्रीभिस्तु यौवने' इति भरतः । सानुक्रोशत्वं = सदयत्वम् ।

अनुक्रोशः = कृपा । 'कारुण्यं करुणा घृणा । कृपा दयाऽनुकम्पा स्यादनुक्रो-

**ब्रह्मचारी**— ततस्तस्याः शरीरोपभुक्तानि दग्धशेषाण्याभरणानि परिष्वज्य ( परिष्वज्य ) राजा मोहमुपगतः ।

**सर्वे**—हा ! ।

**वासवदत्ता-(स्वगतं-)**सकामो दाणिं अय्य जोअंधराअणो होदु ।

[ सकाम इदानीमार्ययौगन्धरायणो भवतु ] ।

**चेटी**—भट्टिदारिए ! रोदिदि खु इअं अय्या ।

[ भर्तृदारिके ! रोदिति खल्वियमार्या ] ।

**पद्मावती**-साणुक्कोसाए होदव्वं । [ सानुक्रोशया भवितव्यम् ]

---

अभिनवराजलक्ष्मीः

शोऽपी'त्यमरः । तस्याः = वासवदत्तायाः । शरीरोपभुक्तानि = देहधारितानि । दग्धानि च तानि शेषाणि च–दग्धशेषाणि = दग्धान्यपि किञ्चिदिवाऽवशिष्टानि । आभरणानि = आभूषणानि । परिष्वज्य परिष्वज्य = आश्लिष्याऽऽश्लिष्य । मोहं = मूर्च्छाम् । उपगतः = प्राप्तः । क्वचित्परिष्वज्येत्येव पाठः । 'हा'इति शोकविषादसूचको निपातः । 'हा विषादे च शोके च कुत्सादुःखार्थयो-रपी'ति मेदिनी ।

सकामः = लब्धमनोरथः । यौगन्धरायणप्रयुक्तकूटमन्त्रणोपनता विपत्ति-रियमिति सूचयितुमयमुपालम्भो वासवदत्तया प्रयुक्त इत्यवधेयम् । इयं = वासवदत्ता । सानुक्रोशया = परदुःखवृत्तान्तश्रवणोद्भूतकरुणाक्रान्तचित्तया ।

अथ किम् = अवश्यमेवमेवैतत् । नहीयमुदयनविपत्तिमाकर्ण्य तत्सम्बन्धि-तया रोदिति, किन्तर्हि करुणार्द्रहृदयतया केवलं परविपत्तिश्रवणोपतनशोकवेगेनैव रोदितीति नान्यथा शङ्कनीयमिति भावः । एवञ्च मन्त्रिणा रहस्योद्भेदस्थगन-

**यौगन्धरायणः**—अथकिम् , अथकिम् । प्रकृत्या सानुक्रोशा मे भगिनी । ततस्ततः ? ।

**ब्रह्मचारी**—ततः शनैः-शनैः-प्रतिलब्धसञ्ज्ञः (स राजा) संवृत्तः ।

**पद्मावती**—दिट्ठिआ धरइ । 'मोहं गदो'त्ति सुणिअ सुण्णं विअ मे हिअअं ।

[ दिष्ट्या धरति । 'मोहं गत' इति श्रुत्वा शून्यमिव मे हृदयम् ] ।

**यौगन्धरायणः**—ततस्ततः ? ।

**ब्रह्मचारी**—ततः स राजा महीतलपरिसर्पणपांसुपाटलशरीरः

---

अभिनवराजलक्ष्मीः

माचरितमितिधेयम् । [अथकिं = हाँ] । प्रकृत्या = स्वभावेनैव । शनैः शनैः = रुमण्वदादिप्रयुक्तैरुपचारैर्मन्दं मन्दम् । एतेन शोकावेगः सूचितः । प्रतिलब्धा सञ्ज्ञा येनासौ —प्रतिलब्धसञ्ज्ञः = सम्प्राप्तचैतन्यः । व्यापगतमोहः ।

संवृत्तः=जातः । दिष्ट्येति निपातो हर्षे । अस्माकं सौभाग्येनेति यावत् । धरति = प्राणान्धारयति । न लोकान्तरं गत इति यावत् । 'धृञ् धारणे' इत्यस्य रूपम् । 'ध्रियते' इति पाठे=ध्रियते=जीवति । धृङ् अवस्थाने' इत्यस्य रूपम् ।

**मोहमिति** । 'वासवदत्ताविरहेण राजा मोहमुपगत' इति श्रुत्वाऽमङ्गलाशङ्कया-शून्यमिव = हृतसर्वस्वमिव,—मुषितमिव, मे = मम, हृदयं= चेतः—आसीत् । "इदानीन्तु 'प्रतिलब्धसञ्ज्ञः संवृत्त' इति श्रुत्वा समाश्वसितीव च मे हृदयम्—" इति शेषः ।

हा ! अग्रे, किमयं ब्रह्मचारी वक्तुकामः ? । 'किमयं राज्ञोऽनिष्टं किञ्चित् श्रावयिष्यती'त्याशङ्कया वेपमानं मे हृदयम्—'लब्धसञ्ज्ञ' इति श्रवणेन किञ्चिदिव धैर्यमालम्बते इति भावः ।

ततः = चेतनासञ्चारानन्तरम् । महीतले = भूतले, परिसर्पणेन = परि-

सहसोत्थाय—'हा वासवदत्ते ! हा अवन्तिराजपुत्रि ! हा प्रिये ! हा प्रियशिष्ये !' इति किमपि (-किमपि[1]) बहु प्रलपितवान् । किं बहुना—

**नैवेदानीं तादृशाश्चक्रवाका,**
**नैवाऽप्यन्ये[2] स्त्रीविशेषैर्वियुक्ताः।**

---

अभिनवराजलक्ष्मीः

लण्ठनेन, । ['भूमि में लोटने से' 'पछाड़ खाकर गिरने से'] । वपुषि लग्ना ये पांसवः = रेणवः, तैः—पाटलम् = ईषद्रक्तं, शरीरं = वपुर्यस्यासौ—महीतलपरिसर्पणपांसुपाटलशरीरः = भूतलपरिपतनसंसक्तधूलिधूसरितदेहः । 'ईषद्रक्तस्तु पाटलः' इत्यमरः । सहसोत्थाय = अकस्मादेव भूमेरुत्थाय । इति = इत्थम् । किमपि = अनिर्वचनीयं । निर्देष्टुमप्यशक्यम् । बहु=अनल्पम् । प्रलपितवान् = रुरोद, चक्रन्द, परिदेवते स्म ।

अथ प्रलापप्रकारमाह—**हा वासवदत्ते** इति । अवन्तिराजः–प्रद्योतः । उदयनादेव वासवदत्तया वीणावादनं शिक्षितमिति तस्याः स्वप्रियशिष्यत्वकथनं युक्तमेवेत्याशयः । बहुना = अनल्पजल्पनेन । किं = न किमपि प्रयोजनं मनोव्यथाऽतिरिक्तम् । अतस्तद्वृत्तान्तं सङ्क्षिप्य सम्प्रति निवेदयामीति भावः । **नैवेदानीमिति ।**

[ अन्वयः ] इदानीं चक्रवाकाः तादृशाः नैव । अन्येऽपि स्त्रीविशेषैः वियुक्ताः नैव । सा स्त्री धन्या यां भर्त्ता तथा वेत्ति । दग्धाऽपि सा भर्तृस्नेहात्—अदग्धा ।

[ अर्थः ] इदानीम् = सम्प्रति । अतिभूमिङ्गतायामुदयनस्य शोकावस्थायाम् । चक्रवाकाः = प्रियावियोगकातरत्वेन प्रसिद्धाः किञ्चित्कालिकमपि प्रियावियोगदुःखं सोढुमसमर्थाः, करुणं क्रन्दन्तो रथाङ्गनामानः पक्षिणोऽपि ।

---

१ क्वचिन्न । २ 'नैवाऽऽप्यन्ते' इति पाठान्तरम् । आप्यन्ते=लभ्यन्ते ।

**धन्या सा स्त्री यां तथा वेत्ति भर्त्ता,**
**भर्तृस्नेहात्सा हि दग्धाऽप्यदग्धा ॥१३॥**

अभिनवराजलक्ष्मीः

तादृशाः = उदयनतुल्यविरहकातराः । नैव = नैव भवन्ति । जगति विरहकातरमूर्धाभिषिक्तत्वेन प्रसिद्धानां चक्रवाकादीनाम्—[ चकवा—चकवी ]-प्रियाविरहशोकमपि अतिक्रम्य वर्त्तते सम्प्रति तस्य महात्मन उदयनस्य वासवदत्ताविरहशोकावेग इत्याशयः । 'चकवाका हि—रात्रौ स्वप्रियाभिर्वियुज्यन्ते, प्रभाते च पुनस्ताभिः सह संश्लिष्यन्ती'त्यैतिह्यम् । उदयनस्य हि वासवदत्तापुनर्मिलनसम्भावनालेशस्याप्यभावादतिभूमिङ्गतः शोकावेगो न चक्रवाकशोकदृष्टान्तेन वर्णयितुं शक्य इति तत्त्वम् । किञ्च—स्त्रीविशेषैः = सकलगुणगणालङ्कृताभिर्विशिष्टाभिः । स्त्रीभिः—शकुन्तलादिभिः स्त्रीरत्नैः । वियुक्ताः = विप्रयुक्ताः । रहिताः । अन्येऽपि = दुष्मन्तादयोऽपि । नैव = तादृशा नैव । मन्ये एवंविधः शोकस्तेषामपि नासीत् । शकुन्तलादिविरहातुरदुष्यन्तादिप्रभृतीनपि अतिक्रम्य वर्त्ततेऽस्य विरहशोकावेग इत्याशयः । तदेवं—वाचामगोचरीभूतामनिर्वचनीयां दशां गाहते तस्य महात्मनो वासवदत्तावियोगोत्थः शोक इति पूर्वार्द्धेन सूचितम् ।

यद्वा—चक्रवाकातिरिक्ताः प्रियाविरहिणो लोके नैव प्रसिद्धाः । चक्रवाकांश्चोल्लङ्घ्य वर्त्तते तस्य शोक इत्यनुपमस्तस्य शोकावेग इत्यर्थो बोध्यः ।

यस्याः स्त्रीरत्नभूताया वासवदत्तायाः कृते ईदृशस्य महासत्त्वस्य मनस्विन उदयनस्येदृशी दशा सञ्जाता, सा वासवदत्ताऽपि नूनं धन्यतमैवेत्याह—**धन्येति** । सा स्त्री = स्त्रीरत्नभूता सा वासवदत्ता । धन्या=कृतार्था । प्रशंसनीयतमा । यां—मृतामपि । भर्त्ता=स्वामी । तथा=तादृशेन प्रकारेण । वेत्ति=मन्यते, अवबुध्यते, स्मरति च । [ यद्वा—सैव स्त्री धन्या यां भर्त्ता एवं मन्यते इत्यर्थः । ईदृश्येव स्त्री खलु धन्येति स्त्रीमात्रप्रशंसापरतया व्याख्येयम् । ] भर्तृस्नेहात् = भर्तुरुदयनस्य, स्नेहात्—प्रेम्णा । सा हि =

**यौगन्धरायणः**— अथ भोः ! तं तु पर्यवस्थापयितुं न कश्चि-द्यत्नवानमात्यः ? ।

**ब्रह्मचारी**— अस्ति रुमण्वान्नामाऽमात्यो दृढं प्रयत्नवांस्तत्रभवन्तं पर्यवस्थापयितुम् ।

स हि—

**अनाहारे तुल्यः [1]प्रततरुदितक्षामवदनः,**
**शरीरे(ऽ)संस्कार[2] नृपतिसमदुःखं परिवहन् ।**

अभिनवराजलक्ष्मीः

वासवदत्ता हि । दग्धाऽपि=वपुषा भस्मीभूताऽपि । अदग्धैव=कीर्त्तिशरीरेणात्र वर्त्तत एव । मृताऽपि सा जीवत्येव भर्त्तृस्नेहाऽमृतोपजीवितेति भावः । 'याव-दियं धरित्री तावत्तस्याः पतिव्रताया नाम भुवि स्थास्यती'ति—'कीर्त्तिर्यस्य स जीवती'त्युक्तेः सा जीवत्येवेति तत्त्वम् । **शालिनीवृत्तम्** । 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति वृत्तरत्नाकरोक्तेः ॥ १३ ॥

अथेति प्रश्ने । भो इति सम्बोधनम् । तम् = उदयनम् । पर्यवस्था-पयितुं = सान्त्ववचनैरन्यैर्वा विविधैरुपायैः समाश्वासयितुम् । प्रकृतिस्थं विधातुमिति यावत् । यत्नवान् = अतिशयेन प्रयत्नशीलः । दृढं = भृशम् । तत्र भवन्तं = माननीयं राजानमुदयनम् । स हि = रुमण्वान्नामाऽमात्यो हि । अस्य —अग्रिमश्लोकेनान्वयः ।

तस्य प्रयत्नमेव विशदयति—**अनाहारे** इति । स हि = रुमण्वान्—हि ।

१ 'सतते'ति, 'संस्कार'मिति, 'नृपतिसमदुःखः' इति च पाठान्तरम् ।
२ द्वितीयचरणे 'संस्कार'मितिच्छेदे—नृपतिदुःखेन तुल्यं स्वस्य दुःखं

**दिवा वा रात्रौ वा परिचरति यत्नैर्नरपतिं,**
**नृपः प्राणान्सद्यस्त्यजति, यदि तस्याप्युपरमः ॥१४॥**

अभिनवराजलक्ष्मीः

न आहारः—अनाहारः, तस्मिन्—अनाहारे = भोजनविरतौ। तुल्यः = उदयनसम एव। यथा विरहातुरेणोदयनेन भोजनादिकं परित्यक्तं तथा रुमण्वता तत्समदुःखेनापि भोजनं परित्यक्तमेवेत्यर्थः। किञ्च—प्रततं=निरन्तरम् अविरलधारं, यत् रुदितं = रोदनं, तेन क्षामं = क्षीणं, कृशञ्च—वदनं = मुखं यस्यासौ—प्रततरुदितक्षामवदनः = निरर्गलरोदनम्लानाऽऽननः। 'सतते'ति पाठेऽपि स एवार्थः। यथा राज्ञो निरन्तरं रुदितेन, निःश्वासेन च म्लानमाननमेवं रुमण्वतोऽपि आहारत्यागादिना क्षामं मलिनमाननमित्याशयः।

किञ्च—नृपतिना समं दुःखं यस्यासौ—नृपतिसमदुःखः=राजसमानदुःखः। शरीरे = देहेऽपि। असंस्कारं=संमार्जनस्नानादिसंस्काराऽभावम्। परिवहन्= धारयन् सन्,—यत्नैः = विशिष्टैः प्रयत्नैः। दिवा वा = दिने इव। 'व वा यथा तथैवैवं साम्ये'इत्यमरः। रात्रौ वा=रात्रावपि। यद्वा-दिवा वा रात्रौ वा= दिने च रात्रावपि। परित्यक्तदिनरात्रिविभागं यथा स्यात्तथेति यावत्। सः, नरपतिम्-उदयनम्। परिचरति=सेवते। यदि=अथ चेत्। तस्य—रुमण्वतः। उपरमः = शोकेनानाहारादिना च मृत्युः। 'स्यात्तर्हि'ति शेषः। नृपः =

---

यथा भवति तथा शरीरे संस्कारं वहन्नित्यर्थः। शरीरसंस्कारेऽपि राजदुःखानुरूपमौदासीन्यं परिवहन्निति यावत्।

**'नृपतिसमदुःख'मिति** पाठेतु-राजतुल्यदुःखं यथा भवति तथा—संस्कारं = स्नानादिकम्, [ असंस्कारं = संस्काराऽभावं वा ] परिवहन्नित्येवं व्याख्येयम्। यथा राज्ञः स्नानादिनित्यकर्मस्वप्यरतिरेवं रुमण्वतोऽपीत्याशयः। क्रियाविशेषणत्वाद्द्वितीया।

**वासवदत्ता—( स्वगतम्- )** दिट्ठिआ सुणिक्खित्तो दाणीं अय्यउत्तो ।

[ दिष्ट्या सुनिक्षिप्त इदानीमार्यपुत्रः ] ।

**यौगन्धरायणः—( आत्मगतम्- )** अहो महद्भारमुद्वहति रुमण्वान् ।

---

अभिनवराजलक्ष्मीः

राजोदयनः । सद्यः = तत्क्षणादेव । प्राणान् त्यजति = स्वस्यापि प्राणांस्त्यक्ष्यति । वर्त्तमानसामीप्ये भविष्यति लट् । यदि—प्रत्यहं रुदिताऽनाहाराऽसंस्कारादिना शोकोपहतेन्द्रियग्रामस्य रुमण्वतो मृत्युः स्यात्तर्हि तदधीनजीवनो नूनन्तदैव राजाऽपि म्रियेतेति इदानीं राज्ञः प्राणभूत एव रुमण्वानित्याशयः ।

[ अन्ये तु—यौगन्धरायण इव रुमण्वतोऽपि यदि मृत्युरभविष्यत्तर्हि—नृपः प्राणानत्यक्ष्यदित्येवं व्याचक्षते । केचित्तु—विरहकातरो राजा उदयनो यदि उपरतः स्यात्तर्हि तदैव समदुःखस्य रुमण्वतोऽपि मृत्युरेव मन्तव्यः । एतेन तस्य परिचरणे तन्मयभावो दर्शित इत्येवं व्याचक्षते । शिखरिणी वृत्तम् । 'रसै रुद्रैश्छिन्ना य-म-न-स-भ-ला-गः शिखरिणी'ति वृत्तरत्नाकरोक्तेः ] ॥१४॥

दिष्ट्येति—हर्षे निपातः । सुनिक्षिप्तः = सुजनस्य हस्ते निक्षेपभूतः । इदानीं = मद्विरहदशायाम् । हन्त ! रुमण्वतो हस्ते निक्षेपभूतः, तेनात्मशरीरनिर्विशेषं परिचर्यमाणश्च तदायत्तजीवितो राजा न शोचनीयो मयेत्याशयः । निश्चिन्ताऽहमस्मि तस्य परिचर्यादिविधाविति तु हृदयम् ।

आर्यपुत्रः = मद्भर्त्ता उदयनः । महद्भारं = नितरां गुरु राजजीवितरक्षणात्मकं कार्यभारम् । भारशब्दस्य पुंस्त्वात्—'महाभार'मित्युचितः पाठः । यद्वा—महतो भारमिति विग्रहे—महतो राज्ञः, राज्यस्य वा भारमित्यर्थो बोध्यः । महतामपि—भारभूतं = दुर्धरं, भारं = राजशरीर—राज्यादि—रक्षणात्मकम्—उद्वहति = इदानीमपि वहतीत्यर्थ इति तु परे ।

कुतः,

**सविश्रमो ह्ययं भारः, प्रसक्तस्तस्य तु श्रमः ।**
**तस्मिन् सर्वमधीनं हि यत्राऽधीनो नराधिपः ॥१५॥**

अभिनवराजलक्ष्मीः

ननु कुतो रुमण्वतो भारस्य नितरां गुरुतेत्यत आह—**कुत** इति । अतो हेतोरित्यर्थः । हेतुमेव विशदयति—**सविश्रम** इति । हि=निश्चयेन । अयं भारः= मया स्वीकृतो वासवदत्तारक्षणात्मको-भारतुल्यत्वाद्भारः । विगतः श्रमो विश्रमः, विश्रमणं वा विश्रमः, विश्रमेण सहितः-सविश्रमः = विश्रान्तिमुपगतः । पद्मावतीसन्निधौ स्थापनादेव वासवदत्तारक्षणरूपस्य मयि न्यस्तस्य भारस्य विश्रान्तेः सावसानोऽयं मदीयो भार इति भावः । तस्य तु = रुमण्वतस्तु । श्रमः=कार्यभारोद्वहनजन्मा परिश्रमः । प्रसक्तः=सततं प्रवर्त्तमान एव । निरन्तरमधिकं क्लेशमुत्पादयत्येवेति यावत् । यद्वा—तस्य तु = रुमण्वतस्तु । प्रसक्तः= तत्र प्रसक्तो भारः, राजरक्षणात्मकः । श्रमः = नितरां श्रमजनकः, क्लेशप्रद इति यावत् । एवञ्च वासवदत्तासंरक्षणात्मकाद्भाराद्राजरक्षणात्मको भारोऽतिगरीयानिति भावः । सातिशयश्रमजनकत्वं तस्य समर्थयते—**तस्मिन्निति** ।

हि=यस्मात्कारणात् । नराधिपः=राजा उदयनः । यत्र=यस्मिन् रुमण्वति । अधीनः = यत्र आयत्तः । रक्षणीयतया यत्र आयत्त इति यावत् । 'अधीनो निघ्न आयत्तः' इत्यमरः । तस्मिन् = राजपरिचारके रुमण्वति । सर्वम् = राष्ट्र-दुर्ग—बलादिसम्बन्धि राजाधीनं सर्वं कार्यजातम् । अधीनम् = आयत्तम् । राजाधीना हि—राज्यस्थितिः, अथ तस्मिन्नेव राजनि व्यसनाभिपन्ने सति तत्परिपालनप्रसक्तेषु सचिवादिष्वेव राजाधीनः सर्वो भारोऽपि समापतति । एवञ्चोदयनदेहरक्षणप्रसक्ते रुमण्वति सर्वाऽपि राज्यस्थितिराधीनेति—महतीयं कष्टपरम्परा तत्र रुमण्वति प्रसक्तेति नितरां गुरुस्तस्य भार इति भावः । १५ ।

**(प्रकाशम्–)** अथ भोः ! पर्यवस्थापित इदानीं स राजा ? ।

**ब्रह्मचारी—**तदिदानीं न जाने । 'इह तया सह हसितम्' 'इह तया सह कथितम्,' 'इह तया सह पर्युषितम्,' 'इह तया सह कुपितम्', 'इह तया सह शयितम्'–इत्येवं तं विलपन्तं राजानममात्यैर्महता यत्नेन तस्माद् ग्रामाद् गृहीत्वाऽपक्रान्तम् । ततो निष्क्रान्ते राजनि प्रोषितनक्षत्रचन्द्रमिव नभोऽरमणीयः संवृत्तः स ग्रामः । ततोऽहमपि निर्गतोऽस्मि ।

अभिनवराजलक्ष्मीः

अथेति प्रश्ने । पर्यवस्थापितः = विरहशान्तिमापादितः । प्रकृतिमापादित इति यावत् । तत् = स राजा पर्यवस्थापितो न वेति । न जाने = नैव वेद्मि ।

कुत एतदित्यत आह–इहेति । इह=अस्मिन् स्थाने । तया=वासवदत्तया । हसितं = मयोपहासः कृतः । कथितं = मया कथनं कृतम् । तया वार्त्तालापो विहित इत्यर्थः । पर्युषितं = मया निवासः कृतः । कुपितं = मया प्रणयकोपः कृतः । शयितं = मया शयनं कृतम् । विलपन्तं = रुदन्तं । राजानं = नृपम् । महता यत्नेन=अतिमहता प्रयत्नेन । कथङ्कथमपि । गृहीत्वा-आदाय । अमात्यैः= रुमण्वदादिभिर्मन्त्रिभिः । अपक्रान्तं = गतम् । स ग्रामो मन्त्रिभिः परित्यक्त इत्यर्थः । लावाणकं क्षणमपि त्यक्तुमनिच्छन्तमपि राजानं बलादिव महता यत्नेनादाय सर्वे मन्त्रिणस्ततोऽन्यत्र गता इति यावत् । निष्क्रान्ते = निर्गते । प्रोषितानि = अपगतानि, नक्षत्राणि, चन्द्रश्च यस्मात्तत्–प्रोषितनक्षत्रचन्द्रम् = अपगतचन्द्रतारकम् । नभ इव = गगनमिव । अरमणीयः = अमनोहरः । अत्र ग्रामस्य नभःसादृश्यं, राज्ञश्चन्द्रतुल्यत्वं, मन्त्रिणाञ्च नक्षत्रसादृश्यमित्यवबेयम् । निर्गतोऽस्मि=प्रचलितोऽस्मि । एवञ्चोद्विग्नमनसा मया विद्यायामन-

**तापसी**—सो खु गुणवंतो णाम राआ जो आअन्तुएणावि इमिणा एव्वं पसंसीअदि ।

[ स खलु गुणवान् नाम राजा य आगन्तुकेनाप्यनेनैवं प्रशस्यते ] ।

**चेटी**—भट्टिदारिए ! किंणु खु अवरा इत्थिआ तस्य हत्थं गमिस्सदि ? ।

[ भर्तृदारिके ! किंनु खल्वपरा स्त्री तस्य हस्तं गमिष्यति ? ] ।

**पद्मावती**—( आत्मगतम् ) मम हिअएण एव्व सह मंतिदं ।

[ मम हृदयेनैव सह मन्त्रितम् ] ।

---

अभिनवराजलक्ष्मीः

वसितायामपि राजव्यसनादेव परित्यज्य तं ग्राममन्यत्र विद्याग्रहणाय गम्यते इति तदाशयो बोध्यः ।

गुणवान् = अतिशयेन गुणैरलंकृतः । आगन्तुकेन = पथिकेन । उदासीनेनापीति यावत् । अनेनापि = ब्रह्मचारिणाऽपि । एवम्=इत्थम् । प्रशस्यते= स्तूयते । एतेन विलोभनं नाम मुखसन्धेरङ्गं दर्शितम् । 'गुणाख्यानं विलोभन'मित्युक्तेः । 'किन्नु खलु—' इति वितर्के, परिप्रश्ने च । अपरा = अन्या । तस्या = उदयनस्य । हस्तं गमिष्यति = विवाहविधिना समधिगता भविष्यति ? । 'का खलु सुन्दरी ईदृशं गुणवन्तं पतिं लप्स्यते ?, कया वा स आवर्जितो भविष्यती'त्येवं प्रश्नाशय ऊहनीयः । इत्थं चेट्याः प्रश्नं श्रुत्वा पद्मावत्याह—**ममेति** । हृदयेन = मनोरथेनैव । मन्त्रितम् = आलापः कृतोऽनया चेट्या । 'अहमप्येवमेव विचिन्तयामी'त्याशयः । एवञ्चोदयनानुरागोद्भेदोऽत्रानुसन्धेयः । एतेन समाधानं नाम मुखसन्धेरङ्गमुपदर्शितम् । बीजस्याऽऽधानात् । एवमतिभूमिङ्गतां कथां विच्छेदयितुं ब्रह्मचारी प्राह—

**ब्रह्मचारी**—आपृच्छामि भवन्तौ, गच्छामस्तावत् ।

**उभौ**—गम्यतामर्थसिद्धये ।

**ब्रह्मचारी**—तथाऽस्तु ।

( **निष्क्रान्तः** ) ।

**यौगन्धरायणः**—साधु, अहमपि तत्र भवत्याऽभ्यनुज्ञातो गन्तुमिच्छामि ।

**काञ्चुकीयः**—तत्रभवत्याऽभ्यनुज्ञातो गन्तुमिच्छति किल ।

**पद्मावती**—अय्यस्स भइणिआ अय्येण विना उक्कण्ठिस्सदि ।

[ आर्यस्य भगिनिकाऽऽर्येण विनोत्कण्ठिष्यते ] ।

---

अभिनवराजलक्ष्मीः

आपृच्छामीति । आपृच्छामि = गन्तुमनुमतिं दातुं प्रार्थये । 'आङि नुप्रच्छ्योः'रिति तङ् तु न कृतः, कवित्वादेव । 'निरङ्कुशा हि कवयः' । भवन्तौ= यौगन्धरायण—काञ्चुकीयौ । तावत्—अवधारणे । 'साधयाम' इति पाठेऽपि गच्छाम इत्येवार्थः । 'प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते' इति दर्पणोक्तेः । उभौ = यौगन्धरायण— कञ्चुकिनौ । अर्थसिद्धये = विद्यालाभसिद्धये । तथास्तु=भवद्भिः प्रयुक्ताऽऽशीः सम्पन्नाऽस्तु । निष्क्रान्तः = निर्गतः ।

साधु=शोभनं जातम् । अयं ब्रह्मचारी स्वाभिलषितसिद्धते गतः, अहमपि राजकुमार्याः पद्मावत्या आज्ञामादाय जिगमिषामि स्वकार्यसिद्धये एवेति भावः । यद्वा—साधु = मद्भगिनीरक्षणस्वीकारेण मम मनोरथः सुष्ठु सफल एव, इदानीमवशिष्टकार्यनिर्वाहार्थं गन्तुमिच्छामीत्याशयो बोध्यः । अभ्यनुज्ञातः = दत्तानुज्ञः । [ आज्ञा हो तो ] ।

यौगन्धरायणवाक्यं श्रुत्वा कञ्चुकी पद्मावतीं पृच्छति—तत्रेति । तत्र भवत्या = श्रीमत्या भवत्या पद्मावत्या । किलेति प्रार्थनायाम्, अनुज्ञा-

**यौगन्धरायणः**—साधुजनहस्तगतैषा नोत्कण्ठिष्यते ।

( **काञ्चुकीयमवलोक्य**— )

गच्छामस्तावत् ।

**काञ्चुकीयः**—गच्छतु भवान् पुनर्दर्शनाय ।

**यौगन्धरायणः**—तथाऽस्तु ।

( **निष्क्रान्तः** ) ।

**काञ्चुकीयः**—समय इदानीमभ्यन्तरं प्रवेष्टुम् ।

**पद्मावती**—अय्ये ! वंदामि ! [ आर्ये, वन्दे ] ।

**तापसी**—जादे ! तव सदिसं भत्तारं लभेहि ।

[ जाते ! तव सदृशं भर्त्तारं लभस्व ] ।

---

अभिनवराजलक्ष्मीः

लाभे वा । उत्कण्ठिष्यते = उत्सुका भविष्यति । एवञ्च 'भवताऽपि सहैवा-ऽस्माभिर्गन्तव्यम् । नैनां विहाय भवताऽन्यत्र गन्तव्य'मित्याशयः । साधुजन-हस्तगता = भवादृशसज्जननिकटस्थिता, भवत्या स्नेहेन परिपालिता च न मम स्मरिष्यतीति भावः । पुनर्दर्शनाय = शीघ्रमेव पुनर्दर्शनं दातुं गच्छेति-गमना-नुमतिवाक्यमेतत् । तथास्तु = शीघ्रमेव पुनरागमिष्यामीत्यर्थः । भवदुक्ता आशीःसिध्यतु इति वाऽर्थः । एतेन भेदनामकं मुखसन्धेरङ्गं दर्शितम् । 'भेदः संहतभेदन'मित्युक्तेः ।

कञ्चुकी पद्मावतीं प्रत्याह—समय इति । अभ्यन्तरं प्रवेष्टुम् = पट-मण्डपान्तर्गन्तुम् । 'कालसमयवेलास्वि'ति तुमुन् । सन्ध्याकालः समुपस्थितः, अतो गृहाभ्यन्तरं प्रवेष्टुं समयोऽयमागतः, अन्तःप्रविशेत्यर्थः । गृहाभ्यन्तरं प्रवेष्टुमिच्छन्ती पद्मावती तापस्या सप्रणाममनुज्ञामादत्ते—अय्ये इति । वन्दामि = प्रणमामि । जाते=पुत्रि ! । तव सदृशं=स्वानुरूपम् । अहम्=अहमपि ।

**वासवदत्ता**—अय्ये ! वंदामि दाव अहं ।

[ आर्ये ! वन्दे तावदहम् ] ।

**तापसी**—तुवं पि अइरेण भत्तारं समासादेहि ।

[ त्वमप्यचिरेण भर्त्तारं समासादय ] ।

**वासवदत्ता**—[1]अणुग्गहीदह्मि ।

[ अनुगृहीताऽस्मि ] ।

**काञ्चुकीयः**—तदागम्यताम् । इन इतो भवति ! ।

सम्प्रति हि—

**खगा वासोपेताः, सलिलमवगाढो मुनिजनः,**
**प्रदीप्तोऽग्निर्भाति, प्रविचरति धूमो मुनिवनम् ।**

---

अभिनवराजलक्ष्मीः

अचिरेण=त्वरितमेव । भर्त्तारं=प्रोषितं स्वभर्त्तारम् । समासादय=प्रतिलभस्व । [2]अनुकम्पिताऽस्मि । भवत्या आशीर्वादेन लब्धजीविताऽस्मि[2] । तत्=अभ्यन्तरगमनवेला यतोऽतिक्रामति, अतः । आगम्यताम्=अन्तर्गच्छ । इत इतः= अनेन मार्गेण अन्तः प्रविशतु भवति ! ।

'अन्तः प्रवेष्टुं समय' इत्युक्तं समर्थयते—सम्प्रतीति । सम्प्रति हि = इदानीं हि । अस्य श्लोकेन सहैवाऽन्वयो बोध्यः ।

खगा इति । खगाः = पक्षिणः । वासमुपेताः—वासोपेताः = स्वस्वनीडान्युपगताः । द्वितीयेति योगविभागात्सुपेति वा समासः । किञ्च—मुनय

---

१ यद्यपि तापस्या पद्मावत्या अपि आशीः प्रयुक्ता, परन्तु तया तत्र कुमारभावेनलज्जया प्रतिवचनं नोक्तम् । वासवदत्तया तु प्रौढ्या, भर्तृमङ्गलाकाङ्क्षया च प्रतिवचनं दत्तमिति समयविदः ।

२ भर्तृमङ्गलाकाङ्क्षयाऽऽशीर्गृह्णाति—अनुकम्पिता इति ।

**परिभ्रष्टो दूराद्रविरपि च सङ्क्षिप्तकिरणो**
**रथं व्यावर्त्यासौ प्रविशति शनैरस्तशिखरम् ॥१६॥**

[ निष्क्रान्ताः सर्वे ] ।

## * इति प्रथमोऽङ्कः *

---

अभिनवराजलक्ष्मीः

एव जनः—मुनिजनः = मुनिलोकः । सलिलम् = जलाशयम् । अवगाढः = स्नातुं प्रविष्टः । 'अवगाढ' इति कर्त्तरि क्तः प्रवेशस्य गत्यर्थत्वादेव बोध्यः । अग्निः = यज्ञाग्निहोत्रादिवह्निः । प्रदीप्तः=प्रज्वलितः सन् । भाति = प्रकाशते । सूर्येऽस्तङ्गते सति हि वह्नेः प्रतिभानं प्रसिद्धमेव । धूमः=यज्ञाद्यग्निसमुद्भूतो धूमश्च । मुनिवनं = तपोवनम् । प्रविचरति = समन्ततो व्याप्नोति ।

किञ्च—दूरात्=उच्चैः शिखरात् । परिभ्रष्टः=अधोदेशे पतित इव । असौ= गगनगतः । रविरपि=सूर्योऽपि । सङ्क्षिप्ताः किरणा येनासौ—सङ्क्षिप्तकिरणः= उपसंहृतमयूखः । मन्दीभूतरश्मिरिति यावत् । रथं व्यावर्त्य=त्रिलोकीजङ्घालं स्वरथं निवार्य । शनैः = मन्दं मन्दम् । अस्तस्य शिखरम्—अस्तशिखरम् = अस्ताचलशृङ्गम् । प्रविशति=आश्रयते । एवञ्च अस्तमनवेला प्रवर्त्तते, त्वरितं भवती गृहाभ्यन्तरं प्रविशत्वित्याशयः । **शिखरिणी वृत्तम्** ॥१६॥

**सर्वे इति** । 'अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः' इति भरत-दर्पणकृदाद्युक्तेरन्ते सर्वपात्रनिर्गमनमिहोपन्यस्तम् ।

**प्रथमोऽङ्क इति** । अङ्कलक्षणन्तु दशरूपके—

'प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः ।
अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥' इति ।

इति श्रीगुरुप्रसादशास्त्रिविरचितायां प्रतिपदव्याख्यानभूतायां स्वप्नवासवदत्ताऽभिनवराजलक्ष्म्यां प्रथमोऽङ्कः ।



# अथ द्वितीयोऽङ्कः ।

## ( ततः प्रविशति चेटी ) ।

**चेटी**—कुञ्जरिए ! कुञ्जरिए ! कहिं कहिं भट्टिदारिआ पदुमावदी ? । किं भणासि—"**एसा भट्टिदारिआ माहवीलदामण्डवस्स पस्सदो कन्दुएण कीलदि**"त्ति । जाव भट्टिदारिअं उवसप्पामि । (परिक्रम्याऽवलोक्य—) अम्मो ! इअं भट्टिदारिआ उक्करिदकण्णचुलीएण वाआमसञ्जादसेदबिन्दुविइत्तिदेण परि-

---

अभिनवराजलक्ष्मीः

अत्र द्वितीयेऽङ्के पूर्वाङ्कनिक्षितोद्मानुरागरूपबीजस्य परिपोषः कन्दुकक्रीडाप्रसक्तपद्मावती-सखीसंवादरूपेण बोधनीयः । तत्र कन्दुकक्रीडाप्रसक्तपद्मावतीप्रवेशं सूचयितुं प्रवेशकमारचयति—**तत इति** । कन्दुकक्रीडाप्रसक्तपद्मावतीप्रवेशाऽनन्तरम् । चेटी = पद्मावतीदासी । 'कुञ्जरिके' इति प्रविष्टचेटीकृतं स्वसजातीयचेट्यन्तरसम्बोधनम् ।

प्रवेशकलक्षणन्तु दर्पणे —

'**प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः**' । इति ।

'कुत्र-कुत्रे'ति सम्भ्रमे द्वित्वम् । 'भण क्व वर्त्तते खलु भर्तृदारिका पद्मावती'त्यर्थः । अप्रविष्टया कुञ्जरिकयाऽनुक्तमपि उत्तरं श्रुतमिवाऽभिनयन्ती चेटी स्वयमेव ब्रूते—**किमिति** । किमेवमुत्तरं ददासि यत्—'पद्मावती माधवीलतामण्डपस्य पार्श्वे कन्दुकेन क्रीडती'ति ? । अत्र कुञ्जरिकयाऽनुक्तमपि तदुक्तत्वेन स्वयमेव प्राह चेटीत्यवधेयम् । इत्थमाभाषणञ्च

**पद्मावती**—अय्ये ! भोदु दाणिं एत्तअं ।

[ आर्ये ! भवत्विदानीमेतावत् ] ।

**वासवदत्ता**—हला ! अदिचिरं कन्दुएण कीलिअ अहिअ-सञ्जादराआ परकेरआ विअ दे हत्था संवुत्ता ।

[ हला ! अतिचिरं कन्दुकेन क्रीडन्त्या अधिकसञ्जातरागौ ( अहित-सञ्जातरागौ ) परकीयाविव ते हस्तौ संवृत्तौ ] ।

**चेटी**—कीलदु कीलदु दाव भट्टिदारिआ । णिव्वत्तीअदु दाव

अभिनवराजलक्ष्मीः

भावः । आर्ये=मान्ये आवन्तिके ! । एतावत् = एतावन्मात्रमेव । 'क्रीडन'मिति शेषः । भवतु = आस्ताम् । इतोऽधिकं क्रीडनं नेच्छामीत्याशयः । बाढं-परिश्रान्ताऽस्मीति यावत् ।

क्रीडापरिश्रान्तां पद्मावतीं दृष्ट्वा तदुक्तमनुमोदमाना वासवदत्ता प्राह—**हला इति** । अतिचिरं=बहुकालं यावत् । क्रीडन्त्याः=कन्दुकेन क्रीडां कुर्वत्याः। अधिकं सञ्जातो रागो ययोस्तौ—अधिकसञ्जातरागौ = कन्दुकताडनादिवशो-द्भूतपरिश्रमप्रवृद्धरागाऽरुणौ । परकीयाविव = अन्यदीयाविव । परिश्रमजड-तया यथावद्व्यापारयितुमशक्यत्वात् , अस्वतन्त्रत्वसाम्येन परकीयत्वोक्तिः ।

परकीयाविवेत्युक्त्या–परकीयपक्षे-'अहिअसंजाअराआ' इत्यस्य—**अहित-संजातरागा**'विति्छया बोध्या । अहिते = रिपौ, सञ्जातो रागः = अनुरागो ययोस्ताविति च विग्रहः । व्यापारयितुमशक्यो भारभूताविति शत्रुपक्षगत-त्वोक्तिः । शत्रुषु अनुरक्तो हि परकीयो भवत्येवेति गौडाः । एवञ्च बाढं श्रान्ताऽसि, अलं क्रीडनेन, आस्तां तावदिति भावः ।

तदसहमाना कन्दुकक्रीडनमेव साकूतं मोदमाना चेटी तावदाह—**कीलदु**

**अअं कण्णाभावरमणीओ कालो ।**

[ क्रीडतु क्रीडतु तावद्भर्तृदारिका । निवर्त्यतां तावदयं कन्याभाव-रमणीयः कालः ] ।

**पद्मावती**—अय्ये ! किं दाणिं मं ओहसिदु विअ णिज्झाअसि ? । [ आर्ये ! किमिदानीं मामुपहसितुमिव निध्यायसि ? ] ।

**वासवदत्ता**—णहि णहि, हला ! अधिअं अज्ज सोहदि । आभदा विअ दे अज्ज वरमुहं पेक्खामि ।

---

अभिनवराजलक्ष्मीः

इति । भृशं क्रीडतु इत्यर्थः । 'नित्यवीप्सयो'रिति द्वित्वम् । कुत एतदत आह—**णिव्वत्तीति** । निवर्त्यतां = सुखमुपभुज्यताम् । अयं = समुपनतोऽप्य-चिरस्थायी । कन्याया भावेन रमणीयः—कन्याभावरमणीयः = बाल्यावस्था-मनोहरः । कालः=समयः । यथेच्छमुपभुज्यतां तावदयं बालभावमधुरः समयः, अचिरादेव समुपारूढे यौवने, निर्वृत्ते च विवाहे, क्रीडनादिव्यापारस्य स्वत एव निवृत्तेः पुनरस्य समयस्य लाभाऽसम्भवादित्याशयः । एतेन यौवनोद्भेदो, विवाहसमयोपगमश्च सूचित इत्यवधेयम् ।

कन्दुकक्रीडाव्यायाममनोहरां पद्मावतीं साकूतं परिपश्यन्तीं वासवदत्तां पद्मावती तावदाह—**अय्ये इति** । इदानीं = सम्प्रति । मामुपहसितुमिव = कमपि अभिनवं ममोपहासं कर्तुमिव । किं निध्यायसि = किंमां निर्वर्णयसि ? । किं मां साकूतं पश्यसि । 'निर्वर्णनन्तु निध्यान'मित्यमरः । यन्मां त्वं परिपश्यसि तन्नूनं मे कमपि उपहासं कर्तुमित्याशयः ।

नहि नहि=न खलु न खलु त्वामुपहसितुं पश्यामि । सम्भ्रमाद् द्विरुक्तिः ।

[ नहि नहि। हला! अधिकमद्य शोभते। अभित इव तेऽद्य वरमुखं पश्यामि ]।

अभिनवराजलक्ष्मीः

किन्तर्हि मां निध्यायसीत्यत आह—**अधिकमद्येति।** हला—हे प्रियसखि! अद्य=सम्प्रति। अधिकं=नितान्तं। शोभसे=विद्योतसे। चारुतां वहसि। 'शोभते'इति पाठे—'भवती'ति शेषः। अतएव—अभितः=सर्वतः। सर्वतोभावेनेति यावत्। ते=तव। वरञ्च तन्मुखञ्च—वरमुखं=मनोहरमतिसुन्दरञ्च मुखम्। पश्यामि=निर्वर्णयामि। न त्वामुपहसितुं ते मुखं पश्यामि, किन्तर्हि? अतिमनोहरं हृदयाकर्षकं ते प्रियं मुखं पश्यामीत्याशयः।

अत्र अपरे तु-"ते=तव। त्वामिति यावत्। अभितः=सर्वतः, अग्रतः पश्चात्पृष्ठतश्च-वरस्य=वरणीयस्य त्वदभिमतस्य यूनः, मुखं=सांमुख्यं-सौन्दर्योत्सुकत्वं, ते पश्यामि=विभावयामि। एवञ्च तव वपुः प्रियं कञ्चन युवानमभिलष्यतीत्याशयः।

यद्वा—वरस्य=वरयितुः, मुखं=वदनं, ते=तव, अभितः=सर्वतः, पश्यामि। एवञ्च वरास्त्वां वरयितुं समेष्यन्तीति तर्कयामीत्यर्थः। अथवा—वरस्य=कन्यावरणस्य, मुखमिव मुखं=तत्पूर्वाङ्गभूतं माङ्गल्किं कर्म, पश्यामि=आचरादेव ते विवाहो भावीति तर्कयामीत्यर्थः—"इत्येवं परिहासपरतया व्याचक्रुः। तत्राऽक्षरस्वरसः कथमिमर्थमनुसन्धत्ते, 'न खलु न खलु' इति निषधोक्तिश्च कथं सङ्गच्छते?—इति तु एव प्रष्टव्याः।

१ केचित्तु—सद्यस्तव परिणयो भावी, ततः पतिगृहङ्गतायास्ते मुखदर्शनं दुर्लभमेव स्यादिति सतृष्णं त्वदाननं पश्यामि—इत्यर्थमाहुः।

. गौडास्तु—तत्र मुखेन सह वरस्य=भाविवरस्य मद्भ्रातुर्महासेनपुत्रस्य मुखं मनसा विचिन्त्य उभयोः सौन्दर्यं, परस्परानुरूपताञ्च तर्कयामीत्यर्थः। अत एव—'भविष्यन्महासेनवधु'इति सम्बोधनं प्राक्तनमग्रे—इत्याहुः'। यद्वा अभितः=सर्वतस्त्वद्योग्यं वरं कञ्चन मनसाऽन्विष्यामीत्यर्थः।

**पद्मावती**—अवेहि । मा दाणिं मं ओहसि ।

[ अपेहि । मा इदानीं मामुपहस ] ।

**वासवदत्ता**—एसाह्मि तुह्णीआ भविस्सम्महासेणवहू ! ।

[ एषाऽस्मि तूष्णीका भविष्यन्महासेनवधु ! ] ।

**पद्मावती**—का एसो महासेणो णाम ? ।

[ क एष महासेनो नाम ? ] ।

**वासवदत्ता**—अत्थि उज्जइणीओ राआ पज्जोदो णाम । तस्स बलपरिमाणणिव्वुत्तं णामहेअं 'महासेणो' त्ति ।

[ अस्त्युज्जायनीयो राजा प्रद्योतो नाम । तस्य बलपरिमाणनिर्वृत्तं नामधेयं 'महासेन' इति । ]

---

अभिनवराजलक्ष्मीः

वासवदत्तया—'सुन्दरतरन्ते मुखं पश्यामी' त्येवमुपन्यस्तां स्वप्रशंसां निवारयन्ती पद्मावती प्रणयकुपिता सती सविलक्षं प्राह—**अपेहीति** । अपसर । दूरे भव । [ 'चलो हटो' ] । इदानीं मां मा उपहस = ममोपहासं मा कार्षीः, नाहं सुन्दरीत्याशयः । तवायमुपहासो न मां प्रीणातीत्यर्थो वा । यदि त्वं मद्वाक्यमुपहासपरतया मन्यसे तर्हि—तूष्णीं शीला—तूष्णीका = मौनावलम्बिनी । 'शील को मलोपश्चे'ति को मलोपश्च । महासेनस्य वधूः—महासेनवधूः । भविष्यन्ती चासौ महासेनवधूश्च—भविष्यन्महासेनवधूः । तत्सम्बुद्धौ—हे भविष्यन्महासेनवधु = हे भाविमहासेनस्नुषे ! । [ इदं नर्म-नामकं प्रतिमुखसन्धेरङ्गम् । 'प्रतिहासवचो नर्मे'त्युक्तेः ] । महासेनपुत्रस्तव हृद्गतोऽभिलषितो वर इत्यनेन सम्बोधनेन सूचितम् । 'वधूः पत्न्यां स्नुषा-नार्यो'रिति हैमः । यद्येष तथ्योऽपि विषयस्तवोपहास इति भासते तर्हि अद्यप्रभृति मानमेव स्थास्यामि, न त्वां प्रति भूयस्तथा कथयिष्यामीत्याशयः ।

अश्रुतपूर्वं 'महासेन' इति नाम श्रुत्वा पद्मावती पृच्छति—**क एष इति** । 'उज्जयिन्या' इति पाठः । उज्जयिन्याः = विशालायाः । '**उज्जायनीय**' इति

**चेटी**—भट्टिदारिआ तेण रण्णा सह सम्बन्धं णेच्छदि ।

[ भर्तृदारिका तेन राज्ञा सह सम्बन्धं नेच्छति ] ।

**वासवदत्ता**—अह केण खु दाणिं अभिलसदि ? ।

[ अथ केन खल्विदानीमभिलषति ? ] ।

**चेटी**—अत्थि वच्छराओ उअअणो णाम । तस्स गुणाणि भट्टिदारिआ अभिलसदि ।

[ अस्ति वत्सराज उदयनो नाम । तस्य गुणान्भर्तृदारिकाऽभिलषति ] ।

**वासवदत्ता**—(**आत्मगतम्**—) अय्यउत्तं भत्तारं अभिलसदि !

( **प्रकाशम्**— ) केण कारणेण ? ।

---

अभिनवराजलक्ष्मीः

पाठेऽपि भवार्थे 'वृद्धाच्छ' इतिच्छे स एवार्थः । तस्य = प्रद्योतस्य । बलस्य= सेनायाः, परिमाणेन = मानेन, इयत्तया, निर्वृत्तं = निष्पन्नम् । अन्वर्थमिति यावत् । 'महासेन' इति नामधेयमस्तीति सम्बन्धः । एवञ्च महाबलस्ते श्वशुरस्तथैव च त्वद्भर्ताऽपीति सूचितम् । भर्तृदारिका = राजकुमारी पद्मावती । तेन राज्ञा = प्रद्योतेन सह । सम्बन्धः = तस्य राज्ञः—पुत्रवधूभावम् । नेच्छति = नाभिवाञ्छति । तस्य पुत्रेण विवाहं नानुमनुते इत्यर्थः । अथेति प्रश्ने । अभिलषति—'सम्बन्ध'मिति शेषः । केन सह सम्बन्धमात्मनोऽभिलषति पद्मावतीति प्रश्नाशयः । वत्सराजः=वत्सदेशाधिपः । नामेति प्रसिद्धौ । एतेन 'उद्भेद' नामकमङ्गं दर्शितम् ।

तस्य=उदयनस्य । गुणान्=दाक्षिण्यौदार्यसौन्दर्यादीन् । उदयनं भर्तृत्वेन एषा कामयते इति भावः । उदयनानुरागमस्याः समाकर्ण्य साश्चर्यमात्मगतं वासवदत्ता कथयति—**अय्यउत्तमिति** । आश्चर्यमेतत्, मद्भर्तारमेवैषा

[ आर्यपुत्रं भर्त्तारमभिलषति ! । केन कारणेन ? ] ।

**चेटी**—'साणुक्कोसो'त्ति । [ सानुक्रोश इति ] ।

**वासवदत्ता**—( आत्मगतम्- ) जाणामि-जाणामि । अअं वि जणो एव्वं उम्मादिदो ।

[ जानामि जानामि । अयमपि जन एवमुन्मादितः ] ।

**चेटी**—भट्टिदारिए ! जदि सो राआ विरूपो भवे ? ।

[ भर्तृदारिके ! यदि स राजा विरूपो भवेत् ? ] ।

**वासवदत्ता**—णहि-णहि । दंसणीओ एव्व ।

[ नहि नहि । दर्शनीय एव ] ।

---

अभिनवराजलक्ष्मीः

कामयते इति । केन कारणेन = किमत्र कारणमित्यर्थः । केन खलु गुणेनैषा उदयनमभिलषतीति प्रश्नाशयः । 'सर्वश्राव्यं प्रकाशं स्या'दिति दर्पणकृत् ।

सानुक्रोशः=सदयः । यो राजा मृतामपि स्वभार्यां वासवदत्तामेवं शुशोच तस्य सकृपत्वं किं नाम वक्तव्यम् ! । तेनैव च गुणेन भर्तृदारिका तस्मिन्ननुरक्तेति भावः । अयमपि जनः=मल्लक्षणो जनः । अहमपीति यावत् । एवम्=इत्थमेव । उन्मादितः = कदाचित्तदनुरागपरवशीकृतः । विवाहात्पूर्वम् । उज्जयिन्यामुदयनाद्वीणां शिक्षयन्ती वासवदत्ता उदयने सानुक्रोशत्वादिगुणगणान् दृष्ट्वाऽनुरक्ता सती तेन सह पितरावनापृच्छ्यैव पलाय्य कौशाम्बीमागता । कौशाम्ब्याञ्च तयोर्विवाहः समजनीत्यैतिह्यम् । तस्य सानुक्रोशत्वमुद्वीक्ष्यैवोन्मत्तेवाहं स्वपितरावपि परित्यज्य तं वृतवतीत्याशयः ।

**भवेदिति** । केवलं ब्रह्मचारिमुखात्तस्य गुणानाकर्ण्य तत्रानुरागं भवती धत्ते । अथ स गुणवानपि राजा—विरूपः = त्वदननुरूपः—असुन्दरो वा वृद्धो वा भवेत्तर्हि तेन सह परिणयं भवती स्वीकरिष्यति नवेति प्रश्नाशयः ।

**पद्मावती**—अय्ये ! कहं तुमं जाणासि ? ।

[ आर्ये ! कथं त्वं जानासि ] ।

**वासवदत्ता**—(आत्मगतम्-) अय्यउत्तपक्खवादेण अदिक्कंदो समुदाआरो । किं दाणि करिस्सं ? । होदु । दिट्ठं ।

( **प्रकाशम्-** ) हला ! एव्वं उज्जइणीओ जणो मंतेदि ।

[ ( आत्मगतम् ) आर्यपुत्रपक्षपातेनाऽतिक्रान्तः समुदाचारः । किमिदानीं करिष्यामि ! भवतु । दृष्टम् । (प्रकाशं-) हला ! एवमुज्जयिनीयो जनो मन्त्रयते] ।

---

अभिनवराजलक्ष्मीः

तस्य स्वभर्त्तुर्विरूपताकलङ्कमसहमाना वासवदत्ता तावदाह—**नहीति** । नहिनहि = न खलु स विरूपः । किन्तर्हि—दर्शनीय एव = सुन्दरः, पद्मावत्या अनुरूपश्च ।

जानासि = उदयनं कथं नाम त्वं परिचिनोषि ? । दृष्ट्वा वा, श्रुत्वा वा तं वेत्सि ? । आर्यपुत्रे पक्षपातः—आर्यपुत्रपक्षपातः, तेन–आर्यपुत्रपक्षपातेन = भर्त्तुरसुन्दरत्वाऽभियोगमसहमानया मया भर्त्तृस्नेहवशेन । अतिक्रान्तः उल्लङ्घितः । समुदाचारः = अज्ञातवासानुकूल आचारः, उदासीनभावयोग्य आचारश्च । किमिति । 'कथमियमुदयनमहाराजं जानाति' ? 'किमनया सह तस्य परिचयः' ?, 'कथं वा तथा' ? इत्यादिशङ्कानां समाधानं कथं करिष्यामीत्याशयः । भवतु = अलं चिन्तया । दृष्टम् = प्रश्नस्य यथोचितमुत्तरं मनसि प्रतिभातम् । [ 'उत्तर सूझ गया' 'रास्ता निकल आया' ] ।

एवं='दर्शनीय उदयन' इत्येवम् । उज्जयिनीयः=उज्जयिनीनिवासी जनः मन्त्रयते=अभिधत्ते । एवञ्च नाऽहमेवं वदामि, न च परिचितोऽपि मे ।

**पद्मावती**—जुज्जइ। ण खु एसो उज्जइणीदुल्लहो। सब्वजण-मणाभिरामं खु सोभग्गं णाम।

[ युज्यते, न खल्वेष उज्जयिनीदुर्लभः। सर्वजनमनोऽभिरामं खलु सौभाग्यं नाम ]।

---

अभिनवराजलक्ष्मीः

उदयनः, किन्तु यत्र मे जन्माऽभूत्—उज्जयिन्यां, तत्रत्यो लोक एव वार्ता—प्रसङ्गेन एवं भणति, तत एव मया तथा श्रुतम्, तदेव च मयाऽप्युक्तम्, नात्र काऽपि शङ्का कार्येत्याशयः। एतेन स्वसम्बन्धगूहनमाचरितमिति बोध्यम्। वासवदत्तोक्तमुत्तरं युक्तमिति मन्यमाना पद्मावती प्राह—**युज्यते इति**। युज्यते=सम्भाव्यते। उचितमेवैतदित्यर्थः। युक्तत्वमेव द्रढयति—**नेति**। एष=उदयनः। उज्जयिनीदुर्लभः=उज्जयिनीनिवासिलोकैरसुलभः। उज्जयिनीनिवासिनी खलु वासवदत्तेति—श्वशुरगृहमेवोज्जीयिनी—तस्येति—वासवदत्ताविवाहप्रसंगेन तस्य उज्जयिन्यां गमनात्तद्देशभवैर्लोकैर्युक्तमेव तस्य प्रसङ्गेन प्रशंसनमिति भावः। **सर्वजनेति**। तस्य=उदयनस्य सर्वजनमनोऽभिरामं=सकललोकहृदयावर्जनप्रभविष्णु। खलु=निश्चयेन। सौभाग्यं नाम=सौभाग्यमित्युच्यते। तदेव खलु सौभाग्यं यत्सामान्येन नाऽतिपरिचितेनाऽपि लोकेन वर्ण्यते। एवञ्च यं खलु उदयनं साधारणोऽपि पुरवासिलोक एवं प्रशंसते, तस्यैव सौभाग्यं—सौभाग्यपदमर्हति। तन्नूनमसौ राजा परमसुभगो भवेदिति भावः। सौभाग्यं=सौन्दर्यम्। सर्वजनमनोहरत्वमिति यावत्। एवञ्च सुदृढोऽनुरागोऽस्या राजनि जात इत्यवधेयम्। एतेनाऽनुरागपरिपोषणमित्यवधेयम्।

एवं दृढेऽनुरागे सूचिते पद्मावतीप्रदानवार्त्तां श्रावयितुं, पद्मावतीमानेतुञ्च

( तत[1]ः प्रविशति धात्री ) ।

**धात्री**—जेदु भट्टिदारिआ । भट्टिदारिए ! दिण्णासि ।

[ जयतु भर्तृदारिका । भर्तृदारिके ! दत्ताऽसि ! ] ।

**वासवदत्ता**—अय्ये ! कस्स ? [ [ आर्ये ! कस्मै ? ] ।

**धात्री**—वच्छराअस्स उदअणस्स । [ वत्सराजायोदनाय ] ।

**वासवदत्ता**—अह कुसली सो राआ ? ।

[ अथ कुशली स राजा ? ] ।

**धात्री**—कुशली ! सो आअदो, तस्स भट्टिरादारिआ पडिच्छिदा अ ।

[ कुशली ! स आगतः, तस्मै[2] भर्तृदारिका प्रतीष्टा च ] ।

---

अभिनवराजलक्ष्मीः

धात्र्याः प्रवेशमाह—तत इति । ततः = इत्थमनुरागबीजदार्ढ्यानन्तरम् । धात्री=उपमाता [धाय] । 'धात्री जनन्यामलकीवसुमत्युपमातृषु'इति मेदिनी ।

जयतु = उत्कर्षेण वर्द्धताम् । दत्ताऽसि = वाचा दत्तासि । 'कस्मै' इत्यस्य 'दत्तेय'मिति शेषः । वत्सराजाय=कौशाम्बीपतये । उदयनाये'त्यस्य—'दत्तेय' मिति शेषः । 'वत्सराजाये'सि कथनं महत्त्वसूचनायैवेत्यवधेयम् ।

ब्रह्मचारिमुखात्तस्योदयनस्य वासवदत्तावियोगेन पराङ्काष्ठाङ्गता विरहावस्था श्रुताऽसीत्, एवञ्च स तु नितरामस्वस्थो भवेत्, तत्कथन्तस्मै पद्मावती दत्तेति सम्भाव्यते इत्याशयेनाह—अथेति । अथेति प्रश्ने । कुशली = स्वस्थः, प्रकृतिस्थः । स राजा = कौशाम्बीपतिरुदयनः ।

धात्री तदुत्तरमाह—कुशलीति ।। न केवलं कुशली एव, किन्तर्हि—इह= राजगृहे, आगतः=स्वैरमायातः । किञ्च—न केवलमायात एव- किंतर्हि, तस्य =उदयनस्य, भर्तृदारिका=राजपुत्री पद्मावती, प्रतीष्टा च=गृहीता । वाचा दत्ता

---

१ 'प्रविश्य धात्री'ति क्वचित्पाठः । २ 'तस्य' पाठान्तरम् ।

**वासवदत्ता**—अच्चाहिदम् ! । [ अत्याहितम् ! ] ।

**धात्री**— किं एत्थ अच्चाहिदं ? [ किमत्रात्याहितम् ] ।

**वासवदत्ता**—ण हु किञ्चि, 'तह णाम सन्तप्पिअ उदासीणो होदि' त्ति ।

[ न खलु किञ्चित्, 'तथा नाम सन्तप्योदासीनो भवती'ति ] ।

अभिनवराजलक्ष्मीः

तेन गृहीता । तस्येति सम्बन्धसामान्यविवक्षया षष्ठी । 'प्रतीष्टे'त्यस्य—'गृहीते'त्यर्थे तु 'तस्ये'त्यस्य 'तेने'त्यर्थो बोध्यः । एवञ्च स खलु सर्वथा कुशली, प्रकृतिस्थश्चेति सूचितम् । एतेन प्रकृतार्थसमारम्भात्–'करण'नामकं मुखसन्धेरङ्गं दर्शितम् ।

उदयनस्य भार्यान्तरप्रग्रिहवृत्तान्तं श्रुत्वा वासवदत्ता सखेदमाह—**अत्याहितमिति** । मम महदेव भयमुपस्थितमित्यर्थः । 'अत्याहितं महाभीति'रित्यमरः । उदयननवीनपरिणयेन महन्मे भयमुपस्थितं, हा हन्त ! नष्टाऽस्म्यहं—मन्दभाग्येत्यर्थः । अत्र = पद्मावतीप्रदाने, उदयनस्य नवीनपत्नीपरिणये च । अत्याहितं = किमनिष्टम्, अनुचितमन्याय्यं वा भवती मन्यते ? इति प्रश्नाशयः । न खलु = नैव किञ्चित् । नाऽधिकमनौचित्यं किन्तु स्वल्पमात्रमिदमेव वक्ष्यमाणं यत्—तथा नाम=ब्रह्मचारिवर्णितप्रकारेण, अतिमात्रम्, अतिकरुणञ्च, सन्तप्य = वासवदत्तावियोगसन्तापं बहिः प्रदर्श्य, सहसैव—उदासीनो भवतीति=वासवदत्ताविरहव्यथां विस्मृत्य नवीनपरिणयकर्मण्यासक्तो भवतीति ।

यद्वा—न खलु किञ्चित् = न खलु अत्याहितं किञ्चित् ?, किन्तु अस्त्येव अत्याहितमिति—काक्वा[1] योजनीयम् । अत्याहितमेव प्रदर्शयति—**तथा नामे-**

१ ये तु—'अत्याहितमित्यस्य–'अत्याहितं महाभीतिः कर्म जीवानपेक्षि चे'त्यमरप्रामाण्येन जीवानपेक्षि कर्मेति व्याचक्षते, ते तु प्रकृतार्थतत्त्वाऽनभिज्ञा एवेति न तदुक्तमादर्त्तव्यमिति गौडाः ।

**धात्री—** अय्ये ! आअमप्पहाणाणि सुलहपय्यवत्थाणाणि महापुरुसहिअआणि होन्त ।

[ आर्ये ! आगमप्रधानानि सुलभपर्यवस्थानानि महापुरुषहृदयानि भवन्ति ] ।

---

अभिनवराजलक्ष्मीः

ति ।—इति व्याख्येयम् । एवञ्चात्यन्तमनुचितमेतदुदयनस्य, यत्—तथा स्नेहाभिनयं कृत्वा वासवदत्तां सहसैव विस्मृतवानिति भावः[1] ।

पद्मावतीपरिणयनस्वीकारेऽपि उदयनस्य न वासवदत्तायां निःस्नेहत्वमौदासीन्यञ्चेतिरीत्या धात्री तावत्समाधत्ते—**आर्ये इति** । महापुरुषाणाम् = उदयनतुल्यानां महात्मनाम् । आगमः = शास्त्रं, सुहृदुपदेशो, विचारश्च, प्रधानं = प्रमाणभूतं येषान्तानि—आगमप्रधानानि = विचारमुख्यानि । अतएव—सुलभं पर्यवस्थानं येषान्तानि—सुलभपर्यवस्थानानि = अनायाससमाधानानि । स्वल्पेनैव यत्नेन परिहृतशोकवेगानि । यद्वा—आगमः = प्राप्तिः, सहसैव दुःखशोककरुणाकातराण्यपि सुलभपर्यवस्थानानीति व्याख्येयम् । हृदयानि = चेतांसि । एवञ्च—वासवदत्ताशोकं हृदये वहन्नपि लोकमर्यादापालनार्थं सुहृद्वचनादिभिः शोकवेगं निरुद्ध्य विवेकपर्यवस्थापितहृदयः पद्मावतीपरिणयं स्वीचकारेति—नासौ वासवदत्तायां तथा निःस्नेह इत्याशङ्क्यमिति भावः ।

भवत्या यदभिहितं तत्सत्यं भवद्यदि परिणयार्थं पद्मावती तेन स्वयं न प्रार्थिता स्यात् । तद्वद किन्तेनैव सा प्रार्थिता ? अन्यथा वा निष्पन्नमित्या-

---

१ केचित्तु स्थूणानिखनन्यायेन स्वपत्युरनौचित्यं परिजिहीर्षन्ती वासवदत्ता प्राह—**अत्याहितमिति** । तदाशयमबुध्वा धात्र्याः प्रश्नः—**किमिति** । वासवदत्ता स्वपत्युरनौचित्यं पराशयज्ञानायाह—**तथानामेति** । धात्री तदनौचित्यं परिहरति—**'आर्ये इति'** ।—इतिरीत्या व्याचक्षते । नात्रास्माकमादर इति तु गौडाः ।

**वासवदत्ता**—अय्ये ! सअं एव्व तेण वरिदा ? ।

[ आर्ये ! स्वयमेव तेन वृता ? ] ।

**धात्री**—णहि णहि । अण्णप्पओअणेण इह आअदस्स अभिजण-विण्णाणवओरूवं पेक्खिअ सअं एव्व महाराएण दिण्णा ।

[ नहि नहि । अन्यप्रयोजनेनेहाऽगतस्य अभिजनविज्ञानवयोरूपं दृष्ट्वा स्वयमेव महाराजेन दत्ता ] ।

**वासवदत्ता**—(आत्मगतम्-) एव्वं ! अणवरद्धो दाणिं एत्थ अय्यउत्तो ।

[ एवम् ! । अनपराद्ध इदानीमत्रार्यपुत्रः ] ।

---

अभिनवराजलक्ष्मीः

शयेन पृच्छति—**अय्ये** इति । तेन = निष्करुणेन उदयनेन । वरिता = किं-प्रार्थिता, स्वीकृता चेति प्रश्नवाक्यमेतत् । यद्वा तेन स्वयमेव सा वृतेति न तस्य हृदये वासवदत्तानुरागलेशोऽपीत्याशयः । धात्री समाधत्ते—**नहीति** । अन्यप्रयोजनेन = कार्यान्तरप्रसङ्गेन । इहागतस्य = राजगृहे समागतस्य । अभिजनञ्च = सत्कुलञ्च, विज्ञानञ्च = वीणावादनादिकौशलञ्च, वयश्च रूपञ्च एषां समाहारः—अभिजनविज्ञानवयोरूपं, तत् = अभिजनविज्ञानवयोरूपं = कुलशीलविद्याऽवस्थासौन्दर्यादिकं, दृष्ट्वा = समीक्ष्य, स्वयमेव = आत्मनैव, महाराजेन = मगधाधिराजेन दर्शकेन, दत्ता = तस्मै पद्मावती वाचा दत्ता । एवञ्च न तस्य वासवदत्ताऽनुरागशून्यत्वं, तत्र निरनुक्रोशत्वं वा शङ्कनीयमित्युत्तराशयः ।

एवम् = एवमस्ति । ( ऐसी बात है ! तब तो— ) । अनपराद्धः=अत्र विषये अपराधशून्यः । इदानीं = यद्येवं तर्हि सम्प्रति । यद्येवमस्ति तह्यत्र नापराध्यति उदयनः, युक्तमेव तस्य अयाचितलब्धकन्यारत्नस्वीकरणमित्याशयः ।

( प्रविश्य— )

**अपरा चेटी**—तुवरदु तुवरदु दाव अय्या। 'अज्ज एव्व किल सोभणं णक्खत्तं, अज्ज एव्व कोदुअमङ्गलं कारिदव्वं'त्ति—अम्हाणं भट्टिणी भणादि।

[ त्वरतां त्वरतां तावदार्या। अद्यैव किल शोभनं नक्षत्रम्, 'अद्यैव कौतुकमङ्गलं कर्तव्य'मित्यस्माकं भट्टिणी भणति ]।

---

अभिनवराजलक्ष्मीः

इत्थं वाग्दानं सूचयित्वा विवाहमङ्गलादिसूचनाय पद्मावतीनयनाय च चेटीं प्रवेशयति—**प्रविश्येति**। अपरा = धात्रीव्यतिरिक्ता। चेटी—इत्थं प्राहे'ति शेषः।

त्वरतां = शीघ्रमागच्छतु तावद्भवती पद्मावतीं गृहीत्वाऽन्तःपुरम्। आर्ये = धात्रि!। शोभनं = विवाहयोग्यम्। अद्यैव=इदानीमेव। कौतुकमेव मङ्गलं—कौतुकमङ्गलं = विवाहसूत्रबन्धनात्मकं लौकिकं माङ्गलिकं कर्म। कर्त्तव्यं = विधातव्यम्। इति = इत्थम्। अस्माकं भर्त्रिनी=राजपत्नी। भणति= ब्रूते। एवञ्च कौतुकमङ्गलसम्पादनाय भवत्या त्वरितं गन्तव्यमन्तःपुरे पद्मावतीमादायेत्याशयः। 'कौतुकं त्वभिलाषे स्यादुत्सवे नर्महर्षयोः। तथा परम्पराऽऽयाते मङ्गले च कुतूहले॥ विवाहसूत्रगीतादिभोगयोरपि न द्वयोः।' इति मेदिनी।

'दूर्वा यवांकुराश्चैव वालकं चूतपल्लवाः।
हरिद्राद्वय—सिद्धार्थ—शिखिपत्रो-रगत्वचः॥
कङ्कणौषधयश्चैताः कौतुकाख्या नव स्मृताः॥'

—इत्यागमविदः।

उदयनविवाहवृत्तान्तेन खिद्यमाना वासवदत्ता तावदात्मगतं ब्रूते—

**वासवदत्ता**—( **आत्मगतम्**— ) जह जह तुवरदि तह तह अन्धीकरेदी मे हिअअं ।

[ यथा—यथा त्वरते तथा—तथाऽन्धीकरोति मे हृदयम् ] ।

[1]**धात्री**—एदु एदु भट्टिदारिआ ।

[ एत्वेतु भर्तृदारिका ] ।

**(निष्क्रान्ताः [2]सर्वे )** ।

**❀ इति द्वितीयोऽङ्कः ❀**

अभिनवराजलक्ष्मीः

**यथेति** । त्वरते = इयं चेटी पद्मावत्यादिनयनाय त्वरां करोति । अन्धीकरोति = मां शोकावेगे पातयति । शोकक्रोधेर्ष्यादिकलुषितं मे हृदयं करोतीत्याशयः । स्वभर्तुर्विवाहवृत्तान्तेन दृढं पीडिताऽस्मीति यावत् । पद्मावत्यादिगमनेन स्वपत्युर्विवाहं विभाव्य वेपते वराकी वासवदत्तेति हृदयम् । भर्तृदारिका = पद्मावती ।

**इति स्वर्गीयश्रीस्नेहिरामशास्त्रिणां पौत्रेण, स्वर्गीयश्रीशिवनारायणशास्त्रिणां पुत्रेण, श्रीगुरुप्रसादशास्त्रिणा विरचितायां प्रतिपदव्याख्यानभूतायां स्वप्नवासवदत्ताऽभिनवराजलक्ष्म्यां द्वितीयोऽङ्कः ।**

१ पद्मावतीमानेतुं हि धात्र्यागताऽऽसीत् , तां वार्त्ताव्यतिकरेण विलम्बमानां त्वरयितुं पुनश्चेट्याः प्रवेशः । विवाहमङ्गले हि पद्मावत्या आवश्यकता स्फुटैवेति भावः । २ सर्वे=पद्मावतीप्रमुखाः सर्वेऽपि जनाः । 'सर्वा' इति तु पाठः सरलः ।

# अथ तृतीयोऽङ्कः

( ततः प्रविशति विचिन्तयन्ती वासवदत्ता ) ।

**वासवदत्ता**—विवाहामोदसंकुले अन्तेउरचउस्साले परित्तजिअ पदुमावदिं इह आअदह्मि पमदणं। जाव दाणिं भाअधेअ-णिव्वुत्तं दु:खं विणोदेमि ।

---

अभिनवराजलक्ष्मीः

ततः = कौतुकमङ्गलार्थमन्तःपुरे पद्मावत्याः प्रवेशानन्तरम् । विचिन्तयन्ती = वक्ष्यमाणप्रकारेण चिन्तां कुर्वाणा ।

चिन्तामेव प्रकटयति—विवाहेति । विवाहेन = पद्मावतीपरिणयेन, य आमोदः = आ समन्तान्मोदः—प्रमोदः, हर्ष इति यावत् , तेन सङ्कुले = हर्षोन्मत्तबन्धु-बान्धव-दासदासी-परिचारकादिनानाजनाकीर्णे। अन्तःपुरस्य = शुद्धान्तस्य—[ 'महल' 'रनिवास' इत्याख्यातस्य ]—यत्—चतुःशालं = परस्पराभिमुखशालाचतुष्टयं, तत्र—अन्तःपुरचतुःशाले = अवरोधान्तर्वर्त्तिचतुर्दिक्शालासमन्वितेऽङ्गणे । विवाहमण्डपे । 'स्थिता' मिति शेषः । पद्मावतीं परित्यज्य=पद्मावतीं विहाय, तामनापृच्छ्य च । जनसंमर्दपरिक्लिष्टा, शून्यहृदया च । इह = अन्तःपुरे, रहसि वा, यत्प्रमदवनं तत्रागताऽस्मि = प्रपन्नाऽस्मीत्यर्थो बोध्यः । प्रोषितभर्तृकाः स्त्रियो विवाहमण्डपे न मङ्गलप्रदा इति पद्मावतीमङ्गलेच्छया तां विहाय प्रमदवने वासवदत्ता आगतेत्यपि तत्त्वम् ।

यावत् = किञ्चित्कालं, यावदहमत्र विजने तिष्ठामि तावदिति यावत् । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः ।

**(परिक्रम्य–)** अहो अच्चहिदं ! अय्यउत्तो वि णाम परकेरओ संवुत्तो !। जाव उवविसामि।

**(उपविश्य–)** धण्णा खु चक्कवाअवहू जा अण्णोण्णविरहिदा ण जीवइ। ण खु अहं पाणाणि परिच्चजामि। 'अय्यउत्तं पेक्खामि'त्ति एदिणा मणोरहेण जीवामि मंदभाआ।

[ विवाहामोदसङ्कुले अन्तःपुरचतुश्शाले परित्यज्य पद्मावतीमिहाऽऽगताऽस्मि प्रमदवनम्। यावदिदानीं भागधेयनिर्वृत्तं दुःखं विनोदयामि।

**( परिक्रम्य– )**

अहो ! अत्याहितम्, आर्यपुत्रोऽपि नाम परकीयः संवृत्तः !। यावदुपविशामि। **( उपविश्य– )**

---

अभिनवराजलक्ष्मीः

इदानीं = सम्प्रति एकाकिनी। भागधेयनिर्वृत्तं = मदीयेन दुरदृष्टेनोपनतं, दुःखं = प्रियविप्रयोगादिसमुद्भूतं मनस्तापं, विनोदयामि = अतिवाहयामि। अपनयामीति वा। परिक्रम्य = किञ्चित्पदान्तरं गत्वा, प्रमदवनान्तःप्रविश्येति वा। 'चिन्तयती'ति शेषः। चिन्ताप्रकारमाह—अहो इति। अत्याहितं = महद्भयम्। 'मे समुपस्थित'मिति शेषः। किन्तदित्याकाङ्क्षायामाह—आर्यपुत्रोऽपीति। मत्स्वामी उदयनोऽपि। मयि तथा सानुक्रोशोऽपि, अनुरक्तोऽपीत्यपिशब्दार्थः। नामेति निन्दायां निपातः। हा धिक्। परकीयः = अन्यदीयः। पद्मावतीहस्तगत इति यावत्। संवृत्तः = जातः। किं वर्णयामि स्वदौर्भाग्यविलसितमित्याशयः। यावदुपविशामि = उपविशाम्येव। यद्वा—अथवा उपविशामि। यावदिति हि पक्षान्तरे निपातः। दौर्बल्यान्नाहं भ्रमणे शक्तेति भावः।

धन्या खलु चक्रवाकवधूर्याऽन्योन्यविरहिता न जीवति। न खल्वहं प्राणान् परित्यजामि!। 'आर्यपुत्रं पश्यामी'त्येतेन मनोरथेन जीवामि मन्दभागा ]।

**( ततः प्रविशति पुष्पाणि गृहीत्वा चेटी )।**

**चेटी**— कहिं णु खु गदा अय्या आवन्तिआ? ( **परिक्रम्याऽवलोक्य**– ) अम्मो! इअ चिन्तासुण्णहिअआ–णीहारपडिहद-चन्दलेहा विअ अमण्डिदभद्दअं वेसं धारअन्दी पिअङ्गुसिलापट्टए

---

अभिनवराजलक्ष्मीः

चक्रवाकवधूः=चक्रवाकी। 'चक्रवाक' इत्यप्यनुसन्धेयम्। अन्योन्यविरहिता=परस्परं स्वप्रियवियोगे सति। अहन्तु ततोऽपि अधमा, या तादृशप्रियविप्रयोगेऽपि जीवामीति सूचितम्। अथापि तादृशजीवने कारणं दर्शयति–**आर्यपुत्रमिति**। एतेन = उदयनदर्शनाशानिबन्धनेन, मनोरथेन = अभिलाषेण। तद्दर्शनाशयैवाहं जीवामि, नोचेदीदृशेन दारुणेन क्लेशेन परिक्लिष्टाऽहं क्षणमपि जीवितं धारयितुं न शक्नोमीत्याशयः।

ततः=वासवदत्ताचिन्ताऽनन्तरम्। अवन्तिषु भवा आवन्ती, सैव–आवन्तिका = परिव्राजकभगिनीभूमिकां भजमाना राजगृहे आवन्तिकानाम्ना परिचिता वासवदत्ता। परिक्रम्य = किञ्चित्पदान्तरं गत्वा। अवलोक्य = निर्वर्ण्य। अम्मो इति आश्चर्ये देशी। अम्मो=अहो! आश्चर्यमेतत्। [ अरी मैया री' ]। पद्मावतीविवाहमहोत्सवे–समुपस्थितेऽपि महति प्रमोदावसरे चिन्ताविक्लवेयमिति आश्चर्यकारणम्। चिन्तया शून्यं=शून्यमिव ज्ञानरहितं हृदयं यस्याः सा–चिन्ताशून्यहृदया = चिन्ताशून्यमानसा। इह चिन्ता च

उवविट्ठा !। जाव उपसप्पामि। ( **उपसृप्य—** ) अय्ये आवन्तिए ? को कालो तुम अण्णेसामि ।

[ क्व नु खलु गताऽऽर्याऽऽवन्तिका ?। ( **परिक्रम्यावलोक्य—** )

अम्मो ! इयं चिन्ताशून्यहृदया नीहारप्रतिहतचन्द्रलेखेवाऽमण्डितभद्रकं वेषं धारयन्ती प्रियङ्गुशिलापट्टके उपविष्टा !। यावदुपसर्पामि। ( **उपसृत्य-** ) आर्ये आवन्तिके ! कः कालस्त्वामन्विष्यामि ]।

**वासवदत्ता**—किं णिमित्तं ?।

[ किं निमित्तम् ? ]।

---

अभिनवराजलक्ष्मीः

स्वप्रियविषयैव स्यादिति चेटी मन्यते। वस्तुतस्तु 'आर्यपुत्रोऽपि नाम परकीयः संवृत्तः' इत्यादिना स्वपत्युः परिणयान्तरेणैव सेति—तया स्वयमेव सूचितमित्यवधेयम्। नीहारेण = हिमेन, प्रतिहता = आवृता—नीहारप्रतिहता, नीहारप्रतिहता चन्द्रस्य लेखा = कला—नीहारप्रतिहतचन्द्रलेखा, सा इव = हिमाच्छन्नचन्द्रलेखेव हतप्रभा। भद्रमेव भद्रकम्। अमण्डितमपि भद्रकम्—अमण्डितभद्रकम्=अलङ्कारशून्यमपि मनोहारि। वेषं=प्रोषितपतिकानेपथ्यम्। धारयन्ती=दधाना। प्रियङ्गुशिलापट्टके = प्रियङ्गुलताऽधः स्थिते शिलाफलके। प्रियङ्गुश्यामले मरकतशिलाफलके इति वा। 'श्यामा तु महिलाह्वया। लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली' त्यमरः। प्रियङ्गुशिला—'चिक्कणो मनोहरः पाषाणविशेष' इति तु गौडाः। उपसर्पामि = निकटे गच्छामि। कः कालः = भूयान् समयो व्यतीतः। अन्विष्यामि = गवेषयामि। बहोः कालादारभ्य त्वां गवेषयामीति यावत्। किं निमित्तं = किमर्थं मामन्विष्यसि ?।

**चेटी**—अह्माअं भट्टिणी भणादि—'महाकुलप्पसूदा सिणिद्धा णिउण'त्ति—इमं दाव कोदुअमालिअं गुह्मदु अय्या'।

[ अस्माकं भट्टिनी भणति—**महाकुलप्रसूता स्निग्धा निपुणे'ति,** इमां तावत् कौतुकमालिकां गुम्फत्वार्या ]।

**वासवदत्ता**—अह कस्स किल गुह्मिदव्वं ?।

[ अथ कस्मै किल गुम्फितव्यम् ? ]।

**चेटी**—अम्हअं भट्टिदारिआए।

[ अस्माकं भर्तृदारिकायै ]।

**वासवदत्ता—(आत्मगतम्-)** एदं पि मए कत्तव्वं आसी ?। अहो ! अकरुणा खु इस्सरा।

---

अभिनवराजलक्ष्मीः

अस्माकं भट्टिणी=अस्मत्स्वामिनी महाराज्ञी दर्शकपत्नी। भणति=ब्रूते। तदुक्तमेवाह—महेति। महाकुले प्रसूता—महाकुलप्रसूता = उत्तमवंशसम्भूता। स्निग्धा=स्नेहार्द्रहृदया। निपुणा=शिल्पचतुरा। इति=इत्थंभणतीति सम्बन्धः।

अतः—कौतुकमालिकां = मङ्गलमालाम्। विवाहे कन्यया वरेण च स्वसौभाग्यातिशयसम्पत्तये, स्वप्रियहृदयावर्जनाय च नानौषधघटिता या पुष्पमाला धार्यते सा 'कौतुकमालिके'त्युच्यते। यद्वा—कन्यया वरस्य वरणाय कण्ठे या माला निक्षिप्यते सा-कौतुकमालिकेत्युच्यते। गुम्फतु = ग्रथ्नातु। आर्या = श्रेष्ठा। पद्मावत्यर्थं भवत्या कौतुकमाला निर्मीयतामित्याशयः। कस्मै= कस्य कृते। 'कस्य धारणाय गुम्फितव्या कुसुममाले'ति प्रश्नाशयः। भर्तृदारिकायै = पद्मावत्या भर्तृवरणाय, धारणाय च।

एतदपि = मालागुम्फनकर्माऽपि। मालाकारिकादिपरिचारककर्माऽपि मया कर्त्तव्यमासीदिति यावत्। यद्वा-हा धिक् ! सपत्नीसौभाग्यसम्पादककौतुकमालिकागुम्फनमपि मयैव कर्त्तव्यमासीदिति तदर्थो बोध्यः। राज्यापहार-पतिवियोग-

[ एतदपि मया कर्तव्यमासीत् ? अहो ! अकरुणाः खल्वीश्वराः ] ।

**चेटि—**अय्ये ! मा दाणिं अण्णं चिंतिअ। एसो जामादुओ मणिभूमीए ह्वाअदि । सिग्घं दाव गुह्मदु अय्या ।

[ आर्ये ! मा इदानीमन्यच्चिन्तय । एष जामाता मणिभूम्यां स्नायति, शीघ्रं तावद् गुम्फत्वार्या ] ।

---

अभिनवराजलक्ष्मीः

परगृहवासादिषु सत्स्वपि भृत्यचेटिकादिकर्मैवावशिष्टमासीत्तदपीदानीं मया करणीयमिति स्वदौर्भाग्यगर्हणं वैतदितिध्येयम् । अकरुणाः = निर्दयाः । ईश्वराः = प्रभवः । यद्राज्ञी मां दुःखितां पतिविरहखिन्नमानसामेकान्ते स्वदुःखं विनोदयन्तीमपि ईदृशे विरहोद्दीपनपटीयसि कर्मणि योजयति, तन्नूनं राजा वा राज्ञी वा, अन्ये वा अधिकारिणः करुणाशून्यतया परदुःखानभिज्ञा एवेति भावः । किञ्च राजा उदयनो मां तथा स्नेहप्रस्कन्नमानसां विस्मृत्य सहसैव पद्मावतीपरिणये प्रवृत्त इति–ईश्वराः=राजानः–अकरुणा भवन्तीति युक्तमेव लोके भण्यते इत्यप्याशयो बोध्यः । 'ईश्वरा' इत्येकवचनमपि । ईश्वरा=राज्ञी ।

किमपि हृदि चिन्तयन्तीमिव मालानिर्माणकर्मणि औदासीन्यं भजमानाञ्च वासवदत्तां चेटी त्वरयते—**अय्ये इति** ।

इदानीम्=उपस्थितेऽस्मिन् मङ्गलमालिकागुम्फनकर्मणि । अन्यत् = कार्यान्तरम् । मा चिन्तय=मा विचारय । कार्यान्तरं विहाय कौतुकमालिकां गुम्फतु भवतीत्याशयः । 'मा चिन्तयित्वे'ति पाठे–चिन्तयित्वा = चिन्तया, मा = न प्रयोजनमित्यर्थः । मा तावद्विचिन्तयाऽन्यत् । कार्यान्तरविमर्शस्य सम्प्रति न प्रयोजनमित्याशयः । अत्र क्त्वाप्रत्ययोपपत्तिश्चिन्त्यैव ।

---

१ 'चिन्तयित्वे'ति मुद्रितः पाठः ।

**वासवदत्ता**-(आत्मगतम्- ) ण सक्कणोमि अण्णं चिंतेदुं ! ।
( **प्रकाशम्**- ) हला ! किं दिट्ठो जामादुओ ? ।
[ (आत्मगतम्-) न शक्नोम्यन्यच्चिन्तयितुम् ! । ( प्रकाशं-) हला ! किं दृष्टो जामाता ? ) ।

**चेटी**—आम ! दिट्ठो भट्टिदारिआए सिणेहेण, अह्मअं कोदूहलेण अ ।
[ आम ! दृष्टो भर्तृदारिकायाः स्नेहेन, अस्माकं कौतूहलेन च ] ।

**वासवदत्ता**—कोदिसो जामादुओ ? ।
[ कीदृशो जामाता ? ] ।

---

अभिनवराजलक्ष्मीः

ननु कुतस्तवेयं त्वरेत्यत आह—एष इति । एषः = निकटतरवर्त्ती । जामाता = पद्मावतीभर्त्ता । मणिभूम्यां=मणिनिर्मितायां वेदिकायम् । स्नायति = स्नानमाचरति । एवञ्च मङ्गलकृत्यकालोऽतिवर्त्तते, त्वरितं कौतुकमालां विधाय देहीत्याशयः । गुम्फतु = विरचयतु ।

अन्यत् = स्वमनोऽभिलषितम् । चिन्तयितुं = विचिन्तयितुमपि । न शक्नोमि = न समर्थास्मि । हा धिक् ! परगृहनिवासेनेदं दुःखमुपनतं यत्-स्वदुःखं विनोदयितुं चिन्तामपि कर्त्तुमनीशाऽस्मीत्यहो ! पारतन्त्र्यं मे मन्दभाग्याया इत्याशयः । जामाता = पद्मावतीभर्त्ता उदयनः । किं दृष्टः = त्वयाऽवलोकितः किम् ! । आमित्यङ्गीकारे । 'आम्' तु ज्ञानविनिश्चये' इति बोपालितकोशः 'आम'इति पाठे तु—'आम इत्यभ्युपगमे देशी । [ आम = 'हँम्र' 'हाँ' ] ।

भर्तृदारिकायाः = पद्मावत्याः । सम्बन्धसामान्ये षष्ठी । तयेत्यर्थः । एवमग्रेऽपि । पद्मावत्या तु स्नेहेन जामाता = उदयनः, विलोकितः, अस्माभिस्तु कौतूहलेन = कुतुकेन जामाता दृष्ट इत्यर्थः । एतेन स मनोहरोऽदृष्टपूर्वश्चेति सूचितम् ।

**चेटी—** अय्ये ? भणामि दाव ण ईरिसो दिट्ठपुरुवो ।

[ आर्ये ! भणामि तावत्-नेदृशो दृष्टपूर्वः ] ।

**वासवदत्ता—** हला ! भणाहि भणाहि, किं दंसणीओ ? ।

[ हला ! भण-भण, किं दर्शनीयः ? ] ।

**चेटी—** 'सअं[1] खु भअवं सरचावहीणो कामदेवो'[1]त्ति ।

[ 'स्वयं खलु[1] भगवान् शरचापहीनः कामदेव' इति ] ।

---

अभिनवराजलक्ष्मीः

यदि दृष्टस्तर्हि वद—विशेषतस्तस्य गुणान्, कीदृशः स ? इति प्रश्नाशयः । भणामि तावत्=निश्चित्य सत्यं तावद्वदामि । अवधारणेऽत्र तावदिति निपातः । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । पूर्वं दृष्टः—दृष्टपूर्वः, न दृष्टपूर्वः—अदृष्टपूर्वः = पूर्वं कदापि नास्माभिरीदृशो दृष्टः । अनुपम इति यावत् । 'नेदृशो दृष्टपूर्व' इति सन्दिग्धं वचः समाकर्ण्य सुन्दरो वा, विरूपो वेति निश्चेतुं-पुनः पृच्छति—हलेति । हे सखि ! भण-भण = त्वरितं वद । किं दर्शनीयः = किं सुन्दरः ? । हृद्यो वाऽसुन्दरो वेति स्पष्टं वदेति प्रश्नाशयः । अत्र चेट्या हलेत्यामन्त्रणमयुक्तमपि तदावर्जनाय ससत्कारं वासवदत्तया प्रयुक्तम् । परे तु परगृहनिविष्टाया, विनयशीलाया वा समुदाचार एष इति प्राहुः । केचित्तु—'हञ्जे' इति पाठं मन्यन्ते । सत्सकारं, सनिबन्धञ्च वासवदत्तया पृष्टा चेटी प्राह—स्वयमिति । पाठान्तरे—शक्यमिति । शरचापाभ्यां हीनः—शरचापहीनः = केवलं त्यक्तबाणकार्मुकः । कामदेवः = भगवान् मदन एव साक्षात् । इति = इत्थम् । 'जामातृविषये' इति शेषः । शक्यं भणितुं = वक्तुं शक्यते इत्यर्थः । कामदेवतुल्य एव स खलु उदयनो नाम पद्मावतीभर्त्तेति भावः ।

---

१ सक्कं भणिदुं—'परचावहीणो कामदेवोत्ति' इति पाठोऽपि क्वचित्तत्र—'शक्यं भणितुं—शरचापहीनः कामदेवः इति' इतिच्छाया ।

**वासवदत्ता**—होदु एत्तअं।

[ भवत्वेतावत् ]।

**चेटी**—किं णिमित्तं वारेसि ?।

[ किं निमित्तं वारयसि ? ]।

**वासवदत्ता**—अजुत्तं परपुरुससंकित्तणं सोदुं।

[ अयुक्तं परपुरुषसंकीर्त्तनं श्रोतुम् ]।

**चेटी**—तेण हि गुह्मदु अय्या सिग्घं।

[ तेन हि गुम्फत्वार्या शीघ्रम् ]।

**वासवदत्ता**—आणेहि। (**आत्मगतम्**-) [1]इअं गुह्मामि मंदभाआ। ([2]**आवर्जयित्वा, विलोक्य**–) इमं दाव ओसहं किं णाम ?।

---

अभिनवराजलक्ष्मीः

स्वरहस्यभेदशङ्कया, दुःखोद्वेगाऽरतिखेदखिन्ना च वासवदत्ता चेटीं वारयति–भवत्विति। भवत्वेतावत् = आस्तां तावत्। इयमुदयनकथा इहैव समाप्यतामलमनधिकेनेति भावः। किं निमित्तं = कुतो हेतोः। वारयसि = जामातृकथां निवारयसि ?। अयुक्तम् = अनुचितम्। परश्चासौ पुरुषश्च—परपुरुषः, तस्य सङ्कीर्त्तनं = परपुरुषसङ्कीर्त्तनं = परपुरुषगुणादिवर्णनश्रवणादिकम्। एतेन—'आर्यपुत्रोऽपीदानीं परकीयः संवृत्तः' इति स्वचिन्तितमाविष्कृतमिवेत्यवधेयम्। रहस्यगोपनमपि प्रयोजनमिति च मन्तव्यम्।

तेन हि = तर्हि। वर्त्तां विहाय मालां विरचयतु तर्हि भवतीत्याशयः। इयम् = इयमहं द्रागेव। आनय तावत् = पुष्पादकं कौतुकमालिकोपकरणमुपनय

---

१ 'इअं गुह्मामि। आणेहि दाव (इयं गुम्फामि। आनय तावत्) चेटी-गह्णदु अय्या (गृह्णातु आर्या)। (विलोक्य) —' इत्यपि क्वचित् पाठान्तरम्।

२ 'आवर्ज्ये'ति परे पठन्ति।

[ आनय । ( आत्मगतम्- ) इयं गुम्फामि मन्दभागा । (आवर्जयित्वा[1] विलोक्य- ) इदं तावदौषधं किं नाम ? ।

**चेटी**— अविहवाकरणं णाम ।

[ अविधवाकरणं नाम ] ।

**वासवदत्ता**—( **आत्मगतम्**- ) इदं बहुसो गुम्फिदव्वं मम अ, पदुमावदीए अ । (**प्रकाशम्**-) इमं दाव ओसहं कि णाम ? ।

[ ( आत्मगतम्- ) इदं बहुशो गुम्फितव्यं मम च, पद्मावत्याश्च । ( प्रकाशम्- ) इदं तावदौषधं किं नाम ? ] ।

**चेटी**—सवत्तिमद्दणं णाम ।

[ सपत्नीमर्दनं नाम ] ।

**वासवदत्ता**—इदं ण गुम्फिदव्वं ।

[ इदं न गुम्फितव्यम् ] ।

---

अभिनवराजलक्ष्मीः

तावत् । कौतुकमालिकोपकरणभूतान्यौषधानि, कुसुमादिकञ्च प्रयच्छन्ती चेटी तावदभिधत्ते—**गृह्णात्विति** । आवर्जयित्वा—न्युब्जं कृत्वा । निष्कास्येति वा । पाणौ गृहीत्वेति वा । ल्यबभावश्चिन्त्य । 'आवर्ज्य'ति तु युक्तः पाठः । 'उद्घाट्ये'ति तु अर्थादागतम् । विलोक्य = यथावदवलोक्य च । ततः किञ्चिदौषधं गृहीत्वा चेटीं पृच्छति—**इदमिति** । अविधवाः क्रियन्तेऽनेन इति—अविधवाकरणम् = अवैधव्यकरणम् । करणे ल्युट् । बहुशः = बहुलम् । मम च = ममाऽपि—अभिमतं, पद्मावत्या अपि—अभिमतम् । अवैधव्यसम्पादकतया उभयोरपि तुल्यं हितकारकमिति भावः । इत्थमुक्त्वा मालिकायां तदौषधं गुम्फतीत्यप्यनुसन्धेयम् ।

पुष्पकरण्डकादन्यदौषधं गृहीत्वा पुनश्चेटीं पृच्छति—**इदमिति**

---

१. 'वर्जयित्वे'त्यपि पाठस्तत्रापि स एवार्थः । [आवर्जन=खोलना, उघाडना] ।

**चेटी**—कीस ? ।

[ कस्मात् ? ] ।

**वासवदत्ता**—'उवरदा तस्य भय्या, तण्णिप्पओअणं'त्ति ।

[ उपरता तस्य भार्य्या, तन्निष्प्रयोजनमिति ] ।

**( प्रविश्य )**

**अपरा चेटी**—तुवरदु तुवरदु अय्या । एसो जामादुओ अविहवाहि अब्भन्तरचउस्सालं पवेसीअदि ।

[ त्वरतां त्वरतामार्या । एष जामाताऽविधवाभिरभ्यन्तरचतुश्शालं प्रवेश्यते ] ।

---

अभिनवराजलक्ष्मीः

सपत्नी मर्द्यतेऽनेनेति—सपत्नीमर्दनं=सपत्नीसौभाग्यभञ्जनम्, सपत्नीगर्वखण्डनं वा । इदम् = एतदौषधम् । कस्मात् = कस्मान्न गुम्फितव्यम् ? । उपरता = मृता ! तस्य = युष्माकं जामातुरुदयनस्य । निष्प्रयोजनं=निष्फलम् । सपत्नी-सत्त्वे हि सपत्नीमर्दनमौषधं सफलं भवतीत्याशयः । एतावता स्वसौभाग्य-रक्षणं विहितमिति तत्त्वम् ।

कौतुकमालिकागुम्फने, तदानयने च विलम्बं दृष्ट्वाऽपरा दासी त्वरया त मालामानेतुं प्रविशति—प्रविश्येति । अपरा = अन्या चेटी । आर्या=वासव दत्ता । शीघ्रं मालामिमां गुम्फतु भवतीत्याशयः । त्वराकारणं दर्शयति—एष इति ! एष = निकटवर्त्ती । अविधवाभिः = सौभाग्यवतीभिः । अभ्यन्तर चतुश्शालम् = अन्तःपुराऽन्तर्वर्त्तिविवाहोचितचतुःशालम् । अन्तःपुरान्त र्वर्त्तिविवाहशालागृहमिति यावत् । प्रवेश्यते = निवेश्यते । अतो मङ्गलमालि काया अयमेवावसरस्तत्त्वरतां भवतीत्याशयः ।

**वासवदत्ता**—[1]अइ ! वदामि,—गह्ण एदं ।

[ [1]अयि ! वदामि—गृहाणैतत् ] ।

**चेटी**—सोहणं, अय्ये ! गच्छामि दाव अहं ।

[ शोभनम् । आर्ये ! गच्छामि तावदहम् ]

**( उभे निष्क्रान्ते ) ।**

**वासवदत्ता**—गदा एसा ! अहो अच्चाहिदं, अय्यउत्तो वि णाम परकेरओ संवुत्तो !! । अविदा ! सय्याए मम दुक्खं विणोदेमि जदि णिद्दं लभामि ।

---

अभिनवराजलक्ष्मीः

अयि ! = भद्रे । 'अनुनये त्वयि'इत्यमरः । वदामि = कथयामि । किं कथयसीत्यत आह—**गृहाणेति** । अवसितं मे कौतुकमालिकागुम्फनं, गृहाणैनामित्याशयः । 'इदं त्वरे । भद्रे !' गृहाणेदम्' इतिपाठे—इयं त्वरे = त्वरामेव करोमि ।—इत्युक्त्वा त्वरया तां निर्माय पुनराह—**गृहाणेति** । इति व्याख्येयम् ।शोभनम् = अतिसुन्दरमेतन्माल्यं जातमिति भावः ।

उभे=द्वे अपि चेटिके । निष्क्रान्ते=विवाहमण्डपं प्रति गते । 'वासवदत्ता तु प्रोषितभर्तृका, अतोऽमङ्गलाशङ्कापरिहाराय विवाहमण्डपे न गतेति भावः ।

तयोर्गमनानन्तरं, शून्यं प्रमवदनं दृष्ट्वा स्वचिन्तामेव पुनरुपन्यस्यति वासवदत्ता—**गतेति** । एषा=कौतुकमालिकाहारिणी चेटी । यद्वा—एषा=कौतुकमालिका । गता = पद्मावतीहस्ते गतैव । एवञ्च तया मालिकया उदयनवरणमवश्यं भविष्यत्येवेति व्यङ्ग्यम् । अतो हेतोर्वासवदत्ता चिन्तां नाट्यति—**अहो** इति । अहो इति खेदे । अत्याहितं = महदनिष्टमुपस्थितम् । किन्तदित्याह—**आर्य्यपुत्र इति** । नाम इति कुत्सने । ईदृशो दयादाक्षिण्यौदार्ययुक्तोऽपीत्यपिशब्देन सूच्यते । अविद ! = हा । विषादे अविदशब्दो देशी । 'अहंपी'ति

---

१ 'अयि त्वरे' पा० ।

[गतैषा । अहो ! अत्याहितम्—'आर्यपुत्रोऽपि नाम परकीयः संवृत्तः' । [1]अविद ! शय्यायां मम दुःखं विनोदयामि, यदि निद्रां लभे ] ।

( निष्क्रान्ता ) ।

—❀❀❀—

**❀ इति तृतीयोऽङ्कः ❀**

—❀:०:❀—

---

अभिनवराजलक्ष्मीः

पाठे तु—अहमपि = ईदृशक्लेशपरम्परापरिपीडिता अहमपि । 'अविदा' इति आकारान्तोऽपि क्वचित्पठ्यते । शय्यायां = मञ्चके । 'शयित्वे'ति शेषः । विनोदयामि = यापयामि, अपनयामि वा । इह प्रमदवने स्थितायाः मे भूयान् कालो व्यतीतः, अतिक्रान्ता च विवाहवेला, तदहमन्तःपुरे प्रविश्य स्वशय्यायां निद्राम्भजामि, यदि निद्रां लभे = प्राप्स्यामीत्याशयः । एवं विभाव्य अन्तःपुरं प्रति वासवदत्ता गतेति सूचयन्नाह—निष्क्रान्तेति ।

इति श्रीगुरुप्रसादशास्त्रिविरचितायां स्वप्नवासवदत्ताऽभिनव-राजलक्ष्म्यां प्रतिपदव्याख्यानभूतायां तृतीयोऽङ्कः ।

—❀❀❀—

---

१—'अविदा' पा० ।

# अथ चतुर्थोऽङ्कः ।

( ततः प्रविशति विदूषकः ) ।

**विदूषकः—( सहर्षम्- )** भो ! दिट्ठिआ तत होदो वच्छराअस्स अभिप्पेदविवाहमङ्गलरमणिज्जो कालो दिट्ठो ! ।

भो ! को णाम एदं जाणादि—'तादिसे वयं अणत्थसलिलावत्ते पक्खित्ता उण उम्मज्जिस्सामो'त्ति ।

[ ( सहर्षं- ) भोः ! दिष्ट्या तत्रभवतो वत्सराजस्याऽभिप्रेतविवाहमङ्गलरमणीयः कालो दृष्टः । भोः ! को नामैतज्जानाति-'तादृशे वयमनर्थसलिलावर्ते प्रक्षिप्ताः पुनरुन्मङ्क्ष्यामः' इति ? ] ।

---

अभिनवराजलक्ष्मीः

ततः = पद्मावतीविवाहमहोत्सवानन्तरम् । विदूषकः = उपहासपर उदयनसहचरो वसन्तकः । तत्र विदूषकलक्षणं यथा—

'विकृताऽङ्गवचोवेषैर्हास्यकारी विदूषकः ।' इति ।

सहर्षम् = साह्लादम् । हर्षं नाटयन्निति यावत् । भो इति आत्मोपनिमन्त्रणम् । दिष्ट्येति निपातो हर्षे । 'दिष्ट्या समुपजोषञ्चेत्यानन्दे' इत्यमरः । यद्वा = दिष्ट्या=दैवेनैव । तत्र भवतः=माननीयस्य प्रियसुहृदः । वत्सराजस्य= कौशाम्बीपतेरुदयनस्य । अभिप्रेतः = अभीष्टो यो विवाहः, स एव मङ्गलं, तेन रमणीयः—अभिप्रेतविवाहमङ्गलरमणीयः = अभिलषितपद्मावतीविवाहकौतुकमनोहरः । कालः=अस्मत्सौभाग्येनोपनतः शुभसमयः । दृष्टः=अस्माभिरवलोकितः । अनुभूत इति वा । इदमेव हर्षनिदानमिति बोध्यम् ।

स्वसौभाग्यं, वत्सराजविवाहस्य अभिप्रेतत्वञ्च विशदयति—भो इति ।

इदाणिं—'पासादेसु वसीअदि, अन्देउरदिग्घिआसु ह्लाईदि, पकिदिमउरसुउमाराणि मोदअखज्जीआणि खज्जीअन्ति'त्ति–अणच्छरस्संवासो उत्तरकुरुवासो मए अणुभवीअदि ।

[ इदानीं प्रासादेषु उष्यते, अन्तःपुरदीर्घिकासु स्नायते, प्रकृतिमधुरसुकुमाराणि मोदकखाद्यानि खाद्यन्ते,–इति अनप्सरस्संवास उत्तरकुरुवासो मयाऽनुभूयते ]।

---

अभिनवराजलक्ष्मीः

एतत् = वक्ष्यमाणम् । जानाति = अवबुध्यते स्म । न कोऽपीत्यर्थः । तादृशे= दुस्तरे वासवदत्ताऽग्निदाहोदयनशोकावेगाद्यात्मके । अनर्थ एव सलिलावर्त्तः, तस्मिन्—अनर्थसलिलावर्त्ते = व्यसनजलावर्त्ते । 'स्यादावर्तोऽम्भसां भ्रमः' इत्यमरः । प्रक्षिप्ताः=दुरदृष्टवशान्निपतितः । दौर्भाग्येन निपातिताः । उदयनेन निपातिता इति वा । पुनः=भूयोऽपि । उन्मङ्क्ष्यामः = कदापि उन्मग्ना भविष्यामः ।

पुरा दुर्दैवविपाकविलसितेन वयं सर्वेऽपि राज्यभ्रंश—वनभ्रमण—वासवदत्तावियोगादि-महाव्यसनपरम्परादुस्तरजलावर्त्ते निपातिताः । तस्मिन्समये च–'पुनरपि वयं कदापि सुखमनुभविष्याम' इति को नाम सम्भावयति स्म ? । न कोऽपि । परं दैवानुकूल्येनेदानीं वयं चिराभीष्टपद्मावतीपरिणयमहोत्सवमनुभूय परं प्रहृष्टाः स्म इति भावः । तादृशं क्लेशजातमनुभूय दैवानुग्रहेणेदानीमभीष्टं प्राप्य निर्वृत्ताः स्म इति यावत् । [ एतेन मुखसन्धेर्विधानं नामाङ्गं दर्शितम् । 'सुखदुःखकृतो ह्यर्थस्तद्विधानमिति स्मृत'मित्युक्तेः ]।

ननु पद्मावतीपरिणयमात्रेण कस्ते हर्षावसर इत्यत आह–इदानीमिति ।

एक्को खु महन्तो दोसो,—'मम आहारो सुट्ठु ण परिणमदि'। 'सुप्पच्छदणाए सय्याए णिद्दं ण लभामि।' 'जह वादसोणिदं

अभिनवराजलक्ष्मीः

इदानीं=पद्मावतीपरिणयानन्तरं सम्प्रति । प्रासादेषु=राजभवनेषु ['महल'] । 'प्रासादो देवभूभुजा'मित्यमरः । उष्यते=स्थीयते । 'अस्माभि' रिति शेषः । उदयनस्य राज्यभ्रंशव्यसनादिना इतः पूर्वन्तु–काननकन्दरासु, पटकुटीषु, ग्राम्यभवनेषु वा स्थीयते स्माऽस्माभिरिति ध्वनितम् । अन्तःपुरदीर्घिकासु= अवरोधवापीषु । स्नायते=स्नानं मया विधीयते । प्रकृत्या=स्वभावेनैव, मधुराणि =सुमिष्टान्यपि च तानि—सुकुमाराणि=मृदूनि, मसृणानि च—प्रकृतिमधुर-सुकुमाराणि । मोदका एव खाद्यानि, मोदकबहुलानि वा खाद्यानि–मोदक-खाद्यानि–मोदकबहुलानि सुमिष्टानि पक्वान्नानि । खाद्यन्ते = आस्वाद्यन्ते । इति = इत्येवम् । नास्ति अप्सरसां संवासो यत्र असौ–अनप्सरःसंवासः = अप्सरस्समागममात्रविकलः । उत्तराश्च ते कुरवश्च—उत्तरकुरवः, उत्तरकुरुषु वासः—उत्तरकुरुवासः = देवभूमिनिवासः । देवभूमयो हि उत्तराः कुरवः । अनुभूयते = स्वर्गनिवाससौख्यमास्वाद्यते । एतेन विधानं नाम मुखसन्धेरङ्गं दर्शितम् । 'सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृत'मित्युक्तेः ।

यैरस्माभिरुदयने विपत्तिपरिभूते तत्समानदुःखैरितस्ततो भ्रमद्भिः गिरिकाननपटकुटीपर्णशालादिषु निवासः, गिरिणद्यादिषु स्नानं, वन्यफल-मूलादीनां भोजनञ्च कृतमासीत् , तैरेवास्माभिः पद्मावतीपरिणयादारभ्य सम्प्रति राजभवनेषूष्यते, राजाऽन्तःपुरभवनवापीषु स्नायते, मोदका भक्ष्यन्ते इति स्वर्गनिवाससौख्यमेवास्माभिरुपभुज्यते । [ केवलं मम गृहिणी दूरे वर्त्तते, स्वर्गेत्वप्सरसां, देवपत्नीनाञ्च सान्निध्यं भवतीत्येतादेव स्वर्गसुखादेतत्सुखे वैकल्यमस्तीत्युपहासपरतयाऽपीदं योजनीयम् ] । अहो ! मे विदूषकस्य दैवानुकूल्यमित्याशयः ।

अभिदो विअ वत्तदि-त्ति पेक्खामि' ।

भोः ! सुहं णाम-आमअपरिभूदं, अकल्लवत्तञ्च ।

[ एकः खलु महान् दोषः,—'ममाऽऽहारः सुष्ठु न परिणमति, सुप्रच्छदनायां शय्यायां निद्रां न लभे, यथा वातशोणितमभित इवे'ति प्रेक्षे ! भोः ! सुखं नाम[1]—आमयपरिभूतम्, अकल्यवर्त्तञ्च ] ।

---

अभिनवराजलक्ष्मीः

आहारपरिपाकाऽभावनिन्दाव्याजेन भोजनोपभोगसौख्यञ्च सूचयन्नाह—एक इति । दोषः = राजगृहनिवासे, सुखोपभोगे च सत्यपि क्लेशः ।

दोषमेवाह—ममेति । आहारः = मोदकाद्यभ्यवहारः । सुष्ठु = यथेच्छं, शीघ्रञ्च । न परिणमति = न भुक्तमात्रमेव परिपच्यते । एवञ्च प्रभूतानि मोदकादिपक्वान्नानि आकण्ठं भोक्तुं न शक्नोमीत्युपहासपरं वाक्यं विदूषकस्य औदरिकस्य ।

सुष्ठु प्रच्छदनं यस्यां सा—सुप्रच्छदा, तस्यां=मृदुस्वच्छास्तरणास्तीर्णायां हंसतूलशय्यायामपि । निद्रां न लभे = यथेच्छं निद्रां नाऽनुभवामि । यथा = पूर्वोक्तेन दोषेण । वातशोणितं नाम वातरक्ताख्यो व्याधिः । अभित इव = आसन्नमिव । 'समीपोभयतःशीघ्रसाकल्याभिमुखेऽग्रतः' इत्यमरः । वर्त्तते = प्रवर्त्तते । इति = इत्येवं, पश्यामि = तर्कयामि । गुरुपाकैः स्निग्धैः प्रभूतैर्भोज्यैः शरीरोपचयं रक्तवृद्धिं तृप्तिञ्चोपहासप्रधानो विदूषकोऽन्यथा चिन्तयन्—'वातरक्तरोगलक्षणैरेभिर्वातरक्तप्रारम्भ इति तर्कयामी'त्येवमुपहासायाहेत्याशयः ।

अस्वप्नाऽरोचकरक्तमांसवृद्धिप्रभृतीनि हि वातरक्तरोगलक्षणानि । परन्तु बलवीर्योपचय—तृप्ति—रक्तमांसादिपुष्ट्यादिभिरपि एतानि अस्वप्नादीनि भवन्तीति—तानीमानि सुखलक्षणानि रोगलक्षणतया कल्पयति महावैद्यो विदूषक इति तत्त्वविदो गौडाः ।

स्निग्धभोजनेन शरीरे रक्तसञ्चारेण—आमयपरिभवं, रात्रौ कृतस्य

---

[1] 'सुखं नाऽऽमयपरिभूतमकल्यवर्त्तञ्चे'ति पाठान्तरम् ।

( ततः प्रविशति चेटी ) ।

**चेटी**—कहिंणु खु गदो अय्यवसन्तओ ? । ( **परिक्रम्य**— ) अम्हो ! एसो अय्यवसन्तओ ! । (**उपगम्य**—) अय्य वसन्तअ ! को कालो, तुम अण्णेसामि !

[ कुत्र नु खलु गत आर्यवसन्तकः ? । ( परिक्रम्य— ) अहो एष आर्यवसन्तकः । (उपगम्य—) आर्यवसन्तक ! कः कालस्त्वामन्विष्यामि ] ।

**विदूषकः**—( **दृष्ट्वा**— ) किंणिमित्तं भद्दे ! मं अण्णेससि ? ।

[ ( दृष्ट्वा- ) किंनिमित्तं भद्रे ! मामन्विष्यसि ? ] ।

---

अभिनवराजलक्ष्मीः

गरिष्ठभोजनस्य यथावत्प्रभाते परिपाकाऽभावात्कल्यवर्त्ताऽनभिलाषेण कल्यवर्त्ताऽऽस्वादविरहश्च रोगतया सूचयन्नाह—भो इति । सुखं नाम = मम राजगृहनिवासोपनतं सुखं हि । आमयेन परिभूतम्—आमयपरिभूतं=वातरक्तरोगेणाऽऽक्रान्तम् । अकल्यवर्त्तञ्च = यथवाद्भोजनाऽपरिपाकेन कल्यवर्त्तोपभोगशून्यश्चेति महदेव मे दौर्भाग्यमित्याशयः । [ कल्यवर्त्त = कलेवा ] ।

अत्र—'सुखं नाऽऽमयपरिभूतमकल्यवर्त्तञ्चे'त्यशुद्धो मुद्रितः पाठः—'आमयपरिभूतम्, अत एव अकल्यवत्त = प्रातराशरहितं सुखं=सुखं न मन्ये' इत्येवं रीत्या कथञ्चिन्नापनीयः । केचित्तु 'अकल्यवर्त्त'मित्यस्य—कल्यस्य = नीरोगस्य, वर्त्तः—भोजनं, यथेच्छाहारः, तेन शून्यमित्येवमर्थमाहुः ।

प्रविशति = विदूषकान्वेषणाय रङ्गं प्रविशति । आर्यश्चासौ वसन्तकश्च-आर्यवसन्तकः = माननीयो वसन्तकनामा विदूषकः । परिक्रम्य = इतस्ततोऽन्विष्य, किञ्चित्पदान्तरं गत्वेति वा । 'अवलोक्ये'त्यर्थादागतम् । एषः । अयमत्र संमुखे तिष्ठतीत्यर्थः । उपगम्य = निकटे गत्वा । कः काल इति । भूयान् समयो व्यतीतस्त्वामितस्ततोऽन्वेषयन्त्या मम, तद्वद भद्र ! त्वं कुत्र

**चेटी**— अह्माणं भट्टिणी भणादि—'अवि ह्णादो जामादुओ'त्ति ? ।

[ अस्माकं भट्टिनी भणति—'अपि स्नातो जामाते'ति ? ] ।

**विदूषकः**—किंणिमित्तं भोदी [1]पुच्छदि ? ।

[ किंनिमित्तं भवती पृच्छति ? ] ।

**चेटी**—किमण्णं, 'सुमणोवण्णअं आणेमि'त्ति ।

[ किमन्यत् , 'सुमनोवर्णकमानयामी'ति ] ।

---

अभिनवराजलक्ष्मीः

स्थितोऽभूरिति तदाशयः । दृष्ट्वा = चेटीं प्रति चक्षुर्निक्षिप्य । भद्रे = सुभगे ! कल्याणिनि ! कि निमित्तं=कुतो हेतोः । [किस लिए ?] (आर्य=अजी ! ) ।

भट्टिनी = अस्मत्स्वामिनी—दर्शकमहिषी । भणति = मां प्रति भाषते । पृच्छतीति यावत् । अपीति प्रश्ने । जामाता = उदयनो वत्सराजः । स्नातः= स्नातः किम् ? । इति=इत्येवं । 'गत्वाऽवधारये'तिशेषः । 'जामाता किं स्नातो, न वेति गत्वा चेटिकेऽवधारये'ति अस्माकं स्वामिनी भणती'ति । अतः—त्वां प्रष्टुमागताऽस्मि—यत्—जामाता स्नातो न वेति यावत् । भवती = दर्शक-महिषी । किं निमित्तं = कुतो हेतोः ? । पृच्छति = 'जामाता स्नातो न वे'ति पृच्छति ? । किमन्यत् = किमन्यत्प्रयोजनं भवितुमर्हति । नैवान्यत् किमपि प्रयोजनमित्यर्थः । तर्हि कुतस्तथा पृच्छतीत्यत आह—**सुमन** इति । सुमनसः = कुसुमानि, वर्णकम् = अङ्गरागचन्दनादिकञ्च, एतेषां समाहारः— सुमनोवर्णकं = पुष्पाङ्गरागस्रक्चन्दनादिकम् । आदिपदेन—भोजनादि । आनयामि = उपाहरामि । इति = इत्येवमेव । 'प्रश्नस्य प्रयोजनमस्ति, नान्य'दिति शेषः । एवञ्च यदि स्नातो जामाता तर्हि स्नानान्तर-कृत्यार्थं स्रक्चन्दनादिकं [ भोजनादिञ्च ] समानयामीति वाक्यार्थो बोध्यः । 'स्त्रियः सुमनसः पुष्प'मित्यमरः । 'वर्णकं स्याद्विलेपन'मित्यमरः ।

---

१ 'भवति ?' इति पाठे चेटीसम्बोधनमेतदित्यवधेयम् ।

**विदूषकः**—ह्लादो तत्तभवं, सव्वं आणेदु भोदी वज्जिअ भोअणं ।

[ स्नातस्तत्रभवान् । सर्वमानयतु भवती, वर्जयित्वा भोजनम् ] ।

**चेटी**—किं णिमित्तं वारेसि भोअणं ? ।

[ किं निमित्तं वारयसि भोजनम् ? ] ।

**विदूषकः**—अधण्णस्स मम कोइलाणं अक्खिपरिवट्टो विअ कुक्खिपरिवट्टो संवुत्तो ।

[ अधन्यस्य मम कोकिलानामक्षिपरिवर्त्त इव कुक्षिपरिवर्त्तः संवृत्तः ] ।

**चेटी**—ईदिसो एव्व होहि ।

[ ईदृश एव भव ] ।

---

अभिनवराजलक्ष्मीः

तत्र भवान् = माननीयो जामाता । सर्वं = स्नानानन्तरोपभोग्यमङ्गरागादिकम् । वर्जयित्वा = परित्यज्य । भोजनं नानेयमित्यर्थः । वारयसि = निषेधसि ? । अधन्यस्य = दौर्भाग्योपहतस्य । कोकिलानां = पिकानाम् । अक्षिपरिवर्त्त इव = नेत्रविकार इव । कोकिलानां रक्तनेत्रतां रोगत्वेनाध्यवस्यति महावैद्यो विदूषकभट्टः । मम = वसन्तकस्य । कुक्षेः परिवर्त्तः—कुक्षिपरिवर्त्तः = उदरामयः । उदराध्मानमिति यावत् । संवृत्तः = सञ्जातः । उदरव्याधिना पीडितोऽहं न किञ्चिद्भोक्ष्ये, जामाता तु स्वभावत एव भोजनाभिलाषविकलोऽतो भोजनं विहाय सर्वमानेयमित्युपहासपरं वचो विदूषकस्य । कोकिलानां स्थूलवर्त्तुलरक्तलोचनशालितया अक्षिपरिवर्त्तरोगवत्त्वन्तेषां कल्पयित्वा उपहासार्थमेवमुक्तिः । अनामस्यापि आमतयोक्तेरुपहास इत्यवधेयम् । [परिवर्त्त = 'आँख का फूल आना' आँख का दुःखना' 'पेट आदि का फूलना'] । ईदृशः = उदरपरिवर्त्तवान् । [बड़ी तोन्दवाला] । तुन्दिल इति यावत् । इदं परिहासवचनम् । यद्वा स्वस्थोऽपि भवान्स्वयमेव 'रोगार्त्तोऽह' मिति वृथैव भाषते, तद्भवतु सत्यमेव रोगो, येनाऽस्माकं कष्टमपयात्येवं शापपरमेवेदं वाक्यम् । शापोऽपि प्रणयेनोपहास एव ।

विदू०—गच्छदु भवदी। यावदहमपि तत्रभवतः सआसं गच्छामि।

[ गच्छतु भवती। यावदहमपि तत्रभवतः सकाशं गच्छामि ]।

( निष्क्रान्तौ )।

( इति ) प्रवेशकः।

---

( ततः प्रविशति सपरिवारा पद्मावती, आवन्तिका-वेषधारिणी वासवदत्ता च )।

**चेटी**—किंणिमित्तं भट्टिदारिआ पमदवणं आअदा ?।

[ किं निमित्तं भर्तृदारिका प्रमदवनमागता ? ]।

**पद्मावती**—हला ! ताणि दाव सेहालिआगुह्मआणि पेक्खामि-

---

अभिनवराजलक्ष्मीः

भवती = त्वं तावदन्तःपुरं गच्छाऽनन्तरकरणीयाय। यावत् = तावच्च। तत्र भवतः = जामातुरुदयनस्य। सकाशं = निकटम्। गच्छामि=उपसर्पामि। निष्क्रान्तौ=चेटीवसन्तकौ निर्गतौ। प्रवेशकः। एतावता वृत्तवर्त्तिष्यमाणकथा-सूचको नीचपात्रप्रयोजितः प्रवेशकनामाऽर्थोपक्षेपको दर्शितः। तदुक्तं दर्पणे-

'प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ॥' इति।

प्रवेशकेनानेन वृत्तस्य विवाहस्य, वर्त्तिष्यमाणस्य नायकनायिकासमा-गमस्य च सूचनाल्लक्षणसमन्वयः। 'प्रवेशकः' । 'समाप्त' इति शेषः।

ततः = चेटी—विदूषकयोर्निर्गमनानन्तरम्। सपरिवारा = सखीजनपरिवृता।

सपरिवारां पद्मावतीं प्रमदवने समागतां दृष्ट्वा चेटी तां पृच्छति—किंणिमित्तं। किं प्रयोजनमुद्दिश्य भवती अत्रायातेत्यर्थः। प्रमदवनम्=अन्तः-पुरान्तवर्त्तिस्त्रीजनोचितमुपवनम्। जिज्ञासमानां पद्मावती तावदाह—हलेति। हला = हे सखि !। ते = प्रयत्नपरिरक्षिताः। शेफालिकागुल्मकाः =

'कुसुमिदा ण वा ण वे'त्ति।

[ हला ! ते [1]तावच्छेफालिकागुल्मकाः प्रेक्षे—'कुसुमिता वा न वे'ति ]।

**चेटी**—भट्टिदारिए ! ताणि कुसुमिदाणि णाम, पवालन्तरिदेहिं विअ मोत्तिआलम्बएहिं आइदाणि कुसुमेहिं।

[ भर्तृदारिके ! ते कुसुमिता नाम, प्रवालान्तरितैरिव मौक्तिकलम्बकैराचिताः कुसुमैः ! ]।

**पद्मावती**—हला ! जदि एव्वं, किं दाणिं विलम्बेसि ?।

---

अभिनवराजलक्ष्मीः

निर्गुण्डीस्तम्बाः। 'शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा'इत्यमरः। [शेफालिका=नेवारी]। 'अप्रकाण्डे स्तम्बगुल्मौ' इत्यमरः। कुसुमिता न वा = पुष्पिता न वा। इति = इत्येवं। पश्यामि = विलोकयिष्यामि। वर्त्तमानसामीप्ये लट्। शेफालिकालतां विलोकयितुमेव प्रमदवनमायाताऽस्मीत्याशयः।

भर्तृदारिके = राजपुत्रि !। ते = शेफालिकागुल्मकाः। कुसुमिता नाम= सत्यं पुष्पिताः। 'नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने' इत्यमरः।

प्रवालैरन्तरिताः—प्रवालान्तरिताः, तैः—प्रवालन्तरितैः = मध्येमध्ये विद्रुमघटितैः। मौक्तिकानां लम्बकाः—मौक्तिकलम्बकाः, तैः—मौक्तिकलम्बकैः—इव = मुक्तादामभिरिव। मुक्तालतिकाभिरिव। मुक्तास्तम्बकैरिवेति वा। [मुक्तालम्बक = गले में पहिरने की मोतियों की लडी, माला]। 'लम्बनं स्याल्ललन्तिका'इत्यमरः। कुसुमैः = पुष्पैः। आचिताः = भरिताः, परिपूर्णाः। सिन्दुवारापरनामधेयशेफालिकाकुसुमानि अधोभागे विद्रुमवद्रक्तानि, उपरि च मुक्ताफलवच्छुभ्राणि भवन्तीति—प्रवालघटितमुक्तास्तवकौपम्यं तेषु घटते इति तत्त्वम्। यद्येवं = यदीदृशी तेषां कुसुमसमृद्धिः। यद्येवं कुसुमैरास्तीर्णाः शेफालिकागुल्मकाः इति यावत्। 'तर्हि'ति शेषः। किं=कुतो हेतोः। इदानीं—

---

[1] 'तां ... च्छेफालिकागुल्मकान्प्रेक्षे—कुसुमिता नवा'इति तु गौडाश्छायां पठन्ति।

[ हला ! यद्येवं किमिदानीं विलम्बसे ? ] ।

**चेटी**–तेण हि इमस्सिं सिलावट्टए मुहुत्तअं उपविसदु भट्टिदारिआ, जाव अहं वि कुसुमावचअं करेमि ।

[ तेन ह्यस्मिञ्छिलापट्टके मुहूर्तकमुपविशतु भर्तृदारिका । यावदहमपि कुसुमाऽवचयं करोमि ] ।

**पद्मावती**—अय्ये ! किं एत्थ उपविसामो ? ।

[ आर्ये ! किमत्रोपविशावः ? ] ।

**वासवदत्ता**—एव्वं होदु ।

[ एवं भवतु ] ।

( **उभे उपविशतः** ) ।

**चेटी**—( **तथा कृत्वा**– ) पेक्खदु-पेक्खदु भट्टिदारिआ–अद्धमणसिलावट्टएहि विअ सेहआलिकुसुमेहिं पूरिअं मे अञ्जलिं ! ।

---

अभिनवराजलक्ष्मीः

सम्प्रति । विलम्बसे ? = कुसुमावचयकर्मणि विलम्बमाचरसि ? । तेन कुसुमाऽवचयस्यायमेवावसरस्तत्त्वरितं कुसुमानि शेफालिकाया अवचिनु, किं विलम्बेनेत्यर्थो बोध्यः ।

तेन हि = यद्येवं भवत्या अभिमतं तर्हि । शिलापट्टके=मणिशिलाफलके । मुहूर्त्तकं = क्षणमात्रम् । अत्यन्तसंयोगे द्वितीया । यावत् = येन । अहमपि = अहन्तावत् । कुसुमानाम् अवचयः—कुसुमावचयः = पुष्पाहरणम् । [ फूल तोड़ना ] । करोमि = विदधे । यावदहं पुष्पाण्यवचिनोमि तावदिहोपविशतु भवतीत्याशयः । आर्ये ! = आवन्तिके ! । अत्र = मणिमयशिलातले । यदि भवत्यै रोचते तह्युपविशावो यावदियं कुसुमान्यवचिनोति चेटीति प्रश्नाशयः ।

एवं = यथा भवत्यै रोचते तथा । इह शिलातले उपविशावस्तावदिति यावत् । उभे = आवन्तिका-पद्मावत्यौ । एतेन द्वयोरनुरागातिशयः, परस्पराऽनुगमनं च सूच्यते ।

[ ( तथा कृत्वा- ) पश्यतु पश्यतु भर्तृदारिका, [1]अर्द्धमनश्शिलापट्टकैरिव शेफालिकाकुसुमैः पूरितो मेऽञ्जलिः ! ] ।

**पद्मावती—( दृष्ट्वा- )** अहो ! विइत्तदा कुसुमाणं। पेक्खदु पेक्खदु अय्या !

[ ( दृष्ट्वा ) अहो ! विचित्रता[2] कुसुमानाम् ।, पश्यतु पश्यत्वार्या ] ।

**वासवदत्ता**—अहो ! दस्सणीअदा कुसुमाणं ।

[ अहो ! दर्शनीयता कुसुमानाम् ] ।

**चेटी**—भट्टिदारिए ! किं भूयो अवइणुस्सं ? ।

[ भर्तृदारिके ! किं भूयोऽवचेष्यामि ? ] ।

---

अभिनवराजलक्ष्मीः

तथा कृत्वा = पुष्पाण्यवचित्य । 'तयोः सविधे आनीय चे'ति शेषः । 'पश्यतु-पश्यतु' इति द्विरुक्तिः सम्भ्रमे । अधोभागेऽरुणवर्णानि शेफालिकाकुसुमानि मनःशिलारचितवृन्तयुतानीव शोभन्ते इत्याशयेनोत्प्रेक्षमाणा चेटिकाऽभिधत्ते-अध इति । अधः = अधोभागे, मनःशिलायाः वृन्तकानि-मनःशिलावृन्तकानि, तैः-मनःशिलावृन्तकैः-इव = मनःशिलाखण्डकैरिव । 'अरुणतया प्रतीयमानै'रिति शेषः । शेफालिकाकुसुमैः = सिन्दुवारप्रसूनैः । पूरितं = भरितम् । अञ्जलिं=संयुतहस्तपुटकम् । विचित्रता=श्वेतरक्तवर्णनिवेशचारुता ।

आर्या = वासवदत्ता । 'अहो'इत्याश्चर्ये । दर्शनीयता=प्रेक्षणीयता, मनोज्ञता । कुसुमानां = शेफालिकाकुसुमानाम् । कुसुमानां प्रशंसां श्रुत्वा, राजपुत्र्यास्तत्र कौतुकं विज्ञाय, पृच्छति चेटी-भूय इति । भूयः = पुनरपि ।

---

१ 'अधो मनश्शिलावृन्तकैरिवे'ति तु गौडाः पठन्ति । अत्र-अर्द्धमनःशिलापट्टकैरिवे'ति मुद्रितः पाठः । तस्य—अर्द्धे = पुष्पादलाऽधोभागे—मनःशिलायाः—'मैनशिल' इति प्रसिद्धायाः, पट्टकैरिव = शकलैरिवेत्यर्थो बोध्यः । [ पट्टक = ढोके ] । 'वृन्तकै'रितितु सुन्दरपाठः । वृन्तकं-पुष्पबन्धनम् ।

**पद्मावती**—हला ! मा मा भूयो अवइणिअ।

[ हला ! मा मा भूयोऽवचित्य[1] ]।

**वासवदत्ता**—हला ! किंणिमित्तं वारेसि ?।

[ हला ! किंनिमित्तं वारयसि ? ]।

**पद्मावती**—अय्यउत्तेण इह[2] आअच्छिअ इमं कुसुमसिद्धिं पेक्खिअ सम्माणिदा भवेअं।

[ आर्यपुत्रेण[2]—इहागत्येमां कुसुमसमृद्धिं दृष्ट्वा—संमानिता भवेयम् ]।

**वासवदत्ता**—हला ! पिओ दे भत्ता ?।

[ हला ! प्रियस्ते भर्ता ? ]।

---

अभिनवराजलक्ष्मीः

भूयः = पुनः। अवचित्य मा मा = माऽवचिनु ! त्वया भूयः पुष्पावचयो न कार्यः। 'मा मा भूयोऽवचैषीः' इति, 'मा मा भूयोऽवचिनु' इति वा युक्तोऽत्र पाठ इति तु गौडाः।

आर्यपुत्रेण = मद्भर्त्रा उदयनेन। इह = प्रमदवने। आगत्य = समेत्य। इमां = दृष्टिविलोभनक्षमाम्। कुसुमसमृद्धिं-शेफालिकापुष्पसम्पत्तिम्। दृष्ट्वा= अवलोक्य। संमानिता = 'अहो ! भवत्या आरामे ईदृशी कुसुमानां समृद्धि'-रित्येवं साधुवादेन सत्कृताऽहं भवेयम्। एवञ्चोदयनप्रेक्षणाय कुसुमानि तथैव स्थाप्यानि, त्वया नावचेयानीत्याशयः। अत्र 'आर्यपुत्र'इति प्रथमान्तः क्वाचित्कः पाठोऽसङ्गत एवेत्यवधेयम्।

हला=अयि प्रियसखि !। प्रियः=किं वल्लभः ?। प्रश्नवाक्यमेतत्। यद्वा प्रियस्तेऽतितरां भर्ता, अतो हेतोस्त्वमेवं भाषसे तदनुरागाकृष्टहृदयेति भूतार्थकथनमात्रमेतदित्यवधेयम्। अत्र पक्षे—'अतस्त्वमेवं भाषसे' इति शेषो योज्यः। न जानामि = 'प्रियो मे भर्ता, न वे'ति तत्त्वतो नाहं वेद्मि,

---

१ 'मा मा भूयोऽवचिनु' इति गौडाः पठन्ति।

२ 'अय्यउत्त इह' [ आर्यपुत्र इह ]' पा०।

**पद्मावती**—अय्ये ! ण आणामि । अय्यउत्तेण विरहिदा उक्कण्ठिदा होमि ।

[ आर्ये ! न जानामि, [[1]परं–] आर्यपुत्रेण विरहितोत्कण्ठिता भवामि ]।

**वासवदत्ता**—( **आत्मगतम्**– ) दुक्खरं खु अहं करेमि । इअं वि णाम एव्वं मंतेदि ।

[ (आत्मगतं–) दुष्करं खल्वहं करोमि । इयमपि नामैवं मन्त्रयते ! ]

---

अभिनवराजलक्ष्मीः

किन्त्वेतावदेव जानामि—यत्–आर्यपुत्रेण = उदयनेन, विरहिता = रहिता सती, उत्कण्ठिता = पर्युत्सुकाऽहम् , भवामि = सम्पद्ये । मुग्धायाः पद्मावत्याः प्रियविषयकमनुरागन्तत्त्वतोऽनवगच्छन्त्या इत्थमुक्तिरियम् । एतावता च भङ्ग्यन्तरेण 'नितरां प्रियो मे भर्त्ते'त्यावेदितम् ।

अचिरपरिचितायाअ अपि पद्मावत्या भर्त्तरीदृशं स्नेहानुबन्धमालक्ष्य स्वस्याः कठोरहृदयतां सम्भावयन्ती वासवदत्ताऽऽत्मगतं चिन्तयति—दुष्करमिति । दुष्करम् = अतिकठिनङ्कर्म । अहं करोमि = अहं सम्पादयामि । स्वामिविजयसाम्राज्यादिसिद्धये हृदयं वज्रोपमं कठोरं विधायाऽहमीदृशं दुष्करं कर्म निष्पादयामि - यत्तेन विना क्षणमपि जीवामि ! । तदेव विशदयति—इयमिति । इयमपि = अचिरपरिचिता मुग्धा पद्मावत्यपि । एवं मन्त्रयते = 'प्रियेण विरहिता सती उत्कण्ठिता भवामी'त्येवं भाषते ! । अहो ! अत्यल्प-परिचिताया अपि पद्मावत्याश्चेतः प्रियं विना व्याकुलीभवति, अहन्तु तद्गत-हृदया आ बाल्यात्परिचिताऽपि तं विना इयन्तं कालं तिष्ठामि ! तदिदं दुष्करं करोमि । बत ! महदेवाऽनौचित्यं मे तथा तेन विरहेऽपि प्राणान्धारयन्त्याः । तथाऽपि स्वामिकार्यसम्पत्तये ईदृशमशक्यमपि कर्त्तव्यं निर्वहामीत्याशयः। नामेति – स्वकुत्सायाम् ।

---

१ स्पष्टार्थमस्माभिर्वर्द्धितोऽयं पाठः ।

**चेटी**—अभिजादं खु भट्टिदारिआए मंतिदं—'पिओ मे भत्त'त्ति।

[ अभिजातं खलु भर्तृदारिकया मन्त्रितं—'प्रियो मे भर्ते'ति ]।

**पद्मावती**—एक्को खु मे संदेहो।

[ एकः खलु मे सन्देहः ]।

**वासवदत्ता**—किं किं ?।

[ किं किम् ? ]।

**पद्मावती**—'जह मम अय्यउत्तो, तह एव्व अय्याए वासवदत्ताए'त्ति।

[ 'यथा ममाऽऽर्यपुत्रस्तथैवाऽऽर्याया वासवदत्तायाः' ?-इति ]।

**वासवदत्ता**—अदो वि अधिकं।

[ अतोऽप्यधिकम् ]।

**पद्मावती**—कहं तुवं जाणासि ?।

[ कथं त्वं जानासि ? ]।

---

अभिनवराजलक्ष्मीः

अभिजातं = पटुतरम्। समुचितम्। युक्तम्। 'अभिजातः कुलीने स्यान्न्याय्यपण्डितयोस्त्रिषु' इति मेदिनी। मन्त्रितं = भाषितम्। प्रियः = वल्लभः।

उज्जयिनीप्रभवेयं कियन्तमुदयन-वासवदत्ताविषयकं वृत्तान्तं वेत्तीति ज्ञातुं पद्मावती वासवदत्ताविषयकं वृत्तान्तं प्रसङ्गेन समुपन्यस्यति—एक इति। सन्देहः = संशयः। 'वर्त्तते मनसी'ति शेषः। किमिति प्रश्नेऽव्ययम्। सम्भ्रमाद्द्विरुक्तिः।

'यथा ममे'त्यस्य 'वल्लभः' इति शेषः। आर्यायाः = मान्याया मे सपत्न्याः स्वर्गतायाः। यथा मे प्रियो वत्सराजस्तथैव किं वासवदत्ताया अपि स प्रिय आसीत्ततो न्यूनाधिकभावेन वेति प्रश्नाशयः। **अत इति**। यथा, यावांश्च तव स वल्लभस्ततोऽप्यधिकं तस्याः स वल्लभ आसीदित्यर्थः।

**कथमिति**। एतद्वासवदत्तोदयनविषयकं गूढं वृत्तान्तं कथं त्वं जानासीति प्रश्नाशयः।

**वासवदत्ता—( आत्मगतम्- )** हं, अय्यउत्तपक्खवादेण अदि-क्कंदो समुदाआरो । एव्वं दाव भणिस्सं । ( **प्रकाशम्-** ) जइ अप्पो सिणेहो सा सजणं ण परित्तजदि ।

[ ( आत्मगतं- ) हम्, आर्यपुत्रपक्षपातेनाऽतिक्रान्तः समुदाचारः । एवं तावद्भणिष्यामि । ( प्रकाशं- ) यद्यल्पः स्नेहः, सा स्वजनं न परित्यजति ] ।

**पद्मावती—**होदव्वं ।

[ भवितव्यम् ] ।

**चेटी—**भट्टिदारिए! साहु भट्टारं भणहि–'अहं पि वीणं सिक्खिस्सामि'त्ति ।

[ भर्तृदारिके ! साधु भर्त्तारं भण–'अहमपि वीणां शिक्षिष्ये' इति ] ।

---

अभिनवराजलक्ष्मीः

हम्—इति खेदे । 'हु'मिति केचित्पठन्ति । आर्यपुत्रपक्षपातेन = आर्यपुत्रगुणानुवर्णनप्रवणया, आर्यपुत्रप्रसक्तमानसया मयेति वा । समुदाचारः = लोकव्यवहारः । उदासीनजनाचार इति वा । **एवमिति** । एवं प्रकारेण तत्समाधानं करिष्यामीत्यर्थः । वासवदत्ताया उदयनविषयकमधिकं स्नेहं समर्थयते—यदीति । अल्पः = किञ्चिदूनः । सा = वासवदत्ता । स्वजनं = स्वगुरुबन्धुबान्धवलोकम् । न परित्यजति = न पर्यत्यक्ष्यदित्यर्थः । लृङः स्थाने लट्प्रयुक्तः । प्राकृते लिङ्गव्यत्यय इव लकारव्यत्ययोऽपि मर्षणीयः । यद्यस्या भर्त्तरि नाधिकः स्नेहोऽभविष्यत्तर्हि उज्जयिन्याः स्वबन्धुबान्धवपितृमातृलोकं परित्यज्योदयनेन सह नागमिष्यत्, अथ चेयं परित्यज्य तान्सर्वान् उदयनेन सहैवागतेति भूयानस्यास्तत्र स्नेह इति ज्ञातुं शक्यमेवेति भावः ।

भवितव्यं = यथा त्वं वदसि तथा भवेत् । युज्यते त्वदुक्तमित्यर्थः । साधु = सनिर्बन्धं, सप्रणयञ्च, सविनयञ्च । अहमपि = वासवदत्तावदहं पद्म

**पद्मावती**—उत्तो मये अय्यउत्तो ।

[ उक्तो मयाऽऽर्यपुत्रः ] ।

**वासवदत्ता**—तदो किं भणिदं ? ।

[ ततः किं भणितम् ? ] ।

**पद्मावती**—अभणिअ किंचि दिग्घं णिस्ससिअ तुह्णीओ संवुत्तो ।

[ अभणित्वा किंचिद्दीर्घं निःश्वस्य तूष्णीकः संवृत्तः ] ।

**वासवदत्ता**—तदो तुवं किं विअ तक्केसि ? ।

[ ततस्त्वं किमिव तर्कयसि ? ] ।

**पद्मावती**—तक्केहि—अय्याए वासवदत्ताए गुणाणि सुमरिअ दक्खिणदाए मम अग्गादो ण रोदिदि' त्ति ।

[ तर्कयामि—'आर्याया वासवदत्ताया गुणान् स्मृत्वा दाक्षिणतया ममाऽग्रतो न रोदिती'ति ] ।

---

अभिनवराजलक्ष्मीः

वत्यपि । वीणां = वीणावादनम् । वीणावादनशिक्षानिबन्धनमेव वासवदत्तायां भर्तुस्तेऽनुरागाधिक्यमासीत्, तच्च भवत्या अपि तच्छिक्षाप्रसङ्गेन स्वात्मनि सम्पादनीयमित्याशयो गूढश्चेट्याः ।

उक्तः = 'वीणां शिक्षय मा'मिति प्रार्थितः । भणितम् = आर्यपुत्रेण किमुत्तरं दत्तम् ? । किञ्चित्=किमपि अभणित्वा, प्रतिवचनमदत्त्वैव । दीर्घम्= आयतं, निःश्वस्य = उच्छ्वस्य । तूष्णीकः = मौनावलम्बी । संवृत्तः = जातः ।

ततः=तेन तस्य तूष्णीम्भावेन । तर्कयसि=किं कारणं विभावयसि ? । केन खलु कारणेन तूष्णीम्भूतस्ते भर्त्ता ? । किमत्र कारणं तर्कयसीति प्रश्नाशयः ।

तर्कयामि=सम्भावयामि । किन्तदित्यत आह—**आर्याया** इति। गुणान्= सौन्दर्यमाधुर्याऽनुगतत्वादीन् गुणान् । स्मृत्वा = विचिन्त्य । 'अश्रुसन्नकण्ठो-

**वासवदत्ता—( आत्मगतम्- )** धण्णा खु ह्मि ! जदि एव्वं सच्चं भवे । [ धन्या खल्वस्मि यद्येवं सत्यं भवेत् ! ] ।

**( ततः प्रविशति राजा, विदूषकश्च ) ।**

**विदूषकः—ही ही !** पचिअपडिअवन्धुजीवकुसुमविरलवाद-रमणिज्जं पमदवणं । इदो दाव भवं ।

[ ही ! ही !! प्रचित-पतित-बन्धुजीवकुसुमविरलपात[1]रमणीयं प्रमदवनम् ।

अभिनवराजलक्ष्मीः

ऽपी'ति शेषः । दक्षिणतया=विदग्धतया, गाम्भीर्येण च । ममाग्रतः=मदग्रे । न रोदिति = रोदनं परिहरति । अश्रुप्रवाहं कथङ्कथमपि निरुणद्धि । इति = इत्थं तर्कयामि । 'दाक्षिण्यतये'ति क्वचित्पाठः । तत्रापि स्वार्थे ष्यञा दाक्षिण्येनेत्येवार्थः ।

धन्या = सौभाग्यशालिनी । कृतार्थेति वा । खलु = निश्चयेन । एवं = यदियं पद्मावती तर्कयति तत् । सत्यं = तथ्यम् । यदि मद्गुणान्स्मरति भर्त्ता, मामनुशोचति च, तर्हि धन्यमहमात्मानं मन्ये इत्याशयः । 'अस्मी'त्यहमर्थेऽव्ययम् । 'भवे'दित्यध्याहार्यम् । 'धन्याऽहं खलु भवेयं यद्येवं भवे'दिति केचित् ।

ततः = पुष्पावचयाद्यनन्तरम् । राजा=उदयनः । विदूषकः=वसन्तकः । ही–हीति हर्षे, अट्टहासे च देशी । [ 'ओहो हो, हा हा' ] । पूर्वं प्रचितानि= समृद्धानि, पश्चात्पतितानि = स्वयमेव विशीर्णानि च-यानि बन्धुजीवानाम्–बन्धूकवृक्षाणां [ 'ओडहुल'इति प्रसिद्धानां ], कुसुमानि,-प्रचितपतितबन्धुजीवकुसुमानि । तेषां विरलेन पातेन रमणीयं–प्रचितपतितबन्धुजीवकुसुमविरल-पातरमणीयम् = यथासमयसमृद्ध-विशीर्णबन्धूकपुष्प-विरलविरलपतनमनोहरम् । प्रमदवनम् = अन्तःपुरोचितमुद्यानं । 'दृश्यते'इति शेषः। 'स्यादेतदेव

१ केचित्तु 'प्रचितपतितबन्धुजीवकुसुमविरलवाते'ति पठन्ति । 'अवचित-निपतितबन्धूकपुष्पमृदुलमारुते'त्यादि तदर्थं च मन्यन्ते ।

इतस्तावद्भवान् ] ।

**राजा**—वयस्य वसन्तक ! अयमयमागच्छामि ।

**कामेनोज्जयिनीं गते मयि तदा कामप्यवस्थाङ्गते,**
**दृष्ट्वा स्वैरमवन्तिराजतनयां पञ्चेषवः पातिताः ।**

---

अभिनवराजलक्ष्मीः

प्रमदवनमन्तःपुरोचित'मित्यमरः । 'बन्धूको बन्धुजीवकः' इत्यमरः ।

पूर्वं प्रकामं समृद्धानि, पश्चाच्च वातविधूननादिना विशीर्णानि, बन्धूककुसुमानीति वृक्षेषु विरलान्येव पुष्पाण्यवशिष्टानि, तानि च शनैर्वातान्दोलितैर्विशीर्यन्ते, तेन च मनोज्ञमिदं प्रमदवनं शोभते इत्याशयः । स्वल्पावशिष्टबन्धूककुसुमसम्पातमनोहरं प्रमदवनमिति तु सरलोऽर्थः । 'प्रचित'–पदस्य–अवचितानीत्यर्थस्तु नोचितः, तस्य तथाऽर्थाऽप्रसिद्धेः । इतस्तावद्भवान् = अनेन पथाऽऽगच्छतु भवान् । वयस्य = सखे ! अयमयम् = तवानुपदमेव । त्वत्पृष्ठत एवेति यावत् । 'अयमहमागच्छामी'ति गौडाः पठन्ति । अयमहं = विरहाकुलितस्वान्तो, मदनबाणाहतश्च ।

स्वस्य विरहवैकल्यं, मदनेषुविद्धत्वञ्च विशदयति—कामेनेति ।

[ अन्वयः ] तदा उज्जयिनीं गते,–अवन्तिराजतनयां दृष्ट्वा कामपि अवस्थां गते,–मयि–स्वैरं कामेन पञ्च इषवः पातिताः । तैः हृदयम् अद्यापि सशल्यमेव । च भूयः वयं विद्धाः ! । यदा मदनः पञ्चेषुः, कथमयं षष्ठः शरः पातितः ? ।

[ विग्रहः ] अवन्तीनां-देशविशेषस्य राजा—अवन्तिराजः, तस्य तनया—अवन्तिराजतनया, ताम्—। शल्येन सहितं–सशल्यम् ।

**तैरद्यापि सशल्यमेव हृदयं, भूयश्च विद्धा वयं,**
**पञ्चेषुर्मदनो यदा कथमयं षष्ठः शरः पातितः ? ॥१॥**

अभिनवराजलक्ष्मीः

[ अर्थः ] तदा = उज्जयिनीराजमहासेनस्य मन्त्रिणा कूटहस्तियन्त्रव्याजेन निगृह्य यदाऽहमुज्जयिन्यां नीतस्तदा। उज्जयिनीङ्गते = विशालाम्प्राप्ते। किञ्च अवन्तिराजतनयां = प्रद्योतदुहितरं वासवदत्तां, स्वैरं = विस्रब्धं, दृष्ट्वा = समीक्ष्यैव। कामपि = अनिर्वचनीयाम्। अवस्थां = दशां, गते = प्रतिपन्ने। मयि = उदयने। कामेन = मन्मथेन। पञ्चेषवः = युगपत् पञ्चापि स्वस्य बाणाः। पातिताः = मयि प्रक्षिप्ताः। मद्धृदये निखाताश्च। कामस्य पञ्चेषवो यथा—

'अरविन्दमशोकञ्च चूतञ्च नवमल्लिका।
नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायकः॥' इति।

तैः = पञ्चभिरिषुभिः। हृदयं = मद्धृदयम्। अद्यापि = उपरतायामपि तस्यां वासवदत्तायां। गतेऽपि = बहुतिथेऽनेहसि। सशल्यमेव = निगूढशल्यमेव। 'वर्त्तते' इति शेषः।

अवन्तिराजभवनं प्राप्ते मयि वासवदत्तादर्शनसमकालमेव मयि पञ्चापि बाणा युगपदेव कामेन पातिता आसन्, दिवङ्गतायामपि च तस्यामद्यापि ते पञ्चापि बाणा मद्धृदये निखाता एव वर्त्तन्ते। तादृश एवानुरागो वासवदत्तायामद्याप्यस्त्येव ममेति यावत्। च = तथापि। भूयः = पुनरपि—पद्मावतीप्रेक्षणसमकालमेव, वयं = वासवदत्तानुरागपरिपूरितस्वान्ता अपि वयम्। 'अस्मदो द्वयोश्चे'ति बहुवचनम्। विद्धाः = मदनेषुणा सन्ताडिताः स्मः। यदा = यर्हि। मदनः = कामः। पञ्चेषुः = पञ्चबाण एव। 'तर्हि'ति शेषः। अयं = पद्मावतीदर्शनावसरे कामेन मयि निक्षिप्तोऽयम्। षष्ठः शरः = पूर्वनिखातबाणपञ्चकव्यतिरिक्तो बाणः। कथं = केन प्रकारेण, कुत आनीय च। पातितः = मयि निक्षिप्तः ?।

**विदूषकः**—कहिं णु खु गदा तत्तहोदी पदुमावदी ?। लदामण्डवं गदा भवे ?। उदाहो असणकुसुमसञ्छिदं वग्घचम्मावगुंठिदं विअ पव्वदतिलअं णाम सिलापट्टअं गदा भवे ?। आदु अधिअकडुअ-गन्धसत्तच्छदवणं पविट्ठा भवे ?। अहवा आलिहिदमिअपक्खि-संकुलं दारुपव्वदअं गदा भवे ?।

[ कुत्र नु खलु गता तत्र भवती पद्मावती ?। लतामण्डपं गता

---

अभिनवराजलक्ष्मीः

वासवदत्तानुरागभरिते निरवकाशेऽपि मद्धृदये पद्मावतीविषयको-ऽनुरागोऽपि किञ्चिदिव समुन्मेषं भजते इत्याशयः। वासवदत्तादर्शनावसरे तु कामेन पञ्चापि बाणाः सहैव मयि प्रेरिताः, पद्मावतीप्रेक्षणावसरे तु षष्ठ एक एव बाणो मयि निक्षिप्त इति महदेव तयोस्तारतम्यमिति च गूढ आशयः।

किञ्च—'उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा।
संमोहनश्च कामस्य पञ्च बाणाः प्रकीर्त्तिताः॥'

—इत्येवं दुर्निवारतया प्रसिद्धा अप्रतिहता बाणाः कामेन वासवदत्तादर्शन-वेलायामेव मयि निक्षिप्ताः, प्रमीतायां तस्यामिदानीं पद्मावतीदर्शनसमये तु एकः—तद्व्यतिरिक्तः, कुतश्चिदानीय सामान्यो बाण एव मयि निक्षिप्त इति न तादृशी मे कामव्यथा, नापि तथाऽनुरागस्तस्यामित्यपि सूचितम्।

किञ्च वासवदत्तानुरागभरितेऽपि स्वान्ते पद्मावतीस्नेहस्याऽपि मनाक् समवेशोऽवगन्तव्य इति प्रियां पद्मावतीं विना उत्कण्ठतेऽद्यास्माकं चेत इत्यपि च सूचितम्। [ शार्दूलविक्रीडितं वृत्तम्। प्रतिमुखसन्धेर्विलासो नामाङ्गम्। 'समीहा रतिभोगार्थां विलास इति कथ्यते' इत्युक्तेः ] ॥१॥

उदयनस्य पद्मावतीविरहखेदं दृष्ट्वा तदपनयनाय पद्मावतीमन्विष्यन्विदूषक-स्तर्कयति—**कुत्रेति**। वक्ष्यमाणेषु स्थानेषु—कस्मिन् स्थाने गता भवेदित्यर्थः।

भवेत् ? । उताहो असनकुसुमसञ्चितं व्याघ्रचर्मावगुण्ठितमिव[1] पर्वततिलकं नाम शिलापट्टकं गता भवेत् ?, अथवा [2]अधिककटुकगन्ध-सप्तच्छद-वनं प्रविष्टा भवेत् ?, अथवा आलिखितमृगपक्षिसंकुलं दारुपर्वतकं गता भवेत् ? ] ।

**(ऊर्ध्वमवलोक्य–)**

**ही ! ही !! सरअकालणिम्मले अन्तरिक्खे पसारिअवलदेवबाहु-हंसणीअं सारसपन्तिं जाव समाहिदं गच्छन्तिं पेक्खदु दाव भवं ।**

---

अभिनवराजलक्ष्मीः

तानि स्थानान्येव निर्दिशन् सम्भावयति–लतेति । लतामण्डपं = माधवी-लतामण्डपम् । गता भवेत् = नूनं तत्र गता स्यादिति सम्भावयामीत्यर्थः ।

उताहो=अथवा । 'आहो उताहो किमुत विकल्पे किं किमूत चे'त्यमरः । असनस्य = सर्जकाख्यवृक्षविशेषस्य, कुसुमैः=पुष्पैः, सञ्चितं = संपन्नम्–असन-कुसुमसञ्चितम् । व्याघ्रचर्मणा = द्वीपिचर्मणा[1], अवगुण्ठितमिव = आवृतमिव, 'विभाव्यमान'मिति शेषः । पर्वतस्य तिलकमिव–पर्वततिलकं = पर्वततिलक-नामकम् । शिलापट्टकं = रत्नपाषाणफलकं, गता = प्रयाता, भवेत्=स्यादिति सम्भावयामि । अत्र हि—असनकुसुमानां व्याघ्रचर्मचिह्नसदृशतया तदावृत-त्वाच्छिलाफलकस्य व्याघ्रचर्मावगुण्ठितत्वमुत्प्रेक्षितम् । अथवा = किं वा ? । अधिकं कटुको गन्धो येषान्ते—अधिककटुकगन्धाः, ते च ते सप्तच्छदाश्च,

---

१ अत्र व्याघ्रचर्मपदेन तदाकृति महर्घ-कौशेय-घटितं विचित्रवर्णं कुथा-स्तरणमपि ग्राह्यम् । [ व्याघ्रचर्म = बाघम्बरनुमा दुशाला, या गलीचा ] इति गौडाः ।

२ अत्र लतामण्डपेऽन्धकारादिभीता, शिलाफलके व्याघ्रादिभीता, अन्यत्र तीक्ष्णगन्धोद्विग्ना च न गमिष्यतीति सम्भाव्योत्तरोत्तरोपन्यास इत्यवधेयम् ।

[ ( ऊर्ध्वमवलोक्य— )

ही ! ही !! शरत्कालनिर्मलेऽन्तरिक्षे प्रसारित-बलदेव-बाहुदर्शनीयां सारसपङ्क्तिं यावत् समाहितं गच्छन्तीं प्रेक्षतां तावद्भवान् ! ] ।

---

अभिनवराजलक्ष्मीः

तेषां वनम्—अधिककटुकगन्धसप्तच्छदवनं = तीक्ष्णगन्धशालिसप्तपर्णकाननम् । 'सप्तपर्णो विशालत्वक् शारदो विषमच्छदः' इत्यमरः । प्रविष्टा = प्रयाता भवेत् । मृगाश्च पक्षिणश्च मृगपक्षिणः, आलिखितैः = उत्कीर्णैः, चित्रितैश्च, मृगपक्षिभिः संकुलम्—आलिखितमृगपक्षिसङ्कुलं = चित्रितनानाविधपशु-पक्षिसमाकीर्णम् । दारुणा निर्मितः—पर्वतकः[1]—दारुपर्वतकस्तं=क्रीडापर्वत-कम् । 'मृगः पशौ कुरङ्गे चे'ति मेदिनी । [ एतेन परिसर्पो नाम प्रतिमुख-सन्धेरङ्गं दर्शितम् । 'इष्टनष्टानुसरणं परिसर्पश्च कथ्यते' इत्युक्तेः ] ।

इत्थं वितर्कयन्नेव कौतुकप्रदर्शनेन तन्मनो विनोदयितुं विदूषकः सारस-पङ्क्तिं दर्शयति—**शरदिति** । 'हीही'ति उपहासे, विस्मये, हर्षे च । शर-त्कालेन निर्मले = स्वच्छे, अन्तरिक्षे = आकाशे, प्रसारितौ यौ बलदेवस्य बाहू तद्वद्दर्शनीयां = धवलां, मनोहरां, व्यायतां, प्रेक्षणार्हां, नयनानन्दजननीमिति वा । बलभद्रस्य भगवतो बाहू च — व्यायतौ, अतितरां श्वेतौ चेति प्रसारित-तद्बाहुदण्डेन शुभ्रवर्णा सारसपङ्क्तिरुपमितेति तत्त्वम् । 'प्रसादिते'ति मुद्रितः पाठः । प्रकृतिधवलावपि कर्पूरचूर्णादिसंस्कारादिना नितरां धावल्यमाप्ताविति च तदर्थो बोध्यः । सारसपङ्क्तिं = सारसश्रेणिम् । समाहितं यावत् गच्छन्तीं = समाहितं—सुसङ्घटितं यथा स्यात्तथा—साकल्येन विहायसा गच्छन्तीम्, उड्डीयमानामिति यावत् । तावत् = प्रथमम् । पश्यतु = विलोकयतु । पश्चा-त्पद्मावतीमन्वेषयिष्याम इत्याशयः ।

---

१ पर्वतस्य—प्रतिकृतिः—पर्वतकः । इवार्थे कन् । दारुनिमितः पर्वतकः—दारुपर्वतकः, तमिति विग्रहः ।

**राजा**—वयस्य ! पश्याम्येनाम्—

**ऋज्वायतांश्च विरलांश्च नतोन्नतांश्च**
**सप्तर्षिवंशकुटिलांश्च निवर्त्तनेषु ।**
**निर्मुच्यमानभुजगोदरनिर्मलस्य**
**सीमामिवाम्बरतलस्य विभज्यमानाम्[1] ॥२॥**

**चेटी**—पेक्खदु-पेक्खदु भट्टिदारिआ-एदं कोकणदमालापण्डररमणीअं सारसपन्तिं जाव समादिहं गच्छन्ति । अम्मो ! भट्टा !! ।

---

अभिनवराजलक्ष्मीः

'वयस्य ! पश्याम्येना'मिति च-श्लोकेनाग्रिमेण सहैवान्वेति । वयस्य = सखे ! । एनां = सारसपङ्क्तिम् ।

पश्यन्नेव च तां वर्णयति—ऋज्वायतामिति ।

[ अन्वयः ] वयस्य ! ऋज्वायतांश्च, विरलांश्च, नतोन्नतांश्च, निवर्तनेषु सप्तर्षिवंशकुटिलांश्च, निर्मुच्यमानभुजगोदरनिर्मलस्य अम्बरतलस्य सीमामिव विभज्यमानाम्-[ एनां पश्यामि ] ।

[ विग्रहः ] ऋज्वी चासौ आयता च—ऋज्वायता, ताम् । नता च सा उन्नता च नतोन्नता, ताम् । सप्त च ते ऋषयश्च सप्तर्षयः । सप्तर्षीणां वंशः, सप्तर्षय एव वंश इति वा—सप्तर्षिवंशः, सप्तर्षिवंश इव कुटिला-सप्तर्षिवंशकुटिला, ताम् । निर्मुच्यमानो यो भुजगस्तस्य यत्-उदरं, तद्विन्निर्मलं-निर्मुच्यमानभुजगोदरनिर्मलं, तस्य । अम्बरस्य तलम्-अम्बरतलं, तस्य-अम्बरतलस्य ।

[ अर्थः ] वयस्य=हे सखे ! ऋज्वायतांश्च=सरलविस्तीर्णाम् । सरलतया विस्तृतामिति यावत् । 'दीर्घमायत'मित्यमरः। विरलांश्च=सान्तराम् , परस्परमसंश्लिष्टाम् , तन्वीमिति वा । 'पेलवं विरलं तनु' इत्यमरः । नतोन्नतांश्च = उच्चावचाम् , क्वचिन्निम्नान्तथा क्वचिदुच्छ्रितामिति यावत् ।

१ 'विभाव्यमाना'मिति च केचित् पठन्ति ।

[ प्रेक्षतां—प्रेक्षतां भर्तृदारिका–एतां कोकनदमालापाण्डररमणीयां सारस-पङ्क्तिं–यावत्समाहितं गच्छन्तीम् ! । अम्मो ! भर्ता !! ] ।

---

अभिनवराजलक्ष्मीः

किञ्च—निवर्त्तनेपु = पार्श्वपरिवर्त्तनेपु, वामे, दक्षिणे, अग्रे, पश्चाद्वा वक्रीभूय गमनेषु इति यावत् । सप्तर्षिवंशकुटिलाञ्च = सप्तर्षिमण्डलवक्राकाराञ्च । उत्तरदिशि गगने सप्तर्षिवंशो वक्राकारो रात्रावुदेति, तद्वत्क्वचित्सरला, क्वचिद्वक्रा, लम्बमाना चेति भावः । किञ्च—निर्मुच्यमानभुजगोदरनिर्मलस्य= सद्योमुच्यमानकञ्चुक[१]–सर्पोदरनीलस्निग्धप्रभस्य । अचिरनिर्मुक्तकञ्चुकस्य भुजगोदरस्येव नीला स्निग्धा निर्मला च कान्तिर्यस्य तादृशस्य गगनतलस्येति यावत् । विभज्यमानां सीमामिव = स्पष्टं प्रतीयमानां मर्यादामिव । 'एनां सारसपङ्क्तिं । 'विभावयामी'त्येवं श्लोकबहिःस्थितेन 'पश्याम्येना'मित्यनेन सम्बन्धोऽनुसन्धेयः । केचित्तु–विभज्यमानां=पूर्वापरभागद्वयेन कल्प्यमानामि-त्यर्थ–इत्याहुः । शरदि उड्डीयमानेयं सारसपङ्क्तिर्गगनतलसीमेव प्रतिभासते इति भावः । उपमा, उत्प्रेक्षा, स्वभावोक्तिश्च । वसन्ततिलकं वृत्तम् ॥ २ ॥

विदूषकवत्पद्मावतीं पर्युत्सुकां विनोदयितुं चेटी तावदाह—पश्यत्विति । भर्त्तृदारिका = पद्मावती । कोकनदानां = श्वेतकमलानाम् । या माला = पंक्तिः, तद्वत्पाण्डरा = श्वेता । 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः' इत्यमरः । अत एव रमणीया = मनोहरा, ताम् । 'रक्तोत्पलं कोकनद'मित्यमरप्रामाण्येन कोकनदशब्दो रक्तकमलपरोऽपि प्रकृते औचित्यात् श्वेतकमलमात्रपरो बोध्यः । 'पाण्डुर' इति क्वचित्पाठः, स च न युक्तः, 'हरिणः पाण्डुरः पाण्डु'रित्यमरप्रामाण्येनेषत्पीतशुक्लवाचकताया एव पाण्डुरशब्दे लाभात् । कोकनदपदवद्वा तत्र कथञ्चिद्व्यवस्था बोध्या । नीचपात्रभाषितत्वाच्चेदृशो-ऽपुष्टः प्रयोगः क्षन्तव्य एवेत्यप्यववेयम् । सारसपङ्क्तिं = पुष्कराख्यपक्षि-

---

१ निर्मुच्यमानं=कंचुकाद्बहिर्निस्सरत्; यत्–भुजगस्य=नागस्य उदरं, तद्वन्नीलं मसृणञ्चेत्याशयः । निर्मुच्यमानो यो भुजग इति रीत्या सर्पविशेषणं वा इदम् ।

**पद्मावती**—हं ! अय्यउत्तो !! अय्ये ! तव कारणादो अय्यउत्त-दंसणं परिहरामि । ता इमं दाव माहवीलतामण्डवं पविसामो ।

[ हम् ! आर्यपुत्रः !! । आर्ये ! तव कारणादार्यपुत्रदर्शनं परिहरामि । तदिमं तावन्माधवीलतामण्डपं प्रविशावः ] ।

**वासवदत्ता**—एव्वं होदु ।

[ एवं भवतु ] ।

**( तथा कुर्वन्ति )** ।

अभिनवराजलक्ष्मीः

मालाम् । यावत् = साकल्येन, समाहितम् = अविच्छिन्नश्रेणिबन्धं—यथा स्यात्तथा सुसङ्घटितरूपेण, गच्छन्तीम् = गगने प्रयान्तीम् । प्रेक्षत = पश्यतु । एतेन परिभावना नाम मुखसन्धेरङ्गं दर्शितम् । 'कुतूहलोत्तरा वाचः स्मृता तु परिभावना' इति दर्पणोक्तेः ।

इत्थं सारसमालाऽवलोकनायोदयनस्य, पद्मावत्याश्च सममेव विदूषक-चेटीभ्यामौत्सुक्ये समुत्पादिते सति सारसमालाविलोकनप्रवणां पद्मावतीं प्रति चेटी-उदयनं सहसा दृष्ट्वा-तावदाह—**अम्मो इति** । आश्चर्यमेतत् ! भर्त्ता = उदयनोऽपि । 'सारसपङ्क्तिं विलोकयति' इति शेषः । यद्वा 'समुपस्थित' इति शेषो बोध्यः । 'अग्रे वर्त्तते' इति शेष इति तु गौडाः । 'हं'मिति प्रश्ने आश्चर्ये, व्याकुलीभावे च निपातः । अम्मो = अहो । आश्चर्यमत्याहितञ्च यदत्र आर्यपुत्रोऽपि समायात इत्यर्थः । ( हैं ! = अरी मैया ! मालिक भी यहीं हैं ! ) ।

आर्ये = वासवदत्ते ! । तव कारणात् = त्वदर्थम् । यतस्त्वया परपुरुषदर्शनं परिहरणीय, ( न्यासस्य प्रतिपालनञ्च मया यथावत्कर्त्तव्यमेव )—अतस्त्वदनु-रोधेनाऽभीष्टमपि आर्यपुत्रदर्शनं—परिहरामि = परिवर्जयामि । एवञ्च सम्प्रति आर्यपुत्रोऽस्मान् यथा नावलोकयेत्तथा करणीयमित्याशयः । तत् = तस्मात् । इमं = सन्निहितम् । माधवीलतामण्डपं = वासन्तीलतानिकुञ्जभवनम् । एवं =

**विदूषकः**—तत्तहोदी पदुमावती इह आअच्छिअ णिग्गदा भवे ?।

[ तत्रभवती पद्मावती इहागत्य निर्गता भवेत् ? ]।

**राजा**—कथं भवाञ्जानाति ?।

**विदूषकः**—[1]इमाणि अवइदकुसुमाणि सेफालिआगुह्मआणि[2] पेक्खदु दाव भवं।

[ इमानवचितकुसुमाञ्छेफालिकागुल्मान् प्रेक्षतां तावद्भवान् ]।

---

अभिनवराजलक्ष्मीः

यथा भवती ब्रूते, तथा भवतु = तथैव विधेयम्। तथा कुर्वन्ति = माधवीलताभवनं सर्वाः प्रविशन्ति। कविवाक्यमेतत्।

लतामण्डपं प्रविष्टासु पद्मावतीप्रभृतिषु तत्र प्रविष्टो विदूषको राजानं सवितर्कमाह—तत्रेति। इह = अस्मिन् सेफालिकासुमनोहरे प्रमदवनप्रदेशे। आगत्य = भवन्तं सम्भावयितुमागत्य, भवत्प्रतीक्षया चिरमत्र स्थित्वाऽपि। निर्गता भवेत् = भवन्तमदृष्ट्वा प्रयातेति तर्कयामि। कथमिति। 'पद्मावतीइहाऽऽगता मामदृष्ट्वा पुनः प्रतिनिवृत्त्य गते'ति च भवान् कथं जानातीति प्रश्नाशयः। अवचितानि कुसुमानि येषां, येभ्यो वा—तान् अवचितकुसुमान्=त्रोटितपुष्पान्। शेफालिकागुल्मकान्[2]=निर्गुण्डीपादपान्। 'गुच्छका'निति पाठे तु निर्गुण्डीस्तबकानवचितकुसुमान्पश्येत्यर्थो बोध्यः। प्रेक्षतां=स्पष्टं पश्यतु भवान्। 'नहि पद्मावतीवल्लभान्, तया परिरक्षितांश्च शेफालिकागुल्मकानन्याऽवचेतुं प्रभवति !, तस्मात्सैवेहागता, पुनश्च निर्गतेति मन्तव्य'मित्याशयः।

---

१ 'अवइदाणि सेफालिकाकुसुमाणि पेक्खदु दाव भवं' मिति पाठे—अवचितानि शेफालिकाकुसुमानि प्रेक्षतां तावद्भवा'निति च्छाया।

२ 'गुच्छआणो'ति पाठे 'गुच्छका'निति च्छाया। गुच्छकाः = स्तवकाः। [ 'गुच्छा' ] 'गुह्मआणि' इति तु युक्तः पाठः। गुल्मकानिति च तच्छाया।

**राजा**—अहो ! विचित्रता कुसुमस्य वसन्तक ! ।

**वासवदत्ता**—( **आत्मगतम्**- ) वसन्तअ-संकित्तणेण अहं पुण जाणामि—'उज्जइणीए वत्तामि'त्ति ।

[ (आत्मगतं-) वसन्तकसङ्कीर्तनेनाहं पुनर्जानामि-'उज्जयिन्यां वर्त्ते'इति ]।

**राजा**—वसन्तक ! अस्मिन्नेवाऽऽसीनौ शिलातले पद्मावतीं प्रतीक्षिष्यावहे ।

**विदूषकः**—भो तह । ( **उपविश्योत्थाय**- ) ही ही सरअकाल-तिक्खो दुस्सहो आदवो ! ता इमं दाव माहवीमण्डवं पविसामो । [ भोस्तथा । ( उपविश्योत्थाय- ) ही ! ही !! शरत्कालतीक्ष्णो

अभिनवराजलक्ष्मीः

विदूषकोक्त्या शेफालिकागुल्मैकव्यापृतदृष्टिस्तत्कुसुमसमृद्धिवैचित्र्यं दृष्ट्वा राजा तत् प्रशंसन्नाह—अहो इति । 'वसन्तके'तिविदूषकस्य नामधेयम् । विचित्रता = दर्शनीयता । नानावर्णसन्निवेशचारुतेति यावत् ।

वसन्तकस्य = आर्यवसन्तकस्य विदूषकस्य । सङ्कीर्त्तनेन = नामग्रहणेन । जानामि = अवगच्छामि । किन्तदित्यत आह—उज्जयिन्यामिति । उज्जयिन्यां हि [ वसन्तकेन सहित ] उदयनः प्रद्योतेन वासवदत्ताजनकेन बद्ध्वा आनायितः स्वपुत्र्यास्तेन सहविवाहार्थम् । तत्र च चिरं वसन्तकसहितो राजोदयन उवासेति—वसन्तकनाम श्रुत्वा उज्जयिनीनिवाससमयसौख्यस्मरणं वासवदत्ताया युक्तमेव । वर्त्ते इति=निवसामीति । 'जानामी'त्यनेन सम्बन्धः ।

अस्मिन् शिलातले=इहस्थे शिलाफलके । [यत्र पूर्वं पद्मावती क्षणमुपविष्टाऽऽसीत्तत्रैव शिलापट्टके इति यावत् ] । आसीनौ–स्थितौ । प्रतीक्षिष्यावहे = पद्मावत्या आगमनं प्रतिपालयावः । नूनं कुसुमसमृद्धिं, माञ्च द्रष्टुं सा पुनरागमिष्यति, अतस्तावदत्र तन्मेलनाय स्थितिरावयोरुचितेत्याशयः ।

तथा = युक्तमुक्तं भवता । अत्रैवोपविशावः । उपविश्य = कञ्चित्कालं शिलाफलके स्थित्वा, पश्चात्तचरितम्—उत्थाय = तत उत्थाय । ही ही हा !

दुःसह आतपः, तदिमं तावन्माधवीमण्डपं प्रविशावः ]।

**राजा**—बाढम्। गच्छाऽग्रतः।

**विदूषकः**—एव्वं होदु।

[ एवं भवतु ]।

( उभौ परिक्रामतः )।

**पद्मावती**—सव्वं आउलं कत्तुकामो अय्यवसन्तओ। किं दाणिं करेम्ह ?।

[ सर्वमाकुलं कर्तुकाम आर्यवसन्तकः। किमिदानीं कुर्मः ? ]।

**चेटी**—भट्टिदारिए ! एदं महुअरपरिणिलीणं ओलंबलदं ओधूय भट्टारं वारइस्सं।

---

अभिनवराजलक्ष्मीः

हा ! कष्टेऽत्र हीशब्दः। शरत्कालेन=शरत्समयेन, तीक्ष्णः=प्रखरः—शरत्कालतीक्ष्णः। अत एव दुःसहः=सोढुमशक्यः। आतपः=सूर्यसन्तापः। [आतप='तावड़ा' 'घाम' 'रौंदा']। तत्=तस्मात्, तदपनयनायेति यावत्।

इमं=निकटस्थितम्। माधवीमण्डपं तावत्—माधवीलताकुञ्जोदरमेव। 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः। बाढं=युक्तं ब्रूषे। तीक्ष्णो दुःसहस्तावदातपस्तन्माधवीलतागृहं प्रविशावः। अग्रतः=अग्रे मार्गदर्शनाय। गच्छ=अपसर। 'बाढ'मित्यभ्युपगमेऽव्ययमित्यपि बोध्यम्।

एवं भवतु=अहमग्रे गच्छामि। शोभनमेतद्भवतो मन्त्रितमित्याशयः। परिक्रामतः=किञ्चित्पदान्तरं मण्डपाभिमुखं गच्छतः। माधवीलतामण्डपं प्रति आगच्छन्तौ तौ दृष्ट्वा तत्र निलीना पद्मावती तावदाह—**सर्वमिति**। आर्यपुत्रदर्शनपरिहारार्थमनुष्ठितं सर्वं मे प्रयासम्। आकुलं=व्यर्थम्। कर्त्तुं कामोऽभिलाषो यस्यासौ-कर्त्तुकामः=कर्त्तुमुद्यतः। आर्यवसन्तकः=मान्यो वसन्तकः। भर्त्तुः सहचरतया मान्यत्वं विदूषकस्य। इदानीम्=सम्प्रति। किं कुर्मः=किन्नु विधेयम्?। अन्तरायात आर्यपुत्रोऽस्मान्द्रक्ष्यति, आवन्तिका

भर्तृदारिके ! एतां मधुकरपरिनिलीनामवलम्बलतामवधूय भर्तारं वारयिष्यामि ]।

**पद्मावती**—एव्वं करेहि ।

[ एवं कुरु ]।

**( चेटी—तथा करोति )।**

**विदूषकः**—अविहा ! अविहा ! चिट्ठदु चिट्ठदु दाव भवं ।

[ अविह[1] ! अविह ! तिष्ठतु तिष्ठतु तावद्भवान् ]।

**राजा**—किमर्थम् ? ।

अभिनवराजलक्ष्मीः

च परपुरुषदर्शनं परिहरति, तदत्र किं नु करोमि ! येनार्यपुत्रोऽस्मान्नैव पश्येदित्याशयः । एतेन तापनं नाम प्रतिमुखसन्धेरङ्गं दर्शितम् । 'उपाया-ऽदर्शनं तत्तु तापन'मिति दर्पणोक्तेः ।

मधुकरैः=भ्रमरैः, परि = सर्वतः, निलीनां=व्याप्ताम् । [मधुकराः परिनिली-नाः=परितो व्याप्य स्थिता यस्यां, यां वा सा—तामिति वा समासः ] । परितो भ्रमरकुलैराकुलामिति यावत् । अवलम्बलताम् = मण्डपाधारभूतां माधवी-लताम् । मण्डपद्वारपर्यन्तं विस्तृतामेतां लतामिति यावत् । अवधूय = कम्पयित्वा । कम्पनेन भ्रमरडम्बरं विधायेति यावत् । भर्त्तारम् = उदयनम् । वारयामि = निषेधामि—यदि भवती अनुमन्यते—इत्याशयः ।

एवं कुरु = यथा त्वं कथयसि तथा कृत्वा भ्रमरोत्थापनेन भर्त्तारं वारय । तथा करोति = अवलम्बलताकम्पनेन भ्रमरकुलमुत्थापयति । अविहेति खेदे, रोदने च देशी । [अरे बप्पारे ! हाय रे बप्पा !] । तिष्ठतु-तिष्ठत्विति सम्भ्रमे द्वित्वम् । भवान् मा प्रविशतु माधवीमण्डपं, बहिरेव तिष्ठतु तावदिति भावः । किमर्थं = कुत एवं वदसि ? । दास्याःपुत्रैः =

१ 'अविहा' पा० ।

**विदूषकः**—दासीए पुत्तेहि महुअरेहि पीडिदो म्हि ।
[ दास्याःपुत्रैर्मधुकरैः पीडितोऽस्मि ] ।

**राजा**—मा मा भवानेवम् । मधुकरसन्त्रासः परिहार्यः । पश्य,—

**मधुमदकला मधुकरा**
**मदनार्त्ताभिः प्रियाभिरुपगूढाः ।**
**पादन्यासविषण्णा**
**वयमिव कान्ताविमुक्ताः स्युः ॥३॥**

---

अभिनवराजलक्ष्मीः

जाल्मैर्दास्याःपुत्रैः । पापैरिति यावत् । आक्रोशे षष्ठ्या अलुक् । पीडितः = आक्रान्तो, दष्ट इति वा ।

मा मा भवानेवं=मा खलु भवान्माधवीलतामण्डपाभ्यन्तरं प्रविशतु । त्वं बहिरपगच्छेति यावत् । अन्तःप्रवेशेन त्वया भ्रमरकुलस्य क्लेशो नोत्पाद्य इत्याशयः । तमेव विशदयन्नाह—मधुकरेति । मधुकराणां=भ्रमराणां, सन्त्रासः = सन्तापः, परिहार्यः = नोत्पाद्यः । न विधेय इत्यर्थः । भवतो मण्डपप्रवेशेन मधुकराणां सन्त्रासो भवति, अतो निस्सरतु तावद्बहिर्भवानिति हृदयम् ।

ननु कुत एवं भवान्भणतीत्यत आह—पश्येति । विभावयैतत् । किन्तदित्यत आह—मधुमदेति ।

[अन्वयः] मधुमदकलाः मदनार्त्ताभिः प्रियाभिः उपगूढाः मधुकराः पादन्यासविषण्णाः सन्तः वयमिव कान्ताविमुक्ताः स्युः [ –इति पश्य ] ।

[विग्रहः] मधुनो मदः—मधुमदः, तेन कलाः—मधुमदकलाः । मधु कुर्वन्तीति मधुकराः । मदेन आर्त्ताः—मदनार्त्ताः, ताभिः । पादानां न्यासः, तेन विषण्णाः—पादन्यासविषण्णाः । कान्ताभिर्वियुक्ताः—कान्तावियुक्ताः ।

[अर्थः] मधुमदकलाः=मकरन्दरसपानमत्ताः, कलं गुञ्जन्तश्च । अत एव स्वप्रियाचित्तवर्जनायाऽव्यक्तं गुञ्जन्त इति यावत् । 'मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे' इति मेदिनी । 'ध्वनौ तु मधुराऽस्फुटे—कलः' इत्यमरः । पुष्परसा-

—तस्मादिहैवाऽऽसिष्यावहे ।

**विदूषक**—एव्वं होदु ।

[ एवं भवतु ] ।

( उभावुपविशतः ) ।

**राजा—( अवलोक्य- )—**

**पादाक्रान्तानि[1] पुष्पाणि, सोष्म चेदं शिलातलम् ।**
**नूनं काचिदिहाऽऽसीना, मां दृष्ट्वा सहसा गता ! ॥४॥**

अभिनवराजलक्ष्मीः

स्वादमदेन मत्ताः सन्तोऽव्यक्तमधुरध्वनिं वितन्वन्त इति यावत् ।

केचित्तु—मधुमदेन कलाः = मूकाः—प्रियोपभोगप्रवणतया मौनावलम्बिनः, 'जडो मूकः कलोऽप्यथा'गिति यादवः—इति व्याचक्रुः । किञ्च मदनार्त्ताभिः = मन्मथबाणपीडिताभिः । कामार्त्ताभिरिति यावत् । प्रियाभिः = स्वप्रेयसीभिर्मधुकरीभिः । उपगूढाः = दृढमालिङ्गिताः । प्रारब्धनिधुवना इति तु तत्त्वम् ।

मधुकराः = भ्रमराः,—पादन्यासविषण्णाः = अस्मच्चरणविन्यासेनोद्विग्नाः—सन्तः, वयमिव = अहमिव । 'अस्मदो द्वयोश्चे'ति बहुत्वम् । कान्तावियुक्ताः = स्वप्रियाविरहिताः—स्युः । अस्मत्पादन्यासैः सन्त्रस्तानां भ्रमराणां निधुवनविच्छेदविरक्ताभिः स्वप्रेयसीभिर्वियोगो भवेदतो न त्वया मधुकरसन्त्रासो विधेय इत्याशयः । आर्यावृत्तम् । उपमाऽलङ्कारः ॥ ३ ॥

एवञ्च न वयं मण्डपस्याऽन्तः प्रवेक्ष्यामः, किन्तु मण्डपाद्बहिरेव स्थास्याम इति सूचितम् ।

तस्मात् = यतोऽनुचितो मधुकरसन्त्रासः, अतः । इहैव = अस्मिन् शिलाफलके एव । आसिष्यावहे = उपवेक्ष्यावः । एवं = यथा भवान् मनुते तथा । अस्तु बहिरेवोपवेशनमिति यावत् । भवतु = अस्तु । बहिरेवोपविशाव इति यावत् । अवलोक्य = शिलाफलकं निर्वर्ण्य ।

१ मूलपुस्तकेऽसन्नप्ययं श्लोकः कैश्चन विद्वद्भिर्यथेच्छमत्रोद्धृतः । एतावता

**चेटी**—भट्टिदारिए ! रुद्धा खु ह्म वयं ।

[ भर्तृदारिके ! रुद्धाः खलु स्म वयम् ! ] ।

**पद्मावती**—दिट्ठिआ उवविट्ठो अय्यउत्तो ।

[ दिष्ट्योपविष्ट आर्यपुत्रः ] ।

**वासवदत्ता**—( आत्मगतम्- ) दिट्ठिआ पकिदित्थसरीरो अय्यउत्तो ।

[ ( आत्मगतं ) दिष्ट्या प्रकृतिस्थशरीर आर्यपुत्रः ] ।

---

अभिनवराजलक्ष्मीः

**पादाक्रान्तानीति** । पुष्पाणि—अधो निपतितानि । पादैराक्रान्तानि—पादाक्रान्तानि = चरणतलैर्मर्दितानि । पादन्यासमलिनानीति यावत् । च = पुनः, इदम् = अस्मदध्यासितं, शिलातलं = शिलापट्टकम्, ऊष्मणा सहितं—सोष्म = निविष्टजनसम्पर्कसञ्जाततापविशेषसंयुतम् । अतः-नूनम् = अवश्यम्, इह = अस्मिञ्छिलाफलके, आसीना = उपविष्टा, काचित् = कापि कामिनी । शिलातलोष्मादिभिस्तर्कयामि—यदिह काचिद्वरवर्णिनी समुपविष्टाऽऽसीदिति ।

ननु कथं न सा तर्हीदानीमिह दृश्यतेऽत आह—**मामिति** । मां दृष्ट्वा = मां दूरतो दृष्ट्वैव, सहसा = सद्य एव, गता = निर्गता, इतः पलायितेति यावत् । अनुमानमलङ्कारः ॥ ४ ॥

राजानं द्वारदेशस्थितं दृष्ट्वा चेटी प्राह-**भर्तृदारिके इति** । राजपुत्रिके ! हे पद्मावतीत्यर्थः । रुद्धाः = अत्र माधवीलतामण्डपे निरुद्धाः । राज्ञो बहिरेवोपविष्टत्वेन बहिर्निगमनमार्गोऽस्माकमवरुद्ध इत्याशयः । एतेन विरोधनामकं प्रतिमुखसन्धेरङ्गं दर्शितम् । 'विरोधो व्यसनप्राप्ति'रित्युक्तेः । चेट्युक्तं विभाव्यापि 'स्वपत्युर्विस्रब्धभाषितं श्रोष्यामि निगूढं स्थिते'ति हर्षात्पद्मावती प्राह—**दिष्ट्येति** । अस्मत्सौभाग्येनेत्यर्थः । उपविष्टः = स्थितः, न तु गतः,

---

पूर्वापरग्रन्थसन्दर्भो विनश्यतीति तु तैः संरम्भपरैर्नाविधारितम् । का गतिरस्माभिरपि तथैव स्थाप्यते स श्लोको, गतानुगतिकलोकानुरञ्जनायैवेति गौडाः ।

**चेटी**—भट्टिदारिए ! सस्सुपादा खु अय्याए दिट्ठी ।

[ भर्तृदारिके ! साऽश्रुपाता खल्वार्याया दृष्टिः ! ] ।

**वासवदत्ता**—एसा खु महुअराणं अविणआदो कासकुसुमरेणुणा पडिदेण सोदआ मे दिट्ठी ।

[ एषा खलु मधुकराणामविनयात्काशकुसुमरेणुना पतितेन सोदका मे दृष्टिः ] ।

**पद्मावती**—जुज्जइ ।

[ युज्यते ] ।

**विदूषकः**—भो ! सुण्णं खु इदं पमदवणं, पुच्छिदव्वं किञ्चि अत्थि । पुच्छामि भवन्तम् ? ।

[ भोः शून्यं खल्विदं प्रमदवनम् । प्रष्टव्यं किञ्चिदस्ति, पृच्छामि भवन्तम् ? ] ।

---

अभिनवराजलक्ष्मीः

न वाऽन्तःप्रविष्टः । दिष्ट्या = मदीयसौभाग्येन, दैवानुकूल्येन । 'प्रकृतिस्थं शरीरं यस्यासौ–प्रकृतिस्थशरीरः = स्वस्थदेहः । शोकावेशशून्य इति यावत् ।

इत्थं विचिन्तयन्त्या हर्षोत्फुल्ललोचनाया वासवदत्ताया नेत्रयोरीषदश्रुसञ्चारं दृष्ट्वा चेटी सूचयति–भर्तृदारिके इति । अश्रुपातेन सहिता–साऽश्रुपाता = अश्रुप्रवाहव्याकुला । आर्यायाः=वासवदत्तायाः । दृष्टिः=नेत्रयुगलम् । वासवदत्ता स्वरोदनं निगूहमानाऽश्रुप्रवाहकारणं रहस्यगोपनाय मिथ्यैव कपटादाह–एषेति । मधुकराणां = भ्रमराणाम् । अविनयात् = उपद्रवात् , इतस्ततो भ्रमणात् । पतितेन = नेत्रयोर्निपतितेन, काशकुसुमरेणुना = शरत्कालपुष्पित-काशपुष्परजसा, एषा=इयं, मे=मम, दृष्टिः=नेत्रयुगलम्, सोदका=साश्रुपाता, 'सञ्जाते'ति शेषः । पुष्परेणुपातेन मेऽश्रुनिर्गमो, नान्यथेति–नात्र कारणान्तरं भवत्या कल्पनीयमित्याशयः । युज्यते = कुसुमरेणुपातेनाऽश्रुपातः सम्भवति ।

**राजा**—छन्दतः ।

**विदूषकः**—का भवदो पिआ ?, तदाणिं तत्तहोदी वासवदत्ता, इदाणिं पदुमावदी वा ? ।

[ का भवतः प्रिया ?, तदानीं तत्रभवती वासवदत्ता ?, इदानीं पद्मावती वा ? ] ।

**राजा**—किमिदानीं भवान् महति [1]वर्द्धमानसङ्कटे मां न्यस्यति ? ।

**पद्मावती**—हला ! [2]तादिसे सङ्कडे निक्खित्तो अय्यउत्तो ! ।

[ हला ! [2]तादृशे सङ्कटे निक्षिप्त आर्यपुत्रः ] ।

---

अभिनवराजलक्ष्मीः

शून्यं = विजनं, जनसञ्चाररहितम् । प्रमदवनम् = अन्तःपुरस्त्रीजनोपभोग्यमुपवनम् । एतेन—रहस्याख्यानस्थानुरूपमेतत्स्थानमिति सूचितम् ।

किञ्चित् = स्वल्पमेव । छन्दतः = निश्शङ्कं । 'पृच्छे'ति शेषः । का=का खलु ? । प्रिया = प्रेयसी । तदानीं = व्यतीते खलु तस्मिन्समये । इदानीं = तस्या उपरतौ । उभयोर्मध्ये का प्रेयसी भवत इति प्रश्नाशयः ।

किम् = कुतो हेतोः, निरर्थकमिति यावत् । महति = भीषणे । वर्धमानसङ्कटे = अनन्तेऽनर्थबहुले विपद्वारिधौ । न्यस्यति=निक्षिपति ? । अलमनेन क्लेशानुबन्धिनाऽनर्थकारिणा प्रश्नेनेत्याशयः । 'बहुमानसङ्कटे' इति तु पण्डितैः शोधितः पाठः । तस्य च—बहुः मानो यत्र तस्मिन् सङ्कटे इति विग्रहे बहुतरपूर्वापरावधारणदुष्करे—अत एव सङ्कटे इत्यर्थो बोध्यः । केचित्तु का तव बहुमतेत्येतादृशे सङ्कटे = कष्टे इत्यर्थमाहुः । गौडास्तु—'वर्धमानसङ्कटे' इति पठन्ति । अत्र युक्ताऽयुक्तत्वे सुहृत्संवेद्ये एव ।

हला = हे सखि ! । तादृशे = अनिर्वचनीये अतिभीषणे महति । सङ्कटे=

---

१ 'बहुमानसङ्कटे' इति मुद्रितः पाठः । २ 'यादृशे' इति तु मुद्रितः पाठः ।

**वासवदत्ता**—( आत्मगतम्- ) अहं अ[1] मन्दभाआ ।

[ ( आत्मगतम्- ) अहञ्च मन्दभागा— ] ।

**विदूषकः**—सेरं सेरं भणादु भवं, एक्का उवरदा, अवरा असण्णिहिदा ।

[ स्वैरं स्वैरं भणतु भवान् । एकोपरता, अपराऽसन्निहिता ] ।

अभिनवराजलक्ष्मीः

विपत्तौ । निक्षिप्तः=न्यस्तः । अस्य प्रश्नस्य समुचितमुत्तरं वत्सराजेन न सरलतया दातुं शक्यमित्याशयः । पद्मावत्युक्तं श्रुत्वा, वासवदत्ता तदुक्तौ न्यूनतां पूरयति-अहमपीति । न केवलमार्यपुत्र एव सङ्कटे स्थापितो वसन्तकेन, किन्तर्हि-मन्दभागा=मन्दभाग्या, अहमपि=वासवदत्ताऽपि । 'तादृशेसङ्कटे निक्षिप्ते'ति पूर्ववाक्यस्थस्याऽनुषङ्गोऽत्र बोध्यः । 'न जाने आर्यपुत्रः किं कथयिष्यति ?, मां प्रियामभिधास्यति, पद्मावतीं वा प्रियाङ्कथयिष्यति'—इत्येवं संशयदोलासङ्कटे निक्षिप्ताऽस्मि वसन्तकहतकेनेत्याशयः । केचित्तु-'आर्यपुत्रो यथा कथनसङ्कटे पातितस्तथैवाहं श्रवणसङ्कटे पातिताऽस्मी'त्यर्थमाहुः । तत्राक्षरस्वारस्यं कथं घटते ? इति ते एव प्रष्टव्याः ।

मदुक्तं रहस्यभूतं कदाचिदयं पद्मावत्या अग्रे कथयेत्तदा प्रणयबहुमानसङ्कटे पतिष्यामीति—भिया उत्तरदानेऽनुत्सहमानं व्याकुलमानसं वत्सराजं वसन्तकः समाश्वासयन्नाह—**स्वैरमिति** । स्वच्छन्दं । निर्भयमित्यर्थः । कुत एतदत आह–एकेति । एका=वासवदत्ता । उपरता=मृता । अतस्ततो न भेतव्यम् । अन्या=पद्मावती । असन्निहिता=नात्र तव सविधे वर्त्तते, किन्तर्हि पुष्पाण्यवचित्य बहुवेलं भवन्तं प्रतीक्ष्याऽन्तःपुरं प्रति गतेत्याशयः । एवञ्च ततोऽपि भयस्यानवसर एवेति-सत्यं "सत्यं निर्विशङ्कमुत्तरं वदतु भवान्—उभयोः का ते प्रिया ?–" इत्याशयः ।

१ 'अहं पि'—पा० ।

**राजा**—वयस्य ! न खलु ब्रूयां, भवांस्तु मुखरः ।

**पद्मावती**—एत्तएण भणिदं अय्यउत्तेण ।

[ एतावता भणितमार्यपुत्रेण ] ।

**विदूषकः**–'भो ! सच्चेण सवामि, कस्स वि ण आचक्खिस्सं । एसा सन्दट्ठा मे जीहा ।

---

अभिनवराजलक्ष्मी:

वयस्य=सखे वसन्तक ! न खलु=नैव कथमपि ब्रूयामहम् । कुतस्ते ई-दृश आग्रह इत्यत आह–**भवानिति** । निन्दितं मुखमस्य–मुखरः=असं-यतमुखः । ['बडबडिया' 'जिसके पेटमें बात नहीं पचती हो, वह'] । 'दुर्मुखे मुखराऽबद्धमुखौ' इत्यमरः । एवञ्चेदानोमसन्निहितायामपि पद्मावत्यां–कदा-चित्सन्निहितायां [ मदग्रे एव वा, मदनुपस्थितौ वा ] त्वं मे रहस्यभेदं तदग्रे करिष्यस्येवेति नाहमीदृशे वर्धमानसङ्कटे प्रतिवचने प्रवृत्तः स्यामिति तदाशयः ।

एतावता='त्वं तावन्मुखरो मद्रहस्यं यथावद्रक्षितुं न शक्तः' इत्युक्त्यैव । 'तस्य प्रश्नस्य उत्तर' मित्यादिः । आर्यपुत्रेण=मद्भर्त्रा वत्सराजेन । भणितम्=उक्तमेव । 'वासवदत्तैव मे प्रिये'त्युत्तरं कथितप्रायमेव । यतः–यदि 'पद्मावती मे प्रिये'त्येवमुत्तरमार्यपुत्रस्य स्यात्तर्हि—त्वं मुखरः, नाहमेतस्योत्तरं प्रति-ब्रूया'मित्येवमार्यपुत्रस्य रहस्यभेदशङ्काकुलत्वं न स्यात् , वासवदत्ताया उपर-तत्वात् । एवञ्च 'वासवदत्तैव मे प्रिये'त्येवमुत्तरमेवार्यपुत्रस्य हृदिस्थमिति स्पष्टमेव प्रतीयते । 'पद्मावत्यग्रे मदुक्तं कथयिष्यति भवान् मुखरत्वादतो न मयाऽस्योत्तरं दीयते'इत्याशङ्काप्रकटनेनैव स्पष्टं तथाऽवगमस्य कर्तुं शक्य-त्वादित्याशयः ।

[ भो : ! सत्येन शपामि, कस्यापि नाऽऽख्यास्ये । एषा सन्दष्टा मे जिह्वा ] ।

**राजा**—नोत्सहे सखे ! वक्तुम् ।

**पद्मावती**—अहो ! इमस्स पुरोभाइदा, एत्तिएण हिअअं ण जाणादि ! ।

[ अहो ! अस्य पुरोभागिता ! । एतावता हृदयं न जानाति ] ।

---

अभिनवराजलक्ष्मीः

सत्येन शपामि = धर्मं, सत्यञ्च साक्षित्वेन मध्ये न्यस्य, सशपथं कथयामि, यत्—अहं भवदुक्तं रहस्यभूतं प्रतिवचनं कस्यापि—स्त्रियो वा, पुरुषस्य वा नाख्यास्ये=नाभिधास्ये । 'यद्यहं भवदुक्तं कस्याप्यग्रे ब्रूयान्तर्हि 'सत्यं–धर्मो-मे भगवान् प्रतिशास्ता भवेत्', किञ्च 'धर्मो मे प्रणश्यतु', 'परलोकान्मे च्युतिर्भवतु, यदि प्रतिज्ञातमन्यथा कुर्या'मित्येवं धर्मं प्रतिभुवं कृत्वा शपथमाचरामीत्याशयः । ननु मुखरस्त्वं, तत्र 'प्रकृतिं यान्ती भूतानी'त्युक्तेस्तव जिह्वा न संयता स्थातुं शक्नोति, ततस्तव शपथकरणं व्यर्थमेव, दुस्त्यजत्वात्स्वभावस्येत्यत आह—एषेति । मन्मुखस्था । जिह्वा = रसना । सन्दष्टा = दन्तसन्दंशेऽद्यप्रभृति मया स्थापिता । इति—तथा कृत्वा दर्शयति । यो हि—दुस्त्यजस्वभावोऽनर्थकारी स कारागृहादिषु यथा नियम्यते, तथैव मयेयं मुखरा रसना सन्दंशे स्थापिता, तदियमितः प्रभृति न स्वमौखर्यं कर्त्तुमलमिति स्वैरं कथयतु भवानित्याशयः । वक्तुं नोत्सहे = न मे उत्साहो भवति, त्वदग्रे तस्य प्रश्नस्योत्तरं दातुम् । नाहमभिधास्ये इति यावत् । सखे = मित्र !

[ एतेन विधुतं नाम प्रतिमुखसन्धेरङ्गं दर्शितम् । 'कृतस्यानुनयस्यादौ विधुतं त्वपरिग्रह'इत्युक्तेरिति केचित्] । 'अहो' इत्याश्चर्ये, खेदे वा । अस्य = वसन्तकस्य । पुरोभागिता = 'कथमयं नोत्तरं ददाती'ति दोषैकदर्शिता, अज्ञता,

**विदूषकः**—किं ण—भणादि मम ! अणाचक्खिअ इमादो सिलावट्ट-आदो ण सक्कं एक्कपदं वि गमिदुं । एसो रुद्धो अत्तभवं ।

[ किं न भणति मम ! । अनाख्यायाऽस्माच्छिलापट्टकान्न शक्यमेक-पदमपि गन्तुम् । एष रुद्धोऽत्रभवान् ] ।

**राजा**—किं बलात्कारेण ? ।

**विदूषकः**—आम, बलक्कारेण ।

[ आम ! बलात्कारेण ] ।

**राजा**—तेन हि पश्यामस्तावत् ।

**विदूषकः**—पसीददु पसीददु भवं । वयस्सभावेण साविदो सि, जइ सच्चं ण भणासि ।

---

अभिनवराजलक्ष्मीः

अवैदग्ध्यं,मौर्ख्यमिति यावत् । 'दोषैकदृक् पुरोभागी'त्यमरः । प्रकृते दोषैक-दर्शिता तु निवेदितस्वहृदयेऽपि राज्ञि स्वहृदयाकथनदोषदर्शितैव । एतावता = 'नाहं कथयिष्यामि, मुखरस्त्व' मित्यादिनिषेधपरैर्वाक्यैरेव, हृदयं = हृद्गत-माशयम् , न जानाति = नावबुध्यते । आर्यपुत्रप्रतिवचनैरेव तस्य हृद्गतो भावः स्पष्टं प्रत्येतुं शक्य इत्याशयः । किं = कुतः ? । मम = मह्यम् । भणति= कथयति । 'उत्तर' मिति शेषः । अनाख्याय = प्रतिवचनमदत्त्वा, मदुक्तप्रश्न-स्योत्तरमदत्त्वा । 'एकपदमपि गन्तुं न शक्यं भवते' ति सम्बन्धः ।

कथं न शक्यमत आह—एष इति । रुद्धः = मया निरुद्धः । [ मैंने आपको पकड़ लिया है ] । प्रणयोपहासवाक्यमेतद्विदूषकस्येत्यवधेयम् ।

किं बलात्कारेण = किं हठात्कारेण । 'प्रश्नस्योत्तरं वक्तुं मां प्रवर्त्तयसि ?' इति शेषः । [ क्या जबरदस्ती मुझसे कहलाना चाहते हो ? ] । 'आम'—इति स्वीकारे देशी । [हाँ जबरदस्ती कहलाऊँगा'] । तेन हि = तर्हि, पश्याम-स्तावत् = कथं भवान्स्वाभिमतं बलात्कारेण साधयति, तद्वयं पश्यामस्तावत् । नाहं कथायिष्यामि, कथं त्वं मां बलात्कारेण तत्र नियोजयिष्यति—पश्यामस्ते

[प्रसीदतु प्रसीदतु भवान्। वयस्यभावेन शापितोऽसि, यदि सत्यं न भणसि ]।

**राजा**—का गतिः ? । श्रूयताम्—

**पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः ।**
**वासवदत्ताबद्धं न तु तावन्मे मनो हरति ॥ ५ ॥**

---

अभिनवराजलक्ष्मीः

बलकौशलमेवेत्याशयः । [ देखें तुमारा जोर ! देखें बलात्कारसे कैसे कहलाते हो ? ] । [‘प्रत्यक्षनिष्ठुरं वज्र’मित्युक्तेर्वज्रं नाम प्रतिमुखसन्धेरङ्गमेतेन दर्शितम् ]। एवं किञ्चिदिव दर्शितकोपं वत्सराजं प्रसादयन्नाह—प्रसीदत्विति । कोपं परित्यजतु भवान् । वयस्यभावेन = सख्येन । शापितः=दत्तशपथः कृतोऽसि, यदि=यद्येवमपि-सत्यं न भणसि=सत्यं सत्यमुत्तरं मह्यं न प्रयच्छसि । नाहं बलात्कारेण तथा कर्त्तुं समर्थस्तथापि—सर्वतः प्रियेण वस्तुना आवयोः सख्येन शापितो भवान्—यदि सत्यं न भणति । एवञ्च ममायं ब्रह्मास्त्रमिवाऽव्यर्थं उपायः । कथनीयमेवेदानीं त्वया सत्यं भविष्यतीत्याशयः ! [ आपको हमारी मित्रता की सौगन्द—यदि आप ठीक २ उत्तर न देंगे तो ! ] । एतेन क्रुद्धस्याऽनुनयात्पर्युपासनं[1] नाम प्रतिमुखसन्धेरङ्ग दर्शितम् ] । का गतिः—इदानीन्तु कथनीयमेवापतितं । किं करोमि, रहस्यमपि तदिदानीं कथयाम्येवेत्याशयः । [ उपायाऽदर्शनात् तापनं नाम प्रतिमुखसन्धेरङ्गमुपन्यस्तम् । ‘उपायाऽदर्शनं नाम तापनं परिकीर्त्तित’ मित्युक्तेरिति केचित् ] ।

‘मम प्रिया तु पद्मावती, परं मम मनो वासवदत्तायामनुरक्त’मित्येवं चातुर्येण राजा प्रश्नस्योत्तरमाह—पद्मावतीति ।

---

१ ‘क्रुद्धस्यानुनयः पुनः । स्यात्पर्युपासन’ मिति विश्वनाथः ।

**वासवदत्ता—(आत्मगतम्-)** भोदु—भोदु, दिण्णं वेदणं इमस्स परिखेदस्स। अहो अण्णादवासं पि एत्थ बहुगुणं सम्पज्जइ।

**( आत्मगतम् )** भवतु—भवतु, दत्तं वेतनमस्य परिखेदस्य। अहो! अज्ञातवासोऽप्यत्र बहुगुणः संपद्यते।

---

अभिनवराजलक्ष्मीः

[ अन्वयः ] यद्यपि—रूपशीलमाधुर्यैः पद्मावती मम बहुमता, तु—वासवदत्ताबद्धं मे मनः तावत् न हरति।

[ अर्थः ] यद्यपि—रूपञ्च शीलञ्च माधुर्यञ्च—रूपशीलमाधुर्याणि, तैः—रूपशीलमाधुर्यैः = रूप-सौन्दर्य-चारित्र-प्रियभाषित्वादिभिर्गुणैः। पद्मावती—मे=मम, बहुमता=प्रिया, अतिवल्लभा। श्रेष्ठत्वेन सा मया बहु मन्यते इत्याशयः। तु = किन्तु। [ वासवदत्तायां बद्धं, तया बद्धमिति वा विग्रहः ]। वासवदत्ताबद्धं = वासवदत्तानुरक्तम्, वासवदत्तागुणगणाकृष्टम्। मे=मम। मनः=स्वान्तम्। तावत् = एव, न हरति = वासवदत्तायां देवभूयङ्गतायामपि पद्मावती मे मनो न स्वाधीनं करोति। इदानीं पद्मावती मे नितरां वल्लभा, तथाऽपि वासवदत्तागुणाकृष्टं मन्मनस्तत्परवशं नाद्यापि पद्मावतीमनुसरति, वासवदत्तामेव तु धावतीति। सैव च मे हृदयवल्लभेति [ वासवदत्तां दिवङ्गतामपि मे मनो न विस्मरति, तत्रैव रमते चेत्यपि ] चातुर्येण सूचितम्।

भवतु=अलमलम्। अस्य=मया पत्युर्विपत्तेरपगमाय तद्विजयसाम्राज्यादिलाभार्थञ्चानुभूयमानस्य नितरां दुर्वहस्य। परिखेदस्य = परगृहनिवासप्रियविप्रयोगादिक्लेशस्य। वेतनं = पारिश्रमिकम्। यः खलु मया स्वामिसमृद्धयेऽयं क्लेशोऽनुभूयते, स भर्तुः स्नेहान्वितेनाऽनेन वाक्येनैवापनीत इवेत्याशयः।

अहो इति हर्षे आश्चर्ये च। अज्ञातवासः = भर्तृकार्यसिद्धये मया क्रियमाणः

**चेटी**—भट्टिदारिए ! अदक्खिण्णो खु भट्टा ।

[ भर्तृदारिके ! अदाक्षिण्यः खलु भर्त्ता ] ।

**पद्मावती**—हला ! मा मा एव्वं ! सदक्खिण्णो एव्व अय्यउत्तो-जो इदाणिं वि अय्याए वासवदत्ताए गुणाणि सुमरदि ।

[ हला ! मा मैवम्, सदाक्षिण्य एवाऽऽर्यपुत्रो य इदानीमप्यार्याया वासवदत्ताया गुणान् स्मरति ] ।

**वासवदत्ता**—भद्दे ! अभिजणस्स सरिसं मन्तिदं ।

[ भद्रे ! अभिजनस्य सदृशं मन्त्रितम् ] ।

---

अभिनवराजलक्ष्मीः

प्रच्छन्नप्रवासोऽप्ययं । यद्वा—अज्ञातवासः=माधवीमण्डपेऽस्माकमवस्थानमपि । अत्र=इह विषये । पत्युरभिमतपरिज्ञाने इति यावत् । बहुर्गुणो यत्रासौ—बहुगुणः = पतिदर्शन—तदभिमतपरिचयाद्यनेकाभिमतफलसाधकतया प्रशस्त-गुणान्वितः । अज्ञातवासेन मम नितरां क्लिष्टमपि मनो भर्त्तृस्नेहेनापगत-क्लममिव सम्पन्नमित्याशयः । नास्ति दाक्षिण्यं=सकलासु भार्यासु सममनुरागः—यस्यासौ—अदाक्षिण्यः = असमानुरागः । 'एषु त्वनेकमहिलासमरागो दक्षिणः कथितः' इत्युक्तेः । पद्मावत्यपेक्षया वासवदत्तायामनुरागाधिक्यस्य स्वयमे-वाविष्करणादित्याशयः ।

हला = हे सखि ! । हे चेटिके इति यावत् । मा मैवं = मैवं वद, माऽधिक्षिपाऽऽर्यपुत्रमित्याशयः । सदाक्षिण्यः = समानानुरागतया दाक्षिण्य-रूपगुणालङ्कृत एव । इदानीमपि=मृतायामपि = वासवदत्तायाम् । गुणान्= रूपसौन्दर्यलावण्यौदार्यमाधुर्यादीन् । स्मरति = चिन्तयति, न विस्मरति । एवञ्च तुल्यानुरागता भर्त्तुः स्फुटैव । एवं स्वसपत्नीप्रशंसयाऽपि कोपमभजमानां, स्वपत्युर्दाक्षिण्यमेव च समर्थयमानां पद्मावतीं प्रशंसन्ती वासवदत्ता प्राह—भद्रे इति । शोभने इत्यर्थः । अभिजनस्य = स्वकुलस्य । सदृशम् = अनु-

**राजा**—उक्तं मया ! भवानिदानीं कथयतु—'का भवतः प्रिया ?, तदा वासवदत्ता ?, इदानीं पद्मावती वा' ? ।

**पद्मावती**—अय्यउत्तो वि वमन्तओ संवुत्तो ! ।

[ आर्य्यपुत्रोऽपि वसन्तकः संवृत्तः ! ] ।

**विदूषकः**—किं मे विप्पलविदेण ?, उभओ वि तत्तहोदीओ मे बहुमदाओ ।

[ किं मे विप्रलपितेन ? । उभे अपि तत्रभवत्यौ मे बहुमते ] ।

---

अभिनवराजलक्ष्मीः

रूपमेव । मन्त्रितं = त्वयाऽभिहितम् । प्रशस्तकुलोत्पन्नानां पतिव्रतानां साधुशीलानां सपत्नीविरोधाऽभावस्य, भर्त्तुर्दोषाऽदर्शनस्य, तत्प्रच्छादनस्य च स्वभावसिद्धत्वादित्याशयः । महाकुलप्रसूताऽसि, येन ते हृदि अणुरपि सपत्नीद्वेषो न पदं धत्ते इति हृदयम् । 'कुलान्यभिजनान्वयौ' इत्यमरः । 'कुलेऽप्यभिजनः पुमा' निति मेदिनी च ।

उक्तं मया = मया स्वाभिमतं प्रकाशितम् । भवानिति । अद्य भवन्तमप्यहं पृच्छामि, त्वमप्युत्तरं वद । भवतः का प्रिया ? । तदा=तदवस्थानकाले वासवदत्ता प्रियाऽऽसीत् , अथवा उपरतायां तस्याम्—इदानीं = सम्प्रति—पद्मावती ते प्रिया = मनसि रोचते इत्याशयः । प्रिया = अभिमता । (दोनों में तुमको कौन सी अच्छी लगती है ?) । वसन्तकः = वसन्तक इवोपहासपरः, निरर्थककथाप्रवणो वा, प्रीतितारतम्यविषयप्रश्नकरणाद्वा तादृशः । संवृत्तः = जातः । ( आर्यपुत्र भी वसन्तक की तरह खिलवाड़ करने लगे' ) । विप्रलपितेन = विरुद्धवचनेन । 'विप्रलापो विरुद्धोक्तिः' इत्यमरः । 'सा बहुमता, एषा ने' त्येवं विरुद्धभाषितेन, किं प्रयोजनम् ? उभे अपि = वासवदत्तापद्मावत्यौ । तत्रभवत्यौ = माननीये । बहुमते = श्रेष्ठतया सम्मते । नाहन्तयोस्तारतम्यं मन्ये, मम तूभे एवाभिमते इत्याशयः ।

**राजा**—वैधेय ! मा[1]मैवम्। बलाच्छ्रुत्वा किमिदानीं नाऽभिभाषसे ?।

**विदूषकः**—किं मं पि बलक्कारेण। [ किं मामपि बलात्कारेण ? ]।

**राजा**—अथ किम् ! बलात्कारेण।

**विदूषकः**—तेग हि ण सक्कं सोदुं। [ तेन हि न शक्यं श्रोतुम् ]।

**राजा**—प्रसीदतु प्रसीदतु महाब्राह्मणः, स्वैरं स्वैरमभिधीयताम्।

**विदूषकः**—इदाणिं सुणादु भवं—'तत्तहोदी वासवदत्ता मे बहुमदा। तत्तहोदी पादुमावदी तरुणी, दस्सणीआ, अकोवणा, अणहंकारा, महुरवाआ, सदक्खिण्णा। अअं च अवरो महंतो गुणो,—सिणिद्धेण भोअणेण मं पच्चुग्गच्छइ वासवदत्ता[2]—'कहिं णु खु गदो अय्यवसन्तो'त्ति।

अभिनवराजलक्ष्मीः

राजा सोपालम्भं पृच्छन्नाह—वैधेयेति। वैधेय = मूर्ख !। 'मूर्खवैधेयबालिशाः' इत्यमरः। मा मा एवम्=एवं मा वद। मत्तो बलाच्छ्रुत्वा इदानीं किं नाभिभाषसे ?। 'मामेव'मिति पाठे तु—'मा'मिति 'अभिभाषसे'इत्यनेन सम्बद्ध्यते, मां किं नाभिभाषसे इति। यद्वा—माम् = मत्तोऽपि। यद्वा—मामित्यस्य—'अनुरुद्ध्ये'ति शेषः। एवं=शपथादिना। श्रुत्वा='का ते प्रिये' ति प्रश्नस्योत्तरं श्रुत्वा। इदानीं = सम्प्रति मत्प्रश्ने। नाऽभिभाषसे = उत्तरं न प्रतिपद्यसे ?। 'बलात्कारेणे' त्यस्य 'निरुद्ध्य श्रोतुमिच्छसी'ति शेषः। अथ किम्=अवश्यम्। [अथ किं = हाँ]। बलात्कारेण = हठात्कारेण। [जबरदस्ती]। श्रोष्यामी'ति शेषः। तेन = बलात्कारेण। श्रोतुं न शक्यं = नाहं वदिष्यामि।

विदूषकं प्रसादयन् राजा तावदाह—प्रसीदत्विति। प्रसन्नो भवतु भवान्। नाहं बलात्कारं करिष्यामीत्यर्थः। महाब्राह्मणे'त्युपहासपरं सम्बो-

१ 'मामेव' मिति तु मुद्रितः पाठः। तत्राऽभिभाषणकर्मतया द्वितीया, अनुरोधकर्मतया वा। २ अत्र ये 'वासवदत्ता'मिति न पठन्ति, ते त्वर्थानभिज्ञाः।

[ इदानीं शृणोतु भवान् । तत्रभवती वासवदत्ता मे बहुमता । ( यद्यपि- ) तत्रभवती पद्मावती—तरुणी, दर्शनीया, अकोपना, अनहङ्कारा, मधुरवाक्, सदाक्षिण्या । ( तथापि- ) अयञ्चापरो महान्[1] गुणः-स्निग्धेन भोजनेन मां प्रत्युद्गच्छति वासवदत्ता—

—'कुत्र नु खलु गत आर्यवसन्तक' इति ] ।

---

अभिनवराजलक्ष्मीः

घनम् । द्विरुक्तिः सम्भ्रमे, शैघ्र्ये वा । स्वैरं = यथेच्छमेव । यदि तव इच्छा भवेत्तर्हि कथय नो चेदास्तामित्याशयः । द्विरुक्तिः स्वच्छन्दताया अतिशय-द्योतनाय सम्भ्रमे एव ।

इदानीं=यद्येवं मां प्रार्थयसे, तर्हि मदिच्छयैव । शृणोतु = उत्तरं शृणोतु । तत्रभवती = मान्या । बहुमता = अतितरां श्रेष्ठत्वेनाभिमता । 'यद्यपी'त्यादिः । पद्मावती = पद्मावती तु । तरुणी = युवतिः । दर्शनीया = सुन्दरी । अकोपना= क्रोधरहिता । अनहङ्कारा = अहङ्काररहिता । सदाक्षिण्या = भृत्यवर्गेषु तुल्या-नुरागा । परचित्तप्रसादनपटीयसी च । यद्यपि ईदृगसर्वगुणालङ्कृता पद्मा-वती, तथापि-पद्मावत्यपेक्षया वासवदत्तायाम्—अपरः = सर्वतो महानयं गुण आसीद्यो न पद्मावत्यां वर्त्तते, यत्—सा स्निग्धेन = घृताप्लुतेन । प्रत्युद्गच्छति = सत्कुरुते ।

किञ्च—कदाचिदयं राजा मदुक्तं पद्मावत्याः सन्निधौ प्रकटयेत्तर्हि शुष्केऽपि भोजने विघ्नः समापतेदिति भोजनभयेन पद्मावतीं प्रशंसामीत्यपि

---

१ 'विशेषो गुण' इति पाठान्तरम् । युवत्वदर्शनीयत्वादीन्वासवदत्तागतान् गुणान्पद्मावत्यामपि प्रदर्श्य वासवदत्तागतं विशिष्टं गुण ब्रूते—अयञ्चेति । अयन्तु इत्यर्थः । चस्त्वर्थे । पद्मावत्यपेक्षया वासवदत्तायामिति शेषः । 'प्रत्युद्गच्छती'ति वर्त्तमानप्रयोगो वासवदत्तास्थित्यभिमानेनैव । प्रत्युद्गमनप्रकारमेवाह—कुत्रेति । एवञ्च यथा वासवदत्ता मां स्निग्धेन सरसेन च भोजनेन प्रीणयति स्म, न तथा पद्मामवतीत्याशयः । एवञ्च पद्मावत्यपेक्षया वासवदत्ताया मयि कृपा अधिकाऽऽसीदेवञ्च सैव मे बहुमतेति सूचितम् । अत्र च पाठे बहवष्टीकाकृतो भ्रान्ताः ।

**वासवदत्ता**—भोदु भोदु, वसन्तअ ! सुमरेहि दाणिं एदं ? ।

[ भवतु भवतु वसन्तक ! स्मरसीदानीमेतत्[1] ! ] ।

**राजा**—भवतु भवतु वसन्तक ! सर्वमेतत् कथयिष्ये देव्यै वासवदत्तायै ।

**विदूषकः**—अविहा वासवदत्ता ! । कहिं वासवदत्ता ? ! चिरा खु उवरदा वासवदत्ता ! ।

[ अविहा ! वासवदत्ता ! । कुत्र वासवदत्ता ? । चिरात् खलूपरता वासवदत्ता ! ] ।

**राजा**—( **सविषादम्** ) एवम् । उपरता वासवदत्ता ।

---

अभिनवराजलक्ष्मीः

धूर्तेन वसन्तकेन हास्यव्याजेन प्रकटितमिति–राजापेक्षयाऽपि महतीयं वचनचातुरी वसन्तकस्येति मर्मज्ञाः ।

भवतु—भवतु = अलमलं मत्प्रशंसया । यद्वा भवत्विति क्रियापदम् । आभीक्ष्ण्ये द्वित्वम् । इदानीं = बहुतिथे काले गतेऽपि । एतत् = मत्कृतं स्निग्धभोजनादिना सत्कारम् । स्मरसि ? = हृदये धारयसि किम् ? । धन्यस्त्वं यन्ममाऽधन्याया गुणान्, मत्कृतमुपकारञ्च स्मरसीति भावः । अत्र 'स्मरेदानी'मिति पाठमन्ये मन्यन्ते ।

भवतु—भवतु = यथा त्वया कथितं तथा भवतु । [ अच्छा अच्छा ] । सर्वमेतत् = त्वदुक्तं वासवदत्ताप्रशंसादिकम् । देव्यै = वत्सराजपत्न्यै वासवदत्तायै । अविहेति खेदेऽव्ययम् । अविहा = हा धिक् ! । वासवदत्ता = हा धिक् ! वासवदत्तानाम स्मर्यते भवता ! । सखे–कुत्र वासवदत्ता ? = नास्ति खलु सा देवीत्याशयः ।

ननु क्व गता सा ?, इत्यत आह–**उपरतेति** । देवलोकमितो गता ! ।

---

१ 'स्मरेदानी मेत'दिति मुद्रितच्छायाः पाठस्तु भ्रष्ट एव, प्रकृताननुगुणत्वात् ।

**अनेन परिहासेन व्याक्षिप्तं मे मनस्त्वया ।**
**ततो वाणी तथैवेयं पूर्वाभ्यासेन निस्सृता ॥६॥**

**पद्मावती**—रमणीओ खु कहाजोओ णिसंसेण विसंवादिओ ।

[ रमणीयः खलु कथायोगो नृशंसेन विसंवादितः ] ।

**वासवदत्ता**—( **आत्मगतम्**- ) भोदु भोदु, विस्सत्थाह्मि ।

अहो ! पिअं णाम, ईदिसं वअणं अ प्पच्चक्खं सुणीअदि ।

---

अभिनवराजलक्ष्मीः

चिरात् = भूयान् कालो व्यतीतः । खलु निश्चयेन । एवं = युक्तमाह भवान् । उपरता = मृतैव । एतावता कामं परिपोषितो विप्रलम्भः, करुणो रसश्च कविना ।

'वयस्ये'ति श्लोकस्थेन स्हान्वेति । अनेनेति । वयस्य = हे सखे ! । अनेन = "अयञ्चापरो महान् गुणः स्निग्धेन भोजनेन मां प्रत्युद्गच्छति वासवदत्ता-'कुत्र खलु गत आर्यवसन्तक' इति"—इतित्वदुक्तेन । परिहासेन = उपहासपरेण वचनेन । त्वया = भवता । मे = मम । मनः = प्रियाविरहितं चेतः । व्याक्षिप्तं = पूर्वापरविचारशून्यं कृतम् । ततः = चित्ताऽनवधानेन, मनसः पर्याकुलत्वात् । पूर्वाभ्यासेन = वासवदत्ताजीवनकालिकाभ्यासयोगात् । तथैव = वासवदत्तानामघटितैव । इयं = 'देव्यै वासवदत्तायै कथयिष्ये'इत्येवम् । वाणी = वाक् । निस्सृता = मन्मुखादुद्गता । वासवदत्ताविषयकप्रसङ्गेनाऽनवहितस्वान्तोऽहं विक्षिप्त इव त्वया विहितोऽस्मि, तत एवेत्थं मया—उपरताऽपि देवी वर्त्तमानतया भावितेत्याशयः ॥ ६ ॥

रमणीयः = मनोहरः । कथायोगः = वासवदत्ताकथाप्रसङ्गः । नृशंसेन = क्रूराशयेनोपहासपरेण विदूषकेणाऽनेन । 'नृशंसो घातुकः क्रूरः' इत्यमरः । विसंवादितः = अन्यथा कृतः । मध्ये एव भग्नः । त्रोटितः । वासवदत्तास्मरणेन

[ ( आत्मगतं ) भवतु भवतु, विश्वस्तास्मि । अहो प्रियं नाम–ईदृशं वचनमप्रत्यक्षं श्रूयते ] ।

**विदूषकः**—धारेदु धारेदु भवं । अणदिक्कमणीओ हि विही । ईदिसं दाणिं एदं ।

[ धारयतु–धारयतु भवान् । अनतिक्रमणीयो हि विधिः । ईदृशमिदानीमेतत् ] ।

---

अभिनवराजलक्ष्मीः

विघ्नित इत्यर्थः । यद्वा वासवदत्तोपरतिं बोधयता विघटित इत्यर्थः ।

भवतु–भवतु = युक्तमेतत् । 'भवत्वान्तरसंवादे निर्दोषे स्मरणेऽपि चे'ति वैजयन्ती । यद्वा—अलमियतेत्यर्थः । विश्वस्ताऽस्मि = जाताऽऽश्वासाऽस्मि । प्रियो मयि तथैवानुरक्त इति ज्ञात्वा प्रसन्नास्मि । अपगतो मे स्वभर्त्तुर्द्वितीयविवाहोद्भूतः शोकाङ्कुरः । 'अहो' इति हर्षे । ईदृशं प्रियवचनं = प्रियवचनस्य पराकाष्ठा । नाम = यत् । अप्रत्यक्षं = परोक्षभावेन, श्रूयते=आकर्ण्यते । इतः परं प्रियं किं भविष्यति । न किमपीत्याशयः । नामेति निश्चये वा । 'वचनञ्च प्रत्यक्षं श्रूयते' इत्यपि केचित्पठन्ति । युक्तश्चाऽयमेव पाठ इति गौडाः ।

धारयतु = धैर्यमवलम्बतां भवान् । स्वचित्तं पर्यवस्थापयतु तावद्भवान् । हि = यतः । विधिः = दैवम् । अनतिक्रमणीयः = लङ्घयितुमशक्यः । उपरता देवी वासवदत्तेति महदेव दुरदृष्टमस्माकमित्याशयः । एतत् = धैर्यावलम्बनमेव । इदानीं = सम्प्रति । ईदृशम् = एतादृशसमयोचितम् । यद्वा = एतत् = प्रियविप्रयोगोत्थं कृच्छ्रम् । ईदृशम् = अनतिक्रमणीयेनास्माकं दुरदृष्टेनैवोपपादितमप्रतिविधानमतो धैर्यं धारणीयमेवेत्याशयः । तदुक्तं भगवता—'तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि' इति ।

अवस्थां = क्लेशप्रदां विरहावस्थाम् । ममेति शेषः । न जानाति=नावबु-

राजा—वयस्य ! न जानाति भवानवस्थाम् ।

दुःखं त्यक्तुं बद्धमूलोऽनुरागः,
स्मृत्वा-स्मृत्वा याति दुःखं नवत्वम् ।
यात्रा त्वेषा यद्विमुच्येह बाष्पं,
[1]प्राप्ताऽनृण्या याति बुद्धिः प्रसादम् ॥७॥

अभिनवराजलक्ष्मीः

द्रूयसे । अत एव धैर्यावलम्बनाय मामुद्योजयसीत्याशयः । कष्टप्रदत्वं तत्कारणप्रदर्शनेन द्रढयति—कुत इति । कुतः = यतः । दुःखमिति ।

( अन्वयः ) बद्धमूलः अनुरागः त्यक्तुं दुःखम् । स्मृत्वा-स्मृत्वा दुःखं नवत्वं याति । इह यात्रा तु एषा यत्—बाष्पं विमुच्य बुद्धिः प्राप्ताऽनृण्या प्रसादं याति ।

( विग्रहः ) बद्धं मूलं यस्यासौ—बद्धमूलः । नास्ति ऋणं यस्यासौ—अनृणः । अनृणस्य भावः—आनृण्यम् , प्राप्तम् आनृण्यं यया सा—प्राप्ताऽनृण्या ।

( अर्थः ) बद्धमूलः = दृढमवस्थापिताङ्घ्रिः । चिरप्ररूढः । अनुरागः = प्रियजनविषयकः स्नेहः । त्यक्तुम् = विस्मर्तुम् , अपनेतुञ्च । दुःखम् = दुरशक्यम् । अतिकठिनमिति यावत् । दृढं हृदि बद्धमूलोऽनुरागस्त्यक्तुमशक्यः ।

ननु कथं न त्यक्तुं शक्यतेऽत आह—स्मृत्वेति । स्मृत्वा स्मृत्वा = प्रियजनं स्मारं स्मारम् । 'आभीक्ष्ण्ये णमुल्चे'ति क्त्वा । 'नित्यवीप्सयो'रिति द्वित्वम् । 'स्मृत्वा स्मृत्वा'—इत्यस्य 'विषीदत' इति वा शेषः । दुःखं = प्रियवियोग-जनितं दुःखम् । नवत्वं = नवीनताम् , उद्बोधमिति यावत् । याति = प्राप्नोति । एवञ्च बद्धमूलोऽनुरागो विस्मर्तुमशक्य एव, प्रत्यहमुद्बुद्धत्वात् । यदैव विस्मर्तुं प्रयत्यते, तदैव स्मृतिपथमुपारोहति, नव इव दुःखमुत्पादयति चेत्याशयः ।

[1] 'प्राप्ताऽनृण्यो याति बुद्धिप्रसाद'मिति तु गौडाः पठन्ति, 'विमुच्ये'त्यक्षर-स्वारस्यात् । बुद्धेरश्रुमोचनस्य स्वरसतोऽनुपपन्नतया च मुद्रितःपाठस्तु न शोभनः ।

**विदूषकः**—अस्सुपादकिलिण्णं खु तत्तहोदो मुहं । जाव मुहोदअं आणेमि । ( निष्क्रान्तः ) ।

[ अश्रुपातक्लिन्नं खलु तत्रभवतो मुखम् । यावन्मुखोदकमानयामि ] ।

**( निष्क्रान्तः ) ।**

अभिनवराजलक्ष्मीः

ननु यदि विप्रयुक्तप्रियजनविषया बद्धमूलोऽनुरागस्त्यक्तुं न शक्यते तर्हि कथ नाम चित्तस्य समाधानं विधेयमत आह—यात्रेति । इह = अस्यामवस्थायाम् । यात्रा तु=दुःखस्याऽस्य यापनप्रकारस्तु[1] । एषा=इयं वक्ष्यमाणा । यत्—बाष्पम् = अश्रु । विमुच्य = उत्सृज्य । अश्रुजलाञ्जलिं दत्त्वा । रुदित्वेति यावत् । बुद्धिः=मतिः । हृदयमितियावत् । 'जाताश्वासस्य विरहिण' इत्यादिः । प्राप्ताऽनृण्या = जाताऽनृण्या सती । प्रसादम् = क्षणमात्रमनाविलत्वं । शान्ति । प्रसन्नतां । शोकशून्यतामिति यावत् । याति = उपगच्छति ।

प्रणयिजनविप्रयोगदुःखस्य यावज्जीवं नवनवोन्मेषेण सर्वथा परित्यक्तुमशक्यत्वेऽपि, अश्रुजलाञ्जलिदानेनैव क्षणं शोकावेगनिर्गमनेन मनसः [क्षणिकः] कथञ्चिदिवाश्वासो भवतीत्याशयः । एवञ्च धैर्यमत्र धारयितुं नाहं शक्नोमि, किन्तु तां स्मृत्वा नवीभूतशोको रोदिष्येवेत्याशयः । शालिनी वृत्तम् ॥७॥

अश्रूणां पातः—अश्रुपातः, तेन क्लिन्नम्—अश्रुपातक्लिन्नम् = वासवदत्तास्मरणनवीभूतशोकोद्गताश्रुजलप्रवाहेणार्द्रम् । अश्रुजलाविलमिति यावत् ।

तत्र भवतः=उदयनस्य । यावत्=अतः । मुखस्य उदकं मुखोदकमिति षष्ठीतत्पुरुषः, मुखं प्रक्षालयितुम् उदकं—मुखोदकमिति मध्यमपदलोपी वा समासः ।

---

१ द्विविधा हि रोगाः, शक्यप्रतीकाराः, याप्याश्च । ये चिकित्सादिनाऽपनेतुं शक्यास्ते आद्याः । ये तु भवान्तरे एवापनेतुं शक्या नास्मिञ्जन्मनि, ते चिकित्सौषधसेवनादिना केवलं निरुद्धप्रसरतया 'याप्या' इत्युच्यन्ते ।

**पद्मावती**—अय्ये ! बप्फाउलपडन्तरिदं अय्यउत्तस्स मुहं । जाव णिक्कमह्म ।

[ आर्ये ! बाष्पाकुलपटान्तरितमार्यपुत्रस्य मुखम् । यावन्निष्क्रामामः । ]

**वासवदत्ता**—एव्वं होदु । अहवा चिट्ठ तुमं, उक्कण्ठिदं भत्तारं उज्झिअ अजुत्तं णिग्गमणं, अहं एव्व गमिस्सं ।

[ एवं भवतु । अथवा तिष्ठ त्वम्, उत्कण्ठितं भर्तारमुज्झित्वाऽयुक्तं निर्गमनम् । अहमेव गमिष्यामि ] ।

---

अभिनवराजलक्ष्मीः

निष्क्रान्तः = इत्थमुक्त्वा जलमानेतु जलाशयं प्रति गतः ।

आर्ये = मान्ये आवन्तिके ! । बाष्पाकुलम् = अश्रुपूर्णम् । अत एव—पटान्तरितम् । पटेन–वस्त्रेण–अन्तरितं = संछन्नमित्यर्थः । रङ्गे स्पष्टं रोदनस्य निषिद्धत्वात्पटान्तरितेन मुखेन रोदनस्यैव युक्तत्वात् । तदुक्तं भरते—

'क्रोधप्रमादशोकाः शापोत्सर्गोऽथ विद्रवोद्वाहौ ।
अद्‌भुतसंश्रयदर्शनमङ्केऽप्रत्यक्षजानि स्युः ॥' इति ।

एवञ्च प्रकृते—"बाष्पैराकुलं—बाष्पाकुलम् = अश्रुजलाविलम् । अश्रु-कणावृतलोचनमिति यावत् । 'बाष्पमूष्माऽश्रु' इत्यमरः । अत एव—पटेने-वाऽन्तरितं—पटान्तरितम् = अश्रुमार्जनपटेनेवाच्छन्नम्—" इति रीत्या ग्रन्थं लापयन्तः सर्वेऽपि व्याख्यातारो भ्रान्ता एव । बाष्पाकुलेन = अश्रुदूषितेन । यावत् = इदानीम् । यावन्मुखाच्छादकं पटं नापनयत्यार्यपुत्रस्तावदिति वा । निष्क्रामामः = निर्गच्छामः ।

एवं भवतु = युक्तमेतत्, निगच्छामस्तावदितो मण्डपात् । अथवा = यद्वा । त्वं = भवती पद्मावती । उत्कण्ठितं = प्रियावियोगपर्युत्सुकमानसम् । उज्झित्वा = परित्यज्य । निर्गमनं = पलायनम्, अपसरणं वा तव । अयुक्तं =

**चेटी**—सुट्ठु अय्या भणादि । उवसप्पदु दाव भट्टिदारिआ ।

[ सुष्ठु आर्या भणति । उपसर्पतु तावद्भर्तृदारिका ] ।

**पद्मावती**—किंणु खु पविसामि ? ।

[ किन्नु खलु प्रविशामि ? ] ।

**वासवदत्ता**—हला पविस । (**इत्युक्त्वा निष्क्रान्ता** ) ।

[ हला प्रविश ] ।

**(–इत्युक्त्वा निष्क्रान्ता ) ।**

**( प्रविश्य– )**

**विदूषकः (नलिनीपत्रेण जलं गृहीत्वा–)** अये[1] ! एसा[1] तत्तहोदी पदुमावती ! ।

( अये[1] ! एषा[1] तत्रभवती पद्मावती !! ) ।

अभिनवराजलक्ष्मीः

नोचितम् । अहमेव = एकाकिनी खल्वहमेव । सुष्ठु = शोभनं, युक्तम् । आर्या = वासवदत्ता । उपसर्पतु = भर्तुः समीपं गच्छतु ।

किं नु खलु गच्छामि = आर्ये आवन्तिके ! कथय किं गच्छाम्येवाहमार्यपुत्रस्य सविधे ? । अनुजानीहि माम् । हला = प्रियसखि ! । प्रविश = भर्तुरन्तिके गच्छ । इत्युक्त्वा = इत्थं पद्मावतीमुपदिश्य । निष्क्रान्ता = मण्डपाद्बहिर्निःसृत्य गता ।

प्रविश्येति । 'जलानयनाय गतो विदूषकः पुनरागत्येत्थमाहे'ति शेषः । नलिनीपत्रेण=कमलिनीपत्रेण । गृहीत्वा=आदाय । 'आगतो विदूषकः प्रविश्य, पद्मावतीं दृष्ट्वा च सभयं साश्चर्यञ्चेत्थमाहे'तिशेषेण मध्ये •कविवाक्यमेतत् । एषा = मदग्रे समुपस्थिता । [ हैं ? यह तो श्रीमती पद्मावती हैं ! ] ।

१ क्वचिन्न ।

**पद्मावती**—अय्य ! वसंतअ ! किं एदं ? ।

[ आर्य ! वसन्तक ! किमेतत् ! ] ।

**विदूषकः**—एदं इदं··· । इदं एदं··· ।

[ 'एतदिदम्······' । 'इदमेतत्···' ] ।

**पद्मावती**—भणादु भणादु अय्यो भणादु ।

[ भणतु भणत्वार्यो भणतु ] ।

---

अभिनवराजलक्ष्मी:

[ एतेन व्यसनप्राप्तेर्विरोधो नाम प्रतिमुखसन्धेरङ्गं दर्शितम् ] ।

किमेतत् = कुतस्तावदार्यपुत्रोऽश्रुप्रवाहं मुञ्चन् रोदिति ? । किमर्थञ्चेदं भवद्धस्ते कमलिनीदलगतं सलिलम् ? 'एतादद'मिति, 'इदमेत'दिति च सहसैवातर्कितोपनतां तत्र भवतीं पद्मावतीं दृष्ट्वा किङ्कर्त्तव्यविमूढस्य [ किं नु वक्तव्यं ? कथं नु रहस्यमस्य वयस्यस्य रक्षणीयम् ?—इत्यादि चिन्तया प्रतिहतबुद्धेः—] समुचितोत्तरास्फुरणात् [ लोप्त्रेण सहैव धृतस्य चौरस्येव–] गद्गदसन्नकण्ठस्य रहस्यस्थगनाय विचारयतो मध्ये विदूषकस्य खण्डितं वाक्यद्वयम् । 'एतदिदं'—'सम्पन्नं यत्–' इत्यादिवाक्यस्यैकदेशः–एतदिदमिति । एवमेव सन्नकण्ठतया प्रथमस्य वाक्यस्य मध्ये एव खण्डने जाते, पुनरपि वक्तुं कृतप्रयत्नस्य—'इदमेतत्—एवं जातं यत्'—इत्यादिवाक्यस्य पुनरपि भयादिना खण्डितस्य आदिभूतमेतदित्यवधेयम् । [ अत्र 'एतत् = नलिनीपत्रस्थम्, इदं = जलम् । यदि नावगतं तर्हि पुनः शृणु-इदं = जलम्, एतत् = नलिनीदलम्—" इत्येवं व्याख्यानं तु महाविदुषामेव शोभते इति मन्तव्यम् । अनुचितत्वात् । 'भवतु भवतु' इत्यग्रिमप्रोत्साहनवाक्यस्यासङ्गत्यापत्तेश्चेति गौडाः ] । [एतदिदं = हैं···है—यह तो···' । इदमेतत्–'यह तो है······है······'] एतेन विद्रवो नाम गर्भसन्ध्यङ्गं दर्शितम् ।

एवं स्खलद्वाक्यं विदूषकं साकूतं पद्मावती प्राह—भणत्विति । मा भैः, सत्यं वद किमेतदित्यर्थः ।

**विदूषकः**—भोदि ! वाद्णीदेण कासकुसुमरेणुणा अक्खिणिपडिदेण सस्सुपादं खु तत्तहोदो मुहं, ता गेह्णदु होदी इदं मुहोदअं ।

[ भवति ! वातनीतेन काशकुसुमरेणुना अक्षिनिपतितेन साऽश्रुपातं खलु तत्र भवतो मुखम् । तद्गृह्णातु भवतीदं मुखोदकम् ] ।

**पद्मावती**—( आत्मगतम्- ) अहो सदक्खिण्णस्स जणस्स परिजणो वि सदक्खिणो एव्व होदि । (उपेत्य-) जेदु अय्यउत्तो । इदं मुहोदअं ।

[ ( आत्मगतम्- ) ] अहो ! सदाक्षिण्यस्य जनस्य परिजनोऽपि

---

अभिनवराजलक्ष्मीः

एवं पद्मावत्या ससान्त्वनमभिहितो वसन्तकः—'वासवदत्तां स्मृत्वा रोदिती'त्युक्तौ कदाचित्सपत्नीसहजेर्ष्यया भर्त्तरि प्रणयकोपं भजेदियमिति विचार्याऽन्यथैव प्राह—भवतीति । वातनीतेन=पवनाक्षिप्तेन । काशकुसुमरेणुना=शारदतृणविशेषपुष्परजसा । अक्षिनिपतितेन=नेत्रनिपतितेन । अश्रुपातेन सहितं—साश्रुपातम्=अश्रुजलक्लिन्नम् । तत्र भवतः=वत्सराजस्य । तत् = तस्मात् । इदं = मदानीतम् । मुखोदकं = मुखप्रक्षालनायोदकम् । भवती = श्रीमती । गृह्णातु = त्वं गृहीत्वा मुखप्रक्षालनाय जलं वत्सराजाय देहीत्याशयः । एतेन—अभूताहरणं नाम गर्भसन्धेरङ्गं दर्शितम् । याथातथ्येन श्रुतसर्वरहस्याऽपि पद्मावती रहस्यरक्षणे प्रत्युत्पन्नमतित्वं विदूषकस्य दृष्ट्वाऽऽत्मगतमाह अहो इति । सदाक्षिण्यस्य=कुशलस्य । जनस्य=लोकस्य । प्रकृते—आर्यपुत्रस्य वत्सराजस्येत्यर्थो बोध्यः । परिजनः = परिचारकवर्गोऽपि । प्रकृते-'विदूषकोऽपी' त्यर्थः । सदाक्षिण्यः = कुशलः । रहस्यरक्षणादौ स्वमेव दत्तावधान इति यावत् । एवञ्चानेन स्ववयस्यस्य रहस्यं कौशलेन रक्षितमित्याशयः ।

सदाक्षिण्य एव भवति । ( उपेत्य— ) जयत्वार्यपुत्रः, इदं मुखोदकम् ] ।

**राजा**—अये ! पद्मावती ?। **(अपवार्य–)** वसन्तक ! किमिदम् ? ।

**विदूषकः**—**(कर्णे–)** एव्वं विअ ।

[ ( कर्णे– ) एवमिव ] ।

**राजा**—साधु वसन्तक ! साधु ! साधु । **(आचम्य)** पद्मावति ! आस्यताम् ।

**पद्मावती**—जं अय्यउत्तो आणवेदि । ( **उपविशति** ) ।

[ यदार्यपुत्र आज्ञापयति । ( —उपविशति ) ] ।

---

अभिनवराजलक्ष्मीः

उपेत्य = राज्ञः समीपमुपसृत्य । जयतु = विजयताम् । इदं मङ्गलवाक्यं समुदाचारात्प्रयुक्तम् । इदं मुखोदकं = जलप्रक्षालनार्थेदं = सलिलम् । 'गृह्णीत' दिति शेषः ।

पद्मावतीशब्दं श्रुत्वा साश्चर्यं राजा प्राह-अये = अहो ! । [अये = अरे ! हैं ! ] । अपवार्य = पद्मावती यथा न शृणोति तथा पृष्ठपरिवर्त्तनं कृत्वा । 'रहस्यं कथ्यतेऽन्यस्य परावृत्त्याऽपवारितम्' इति विश्वनाथः ।

किमिदं = किमेतज्जातं ? । किञ्च मयाऽत्रोत्तरं वक्तव्यं ? कथं नु रहस्यरक्षणं करणीयम् ? । एवमिव = अनेन प्रकारेण मया रहस्यगोपनं कृतम् , एवमेव भवताऽपि अश्रुपातकरणमुक्त्वा वासवदत्तास्मरणशोकाश्रुपातगोपनं कार्यम् ।

साधु=युक्तं कृतम् । अहो ! प्रत्युत्पन्नमतित्वं भवतः । त्वद्दर्शितेन मार्गेणाऽहमपि रहस्यगोपनं विधास्ये इत्याशयः । आचम्य = मुखप्रक्षालनाद्याचमनान्तं कर्म कृत्वा । शुचिर्भूत्वेति यावत् । अश्रुपातजन्यमप्रायत्यमाचमनादिनाऽपनीयेति तु तत्त्वम् । आस्यताम् = उपविश्यतां भवत्या । यत् = यथा । आज्ञापयति = आज्ञां करोति, आदिशति । 'तथा करोमी' ति शेषः ।

**राजा**—पद्मावति !

**शरच्छशाङ्कगौरेण वाताऽऽविद्धेन भामिनि ! ।**
**काशपुष्पलवेनेदं साऽश्रुपातं मुखं मम ॥ ८ ॥**

**( आत्मगतम्- )**

**इयं बाला नवोद्वाहा सत्यं श्रुत्वा व्यथां व्रजेत् ।**
**कामं धारस्वभावेयं, स्त्रीस्वभावस्तु कातरः ॥९॥**

---

अभिनवराजलक्ष्मीः

रहस्यभेदभीतो राजा सानुनयमश्रुपातकारणं—विनाऽपि प्रश्नं—स्वयमेव निर्दिशति—**शरदिति** ।

[ अन्वयः ] हे भामिनि ! शरच्छशाङ्कगौरेण वाताविद्धेन काशपुष्पलवेन इदं मम मुख साश्रुपातम् ।

[ विग्रहः ] शरदि शशाङ्कः—शरच्छशाङ्कः, शरच्छशाङ्क इव गौरः-शरच्छशाङ्कगौरः, तेन शरच्छशाङ्कगौरेण । वातेन आविद्धः—वाताविद्धः, तेन—वाताविद्धेन । काशस्य पुष्पं—काशपुष्पं, तस्य लवः, तेन—काशपुष्पलवेन । अश्रूणां पातः—अश्रुपातः, तेन सहितं—साश्रुपातम् ।

[अर्थः] हे भामिनि = अयि कोपने !, हे सुन्दरि ! प्रियतमे ! । शरच्छशाङ्कगौरेण = शरच्चन्द्रधवलेन । 'गौरः पीतेऽरुणे श्वेते विशुद्धे चाभिधेयव'—दिति मेदिनी । वाताविद्धेन = पवनाक्षिप्तेन, वातनुन्नेन । काशपुष्पलवेन = इक्षुगन्धापुष्परेणुकणेन । '—अथो काशमस्त्रियाम् । इक्षुगन्धा पोटगलः' इत्यमरः । 'काशस्तृणे रोगभेदे'इति हैमः । इदं मम मुखं = त्वया विभाव्यमानं मन्मुखमेतत् । साऽश्रुपातम् = उदश्रु । 'सञ्जात'मिति शेषः । वातान्दोलितपुष्परेणुपतनेनायमश्रुप्रवाहो मम, नान्यथाऽत्र भवत्याँ किञ्चिदाशङ्कनीयमित्याशयः । व्याजोक्तिरनुप्रासश्च ॥ ८ ॥

एवंरीत्याऽऽत्मना कृतायाः पद्मावतीवञ्चनाया औचित्यं समर्थयते-**इयमिति** ।

**विदूषकः**—उइदं तत्तहोदो मअधराअस्स अवरह्णकाले भवन्ते अग्गदो करिअ सुहिज्जणदंसणं। 'सक्कारो हि णाम सक्कारेण पडिच्छिदो पीदिं उप्पादेदि'। ता उट्ठेदु दाव भवं !।

[ उचितं तत्रभवतो मगधराजस्याऽपराह्णकाले भवन्तमग्रतः कृत्वा

---

अभिनवराजलक्ष्मीः

इयं=पद्मावती। बाला=बालस्वभावा-मुग्धा। बालतया धैर्यवर्जिताऽतीव कातरा चेति भावः। 'बाला स्यात्षोडशाब्दा तदुपरि तरुणी त्रिंशतेर्यावदूर्ध्वं प्रौढे'ति कामशास्त्रम्। किञ्च—नव उद्वाहो यस्याः सा—नवोद्वाहा=नवोढा, सद्यः-परिणीता। सुखदुःखानुभवविकलेति यावत्। सत्यं='वासवदत्तां स्मृत्वा रोदिमि, तेन मे साश्रुपातं मुख' मिति सत्यमश्रुपातकारणम्। श्रुत्वा=आकर्ण्य। व्यथां=पीडां, खेदं, मनस्तापञ्च। व्रजेत्=आप्नुयात्, अनुभवेत्।

ननु बालाऽपीयं धीरस्वभावा सत्यं श्रुत्वाऽपि नातिपीडां व्रजेदित्यत आह—काममिति। कामम्=उपगच्छामस्तावदिदम्। 'अकामानुमतौ काममसूयोपगमेऽपि चे'ति रुद्रकोशः। यत्-इयं=पद्मावती। धीरस्वभावा= प्रकृत्यैव धैर्यशालिनी। तु=परन्तु। स्त्रीस्वभावः=सामान्यतः स्त्रीणां प्रकृतिस्तु। कातरः=धैर्यवर्जितः। स्त्रीस्वभावसुलभकातरतया परमार्थतो मद्रोदनकारणं श्रुत्वा नूनं मनस्तापं व्रजेदतो युक्तमेवास्या रहस्यगोपनेन सान्त्वनमित्याशयः॥ ६॥

रहस्यभङ्गभयात् कथाप्रसङ्गं विच्छेदयितुमुचितज्ञो विदूषक आवश्यकं कार्यान्तरं स्मारयन्नाह—उचितमिति। मगधराजस्य=दर्शकस्य।

भवन्तं=स्वभगिनीपतिं त्वामुदयनम्। अग्रतः कृत्वा=पुरतो विधाय। अपराह्णकाले=दिनपश्चाद्भागे। सुहृज्जनदर्शनं=स्वबन्धुबान्धवज्ञातिजन-प्रेक्षणम्। उचितं=युक्तम्। सदाचारपरम्पराप्राप्तमिति यावत्। विवाह-महोत्सवे हि सादरं निमन्त्रितैरागतैर्बन्धुबान्धवपौरजनपदैरागत्य पूर्वमा-

सुहृज्जनदर्शनम् । 'सत्कारो हि नाम सत्कारेण प्रतीष्टः प्रीतिमुत्पादयति' । तदुत्तिष्ठतु तावद्भवान् ] ।

**राजा**—बाढं । प्रथमः कल्पः । ( **उत्थाय**- )

**गुणानां वा विशालानां, सत्काराणाञ्च नित्यशः ।**
**कर्त्तारः सुलभा लोके, विज्ञातारस्तु दुर्लभाः ॥१०॥**

---

अभिनवराजलक्ष्मीः

चाराज्जामाता भवान् सत्कृतः, इदानीं निष्पन्ने मङ्गलमहोत्सवे भवता जामात्रा सहैव तेषामागतानां बन्धुवर्गाणां पारितोषकदानेन, दर्शनादिना च सत्कारो मगधराजेन विधेय एव । । तत्र च सदाचारपरिरक्षणाय भवतोऽप्य-वस्थानमावश्यकमित्याशयः । सम्पन्ने विवाहे हि जामातृ—भगिनी-पत्यादिभिः सह श्वशुरश्यालकादयो बन्धुबान्धवानां दर्शनादिना सत्कार-माचरन्तीति—लोकमर्यादा । सत्कारः = आदरः, संमानं वा । सत्कारेण= आदरेण सादरमेव । प्रतीष्टः=गृहीतः । स्वीकृतश्चेत् । प्रीतिं=सत्कर्त्तु र्बान्धवादेः स्नेहम् , अनुरागं, रतिञ्च । उत्पादयति=वर्द्धयति ।

प्रतिसत्कारविधानस्यौचित्यमावश्यकताञ्च दर्शयति—सत्कारो हीति । सत्कारः = लोकमर्यादाऽऽगता बान्धवादिकृता जामात्रादिपूजा । सत्कारेण—आदरेण = प्रतिसत्कारेण, अभिवादनोपगमनाशीर्वादग्रहणगृहगमनादिना लोक-व्यवहारानुसारेणैवेति यावत् ।

प्रतीष्टः=स्वीकृतः । एवञ्च—विवाहमहोत्सवे समागतानां बन्धूनां प्रति-सत्कारो भवन्तमग्रतः कृत्वा महाराजदर्शकेनाद्य करणीयस्तत्र भवता त्वरितं गन्तव्यमित्याशयः । उत्तिष्ठतु= उत्थाय गन्तुं सन्नद्धो भवत्विति यावत् ।

बाढं =युक्तम् । प्रथमः कल्पः = मुख्यो विधिः । अवश्यं मयाऽनुष्ठेय-मेतत् । 'कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने' इति रुद्रः ।

गुणानामिति । लोके—अस्मिन् जगति । विशालानां = महतां,

( निष्क्रान्ताः—सर्वे ) ।

इति चतुर्थोऽङ्कः ।

---

अभिनवराजलक्ष्मीः

गुणानां = दानत्यागोपकारदयादीनोद्धारणादिगुणानां, च = पुनः, विशालानां- सत्काराणां = समानानुरागानुग्रहादिसत्कार्याणाञ्च । कर्त्तारः = अनुष्ठातारः, सुलभाः = सुप्रापाः । सत्कार्याद्यनुष्ठातारो लोके बहवः सन्तीत्याशयः । तु = परन्तु । विज्ञातारः = सादरं तत्स्वीकर्त्तारः, गुणादिसत्कारादितारतम्यविदः, तत्सूक्ष्मतत्त्ववेत्तारश्च । दुर्लभाः = न सुलभाः । अल्पा एव लोके इत्याशयः ।

एवञ्च प्रकृतिजनकृतसत्कारतारतम्यविदा महाराजदर्शकेन स्वबन्धुबान्धव- पौरजानपदजनानुरञ्जनाय, तत्कृतसत्कारप्रत्युपकारविधानाय च तेषां यथारूपं सादरं प्रत्युद्गमनं क्रियमाणं सदाचारपरिप्राप्तं युक्ततमञ्चेति भावः ॥१०॥

सर्वे = उदयनप्रमुखाः सर्वेऽपि जनाः । निष्क्रान्ताः = स्वस्वकार्य- विधानाय यथायथं निर्गताः । 'अन्तनिष्क्रान्तसकलपात्रोऽङ्कः' इति भरतोक्तेः ।

इति पण्डितराजश्रीस्नेहिरामशास्त्रिणां पौत्रेण, श्रीशिवनारायण- शास्त्रिणां पुत्रेण, श्रीराजलक्ष्मीगर्भसम्भूतेन, श्रीगुरुप्रसाद- शास्त्रिणा विरचितायां स्वप्नवासवदत्तनाटका- ऽभिनवराजलक्ष्म्यां चतुर्थोऽङ्कः ।

# अथ पञ्चमोऽङ्कः ।

## ( ततः प्रविशति पद्मिनिका )

अभिनवराजलक्ष्मीः

कथासङ्क्षेपायाऽङ्कादौ प्रवेशकनामानमर्थोपक्षेपकमारचयति[1]—तत इति । प्रवेशकमधिकृत्याह—भरतः—

'अङ्कान्तरानुसारी सङ्क्षेपमथाधिकृत्य बिन्दूनाम् ।
प्रकरणनाटकविषये प्रवेशको भवति काव्येषु ॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।
प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः ॥
कालार्थान्तरसङ्क्षयत्यासारम्भकार्यविषयाणाम् ।
अर्थाभिधानपूर्वः प्रवेशकः स्यादनेकार्थः[2] ॥
बह्वाश्रयमप्यर्थं प्रवेशकैः सङ्क्षिपेच्च सन्धिषु च ।
बहुपूर्णपद्यवृत्तं जनयति खेदं प्रयोगस्य ॥
यत्रार्थस्य समाप्तिर्न भवेदङ्के प्रयोगबाहुल्यात् ।
बहुवृत्तान्तोऽल्पकथैः प्रवेशकैः संविधातव्यः ॥' इति ।

एवञ्च कथासङ्क्षेपार्थं प्रवेशको नामार्थोपक्षेपकोऽङ्कादौ विरच्यते नाटकादिष्वित्यवधेयम् । तत्र पद्मिनिकामधुकरिके-पद्मावतीपरिचारिके । विदूषकस्तु राज्ञो वयस्यः ।

ततः = तदनन्तरम् । पद्मिनिका = तन्नाम्नी पद्मावतीचेटी। मधुकरिका-

---

१ विदूषकादिभिः प्राकृतभाषिभिः पात्रैरारचितत्वादत्र प्रवेशकलक्षण-समन्वयो बोध्यः । २. अनेकार्थः = अनेकप्रयोजनः ।

**पद्मिनिका**–महुअरिए ! महुअरिए ! आअच्छ दाव सिग्घं ।

[ मधुकरिके ! मधुकरिके ! आगच्छ तावच्छीघ्रम् ] ।

( प्रविश्य- )

**मधुकरिका**–हला ! इअह्मि । किं करिअदु ? ।

[ हला ! इयमस्मि । किं क्रियताम् ? ] ।

**पद्मिनिका**–हला ! किं ण जाणासि तुवं–'**भट्टिदारिआ पदुमावदी सीसवेदणाए दुक्खाविदे**'त्ति ।

[ हला ! किं न जानासि त्वं—'भर्तृदारिका पद्मावती शीर्षवेदनया दुःखिते'ति ? ] ।

**मधुकरिका**–हद्धि ।

[ हा धिक् ] ।

---

अभिनवराजलक्ष्मीः

ऽपि तथैव । आगच्छ=अत्रागच्छ । शीघ्रं तावत्=त्वरितमेव । त्वराकृते सम्भ्रमे द्वित्वम् । प्रविश्य=पद्मिनिकायाः सविधे समेत्य । मधुकरिका । इत्थमाहे'ति शेषः । हला=प्रियसखि ! पद्मिनिके ! । इयमस्मि=इयमहं त्वदन्तिके समायाताऽस्मि ।

किं क्रियतां=किं नु मया करणीयम् । 'कथय प्रियसखि ! किमर्थं मां ससम्भ्रमेवाह्वयसि ?, किं नु मया करणीय'मित्याशयः । किं न जानासि= मयैव किं वक्तव्यम् ? किं त्वं न जानासि ? । किन्तदित्यत आह—भर्तृदारिकेति । राजपुत्री पद्मावती । शीर्षस्य वेदना—शीर्षवेदना तया= शिरोव्यथया । 'उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्' इत्यमरः । दुःखिता=बलवदस्वस्था । इति=इत्थम् । 'त्वं किं न जानासी'ति पूर्वेण सम्बन्धः । पद्मावतीशिरोव्यथाज्ञानेन कष्टानुभवं नाटयति—हेति । हा धिक्=हा

**पद्मिनिका**—हला ! गच्छ सिग्घं अय्यं आवन्तिअं सद्दावेहि । केवलं भट्टिदारिआए सीसवेदणं एव्व णिवेदेहि । तदो सअं आगमिस्सदि

[ हला ! गच्छ शीघ्रम्, आर्यामावन्तिकां शब्दायस्व[1] । केवलं भर्तृदारिकायाः शीर्षवेदनामेव निवेदय । ततः स्वयमेवागमिष्यति ] ।

**मधुरिका**—हला ! किं सा करिस्सदि ? ।

[ हला ! किं सा करिष्यति ? ] ।

**पद्मिनिका**—सा खु[2] दाणिं महुराहिं कहाहिं भट्टिदारिआए सीसवेदणं विणोदेदि ।

[ सा खल्विदानीं मधुराभिः कथाभिर्भर्तृदारिकायाः शीर्षवेदनां विनोदयति ] ।

---

अभिनवराजलक्ष्मीः

कष्टम् ! नाहमिमं वृत्तान्तं जानामि । इदानीमेव श्रुतमेतत्कष्टप्रदं वृत्तमित्यप्यवधेयम् । आर्या = पूजनीयाम् । आवन्तिकां = वासवदत्ताम् । शब्दं करोति शब्दायते । शब्दायस्व = शब्दं कुरु । वृत्तान्तं तस्यै निवेदय ।

ननु किं निवेदयाम्येव, आहोस्विदाह्वयाम्यप्यार्यामावन्तिकामित्यत आह—केवलमिति । निवेदय = कथय । न तु तामाह्वय, पूज्यायास्तस्या आह्वानस्यानुचितत्वात् ।

ननु तर्हि कथं तदागमनं विना भर्तृदारिकायाः शिरोऽर्तिर्गमिष्यतीत्यत आह—तत इति । पद्मावतीशिरोऽर्त्तिश्रवणानन्तरम् । स्वयमेव = अनाहूताऽपि आत्मनैव ।

ननु तदागमनेनैव शिरोव्यथा कथमपयास्यतीत्याह—किं सेति । सा खलु = आर्या आवन्तिका हि । मधुराभिः = मनोहराभिः, हृद्याभिः । कथाभिः = उपाख्यानैः । [ कथा = कहानी किस्सा ] । विनोदयति = विनोदयिष्यति, दूरिकरिष्यति । वर्त्तमानसामीप्ये भविष्यति लट् ।

---

१ 'शब्दापय' पा० ।　　२ 'हु' पा० ।

**मधुकरिका**—जुज्जइ । कहिं सअणीअं रइदं भट्टिदारिआए ? ।

[ युज्यते । कुत्र शयनीयं रचितं भर्तृदारिकायाः ? ] ।

**पद्मिनिका**—समुद्दगिहके किल सेज्जा त्थिण्णा । गच्छ दाणिं तुवं । अहं वि भट्टिणो णिवेदणत्थं अय्यवसंतअं अण्णेसामि ।

[ समुद्रगृहके किल शय्याऽऽस्तीर्णा । गच्छेदानीं त्वम् । अहमपि भर्त्रे निवेदनार्थमार्यवसन्तकमन्वेषयामि ] ।

**मधुकरिका**—एव्वं होदु । [ **निष्क्रान्ता** ] ।

[ एवं भवतु—( निष्क्रान्ता ) ] ।

**पद्मिनिका**—कहिं दाणिं अय्यवसन्तअं पेक्खामि ? ।

[ कुत्रेदानीमार्यवसन्तकं प्रेक्षे[1] ? ] ।

अभिनवराजलक्ष्मीः

युज्यते='सा कथाभिर्मनो विनोदयिष्यती'ति युक्तमुक्तं भवत्या । सम्भाव्यते एवमित्यर्थः । शयनीयं = तल्पम् । रचितं = कल्पितम् । [पद्मावती का पलङ्ग कहाँ बिछा है ? ] । समुद्रगृहके = जलयन्त्रशीतले तदाख्ये भवने । यस्मिन्भवने ग्रीष्मतापशमनाय भित्तिषु परःसहस्राणि च्छिद्राणि जलधारोद्गमनाय भवन्ति, ततश्च जलसीकरा अनुक्षणं क्षरन्ति, तत्समुद्र-गृहमित्युच्यते । 'समुद्रगृहमित्युक्तं जलयन्त्रनिकेतन'मिति हारावली । शय्या = तल्पम् । आस्तीर्णा = विस्तारिता । [ बिछी है ] । गच्छ = आवन्तिकाया अन्तिकं गच्छ । भर्त्रे = वत्सराजाय । निवेदनार्थं = कथनाय । अन्विष्यामि = गवेषयामि । एवं भवतु=गच्छाम्यहमावन्तिकामाह्वयितुं, त्वमपि आर्यवसन्तकमन्विष्य तावत् । निष्क्रान्ता = मधुकरिका रङ्गान्निर्गता ।

एकाकिनी पद्मिनिका स्वगतमाह—कुत्रेति । इदानीम् =अस्मिन्विलम्बासहे समये । [ इदानीं = अब जल्दी में ] अन्विष्यामि = गवेषयामि ।

१ 'पश्यामि' पा० ।

## ( ततः प्रविशति विदूषकः ) ।

**विदूषकः**—अज्ज खु देवीविओअविहुरहिअअस्स तत्तहोदो वच्छराअस्स पद्मावतीपाणिग्गहणसमीरिअस्स[1] अच्चन्तसुहावहे मङ्गलोसवे मदणग्गिदाहो अहिअदर वड्ढइ । **(पद्मिनिकां विलोक्य-)** अयि पदुमिणिआ ! । पदुमिणिए ! किं इह वत्तदि ? ।

[ अद्य खलु देवीवियोगविधुरहृदयस्य तत्रभवतो वत्सराजस्य पद्मावतीपाणिग्रहणसमीरितोऽत्यन्तसुखावहे[2] मङ्गलोत्सवे मदनाऽग्निदाहो-

---

अभिनवराजलक्ष्मीः

[ कहाँ खोजूँ ? ] । देव्याः = वासवदत्तायाः, वियोगेन = विप्रयोगेण, विधुरं = विक्लवं हृदयं यस्यासौ तस्य-देवीवियोगविधुरहृदयस्य = वासदत्तावियोगव्यथितस्वान्तस्य । 'वैकल्येऽपि च विश्लेषे, विधुरं विकले त्रिषु' इति त्रिकाण्डशेषः ।

वत्सराजस्य = कौशाम्बीपतेरुदयनस्य । पद्मावत्याः पाणिग्रहणेन समीरितः पद्मावतीपाणिग्रहणसमीरितः = पद्मावतीविवाहसन्धुक्षितः ।

क्वचित्तु—'पद्मावतीपाणिग्रहणसमीरितस्ये'ति पाठः । तदेदं पद्मावती विवाहसंवर्धितवैकल्यस्येत्येवमर्थेन वत्सराजविशेषणमित्याहुर्गौडाः[2] ।

अत्यन्तं सुखमावहति—अत्यन्तसुखावहः, तस्मिन् अत्यन्तसुखावहे=नितरामानन्दप्रदे । मङ्गलोत्सवे = विवाहमहोत्सवेऽपि । मदन एवाग्निः—

---

१ '**समीरितस्ये**'ति मुद्रितः पाठः । स च न सुन्दरः ।

२ अन्ये तु—वासवदत्तावियोगेन विधुरं=विषयोपभोगपराङ्मुखं मनो यस्य, तस्य वत्सराजस्य—**पद्मावतीपरिणयसमीरितस्य=पद्मावतीपरिणयेन** विषयोपभोगादिष्वाकृष्टचेतस इत्यर्थमाहुस्ते धन्यतमा एवेति **गौडाः** । अत्र सर्वेषामपि टीकाकाराणां समानैव गतिरित्यहो ! विडम्बना ।

ऽधिकतरं वर्द्धते ! । ( पद्मिनिकां विलोक्य— ) अयि पद्मिनिका ! । पद्मिनिके ! किमिह वर्त्तते ? ] ।

**पद्मिनिका—**अय्य ! वसन्तअ ! । किं ण जाणासि तुवं—'भट्टिदारिआ पदुमावदी सीसवेदणाए दुःखाविदा'त्ति[1] ? ।

[ आर्य ! वसन्तक ! किं न जानासि त्वं,—'भर्तृदारिका पद्मावती शीर्षवेदनया दुःखिते'ति ] ।

**विदूषकः—**भोदि ! सच्चं ण जाणामि ।

[ भवति ! सत्यं न जानामि ] ।

**पद्मिनिका—**तेण हि भट्टिणो णिवेदेहि णं । जाव अहं वि सीसाणुलेवणं तुवारेमि ।

[ तेन हि भर्त्रे निवेदयैनाम् । यावदहमपि शीर्षानुलेपनं त्वरयामि ] ।

अभिनवराजलक्ष्मीः

मदनाग्निः, तस्य दाहः—मदनाग्निदाहः=कामाग्निसन्तापः । वर्द्धते=समुज्जृम्भते । पद्मावतीपरिणयस्मारितवासवदत्ताप्रणयानुबन्धस्य वयस्यस्य वत्सराजस्य वासवदत्तास्मरणजन्मा कामज्वरो वर्द्धते, तेनाऽस्वस्थो मे वयस्य इत्याशयः ।

इत्थं वदन्नेव तत्रैवोपस्थितां पद्मिनिकां दृष्ट्वा साश्चर्यमाह—अयीति । अयि=अहो ! । 'पद्मिनिका'—इत्यस्य 'अप्यत्र वर्त्तते' इति शेषः । किं=किमर्थम् । इह=अत्र स्थाने । 'वर्तते' इत्यस्य 'भवती'ति शेषः । किमिह वर्त्तते भवतीत्यर्थः । केचित्तु इह=अन्तःपुरे, कि वर्त्तते=का वार्त्तेत्यर्थमाहुः, तद्युक्तं न वेत्यत्र सहृदया एव प्रमाणम् ।

भवति=श्रीमति ! पद्मिनिके ! । सत्यं=सत्यमेव । [ सचमुच मैं नहीं जानता हूँ कि—श्रीमती पद्मावतीजी अस्वस्थ हैं ] । तेन हि=यतो

१ 'देत्ति' पा० ।

**विदूषकः—कहिं सअणीअं रइदं पदुमावदीए ?** ।

[ कुत्र शयनीयं रचितं पद्मावत्याः ? ] ।

**पद्मिनिका—**समुद्दगिहके किल सज्जा त्थिण्णा ।

[ समुद्रगृहके किल शय्या ऽऽस्तीर्णा ] ।

**विदूषकः—**गच्छदु भोदी । जाव अहं वि तत्तहोदो णिवेदइस्सं ।

[ गच्छतु भवती । यावदहमपि तत्र भवते निवेदयिष्यामि ] ।

**( निष्क्रान्तौ )** ।

*** प्रवेशकः ***

---

अभिनवराजलक्ष्मीः

भर्तृदारिकाऽस्वथा अतो हेतोः । तदिदानीमिति यावत् । भर्त्रे = उदयनाय । एनां निवेदय = पद्मावतीं निवेदय । तदस्वास्थ्यवृत्तान्तं निवेदयेति यावत् । यद्वा–एनां = तस्याः शिरोवेदनामित्येवाऽर्थः । यावत् = तावत् । [ तबतक ] शीर्षस्यानुलेपनं–शीर्षानुलेपनं = पीडाशमनं शिरोऽनुलेपनौषधम् । 'विधातु'-मितिशेषः । त्वरां करोमि त्वरयामि=झटिति कल्पयित्वा आनयामि । कुत्रेति । क्वशयनीयं वर्त्तते पद्मावत्याः ? । कुत्र खलु स्थाने प्रेषयामि वयस्यमित्याशयः ।

गच्छतु = शिरोऽनुलेपनौषधनकल्पनार्थं प्रयातु । तत्र भवते = मान्याय सुहृदे वत्सराजाय । निवेदयिष्यामि = निवेदयामि ।

निष्क्रान्तौ = बहिर्गतौ । प्रवेशक इति । एतत्पर्यन्तं प्रवेशक इत्यर्थः । प्राकृतभाषिपात्ररचितत्वाच्च प्रवेशकोऽयम् । प्रवेशकोऽनुदात्तोक्त्या नीचपात्र-प्रयोजितः' इत्युक्तेः ।

( ततः प्रविशति राजा )।

**राजा—**

**श्लाघ्यामवन्तिनृपतेः सदृशीं तनूजां**
**कालक्रमेण पुनरागतदारभारः।**
**लावाणके हुतवहेन हृताङ्गयष्टिं**
**तां पद्मिनीं हिमहतामिव चिन्तयामि ॥१॥**

---

अभिनवराजलक्ष्मीः

ततः = पद्मिनिकाविदूषकनिर्गमनान्तरम्। राजा = वत्सराज उदयनः। 'राजे' त्यस्य 'प्रविशन्निदमाहे' ति शेषः। विदूषकसूचितामात्मनो दशां प्रकटयति = श्लाघ्यामिति।

[ अन्वयः ] कालक्रमेण पुनरागतदारभारः—लावाणके हुतवहेन हृताऽङ्गयष्टिं, सदृशीम्, अवन्तिनृपतेः' श्लाघ्यां, तां तनूजां—हिमहतां पद्मिनीमिव—चिन्तयामि।

[ विग्रहः ] श्लाघ्यते या सा—श्लाघ्या। अवन्तीनां नृपतिः = अवन्तिनृपतिः, तस्य। तन्वाः जायते तनूजा, ताम्। कालस्य क्रमः—कालक्रमः, तेन। पुनः आगतः दारा एव भारो यस्यासौ—पुनरागतदारभारः। हृता अङ्गयष्टिर्यस्याः सा—हृताङ्गयष्टिः। हिमेन हता,—हिमहता, ताम्।

[ अर्थः ] कालक्रमेण=गच्छता कालेन। वासवदत्तायां देवलोकमुपगतायां सत्यां चिरकालान्तरमदृष्टवशादित्यर्थः। पुनरागतदारभारः = पुनरपि पद्मावतीपरिणयात्समापतितकलत्ररूपभारानुबन्धः। अत्र 'कालक्रमेण पुनःरागतदारभार' इत्यनेन विधिनियोगादेव ममायमपरः परिणय इति सूचयता पुनर्दारग्रहणे स्वस्य नितरामभिलाषशून्यता दर्शिता। अदृष्टवशात्—( विधिनियोगस्य कथमप्यन्यथयितुमशक्यतया )—पद्मावत्या सह ममायं द्वितीयो विवाहो जातो, न तु मम तत्राल्पीयस्यपीच्छाऽऽसीदित्याशयः। लावाणके =

( प्रविश्य- )

**विदूषकः**—तुवरदु-तुवरदु दाव भवं।

[ त्वरतां त्वरतां तावद्भवान् ]।

**राजा**—किमर्थम् ?।

**विदूषकः**—तत्तहोदी पदुमावदी सीसवेदणाए दुक्खाविदा।

---

अभिनवराजलक्ष्मीः

तदाख्ये मदीये स्कन्धावारग्रामे। हुतवहेन = वह्निना। हृताङ्गयष्टिं = दग्धशरीराम्। अङ्गयष्टिः = तनुलता। सदृशीं = रूपगुणलावण्यादिना मदनुरूपाम्। अवन्तिनृपतेः = मालवराजस्य प्रद्योतापरनामधेयस्य महासेनस्य। श्लाघ्यां = प्रशंसनीयाम्। तां=जगति विदितां मन्मानसराजहंसीम्। तनूजां= सुतां=वासवदत्ताम्। हिमहतां = तुषारदग्धाम्। पद्मिनीमिव = कमलिनीमिव। हिमेन अतिशीतेन च पद्मिनी दग्धा भवति। चिन्तयामि=प्रतिक्षणं विभावयन्कष्टमनुभवामि। केचित्तु 'अवन्तिनृपतेः सदृशीम् = अवन्तिराजवंशानुरूपा'-मित्येवमर्थमाहुः। [ यद्वा-'लावाणके हुतवहेन हृताङ्गयष्टि-हिमहतां पद्मिनी-मिव-सदृशीमवन्तिपतेस्तां तनूजां चिन्तयामी' त्यन्वयो बोध्यः। ]

'दारभार इति 'भार'पदोपादानेन-वासवदत्तागतचित्तस्य मम भार एवायमपरो विवाह इत्यपि सूचितम्। [ उपमा। स्त्रीलाभेऽपि स्त्रीचिन्ताविगम-रूपफलाऽभावाद्विशेषोक्तिः। 'सति हेतौ फलाऽभावो विशेषोक्तिर्निगद्यते' इति तल्लक्षणात्। वसन्ततिलकं वृत्तम् ]॥ १ ॥

**प्रविश्येति**। प्रविश्य विदूषको राजानमित्थमाहेत्यर्थः। त्वरतां = गमने शीघ्रतां कुरु। सम्भ्रमे द्वित्वम्। [ जल्दी चलिए, जल्दी चलिए ]। किमर्थं = कस्मै प्रयोजनाय मया शीघ्रं गन्तव्यम् ?।

[ तत्रभवती पद्मावती शीर्षवेदनया दुःखिता ]।

**राजा**—कैवमाह ? ।

**विदूषकः**—पदुमिणिआए कहिदं ।

[ पद्मिनिकया कथितम् । ]

**राजा**—भोः ! कष्टम्—

**रूपश्रिया समुदितां गुणतश्च युक्तां**
**लब्ध्वा प्रियां मम तु मन्द इवाद्य शोकः ।**

---

अभिनवराजलक्ष्मीः

दुःखितेति । एवञ्च तां गत्वाऽवलोकय, तस्या मनो विनोदय चेत्याशयः । का—का खलु । एवम् = एत्थम् । आह = उवाच । 'कथा किल भवते एषोऽस्वास्थ्यवृत्तान्तो निवेदितः' इत्याशयः । पद्मावतीप्रियसहचर्या पद्मिनिकया यदुक्तं तत्तथ्यमेवेति तस्याः शिरोवेदनां सत्यत्वेनावधार्य राजा शोकं नाटयन्नाह—**कष्टमिति** । भो इति स्वात्मोपनिमन्त्रणम् । कष्टं = दुखस्यायमवसरः । स्वाशयमेव विशदयति—**रूपेति** ।

[ अन्वयः ] रूपश्रिया समुदितां गुणतश्च युक्ताम् प्रियां लब्ध्वा मम तु अद्य शोको मन्द इव । अनुभूतदुःखः पूर्वाभिघातसरुजः पद्मावतीमपि तथैव समर्थयामि । यद्वा पूर्वाभिघातसरुजो ममेत्यन्वयः ॥ २ ॥

[ अर्थः ] रूपस्य श्रीः—रूपश्रीः, तया रूपश्रिया—अतिशयसौन्दर्यसम्पत्त्या । समुदितां = समृद्धां । च = पुनः, गुणतः = विनयौदार्यदाक्षिण्यमाधुर्यादिभिः । युक्तां=सहितां, प्रियां=पद्मावतीं, लब्धा = परिणीय । मम तु= उदयनस्य तु, अद्य = सम्प्रति, शोकः = प्रियविप्रयोगजन्मा शोकः, मन्द इव= किञ्चिन्न्यूनताङ्गत इव, प्रशान्तवेग इव च । 'अस्तो'ति शेषः । सुन्दरीं सगुणाञ्च भार्यां लब्ध्वा किञ्चिदपगतशोकावेगोऽस्मीदानीमित्याशयः ।

**पूर्वाभिघातसरुजोऽप्यनुभूतदुःखः**
**पद्मावतीमपि तथैव समर्थयामि ॥ २ ॥**

अभिनवराजलक्ष्मीः

अनुभूतं दुःखं येनासौ—अनुभूतदुःखः = अनुभूतप्रियावियोगक्लेशः । अत एव—'पद्मावतीशिरोव्यथामाकर्ण्ये'ति शेषः । पूर्वं योऽभिघातः = वासवदत्तामरणात्मकः, तेन (रुजया सहितः–) सरुजः -पूर्वाभिघातसरुजः = नवीभूतवासवदत्तावियोगपीडार्त्तः । अत एव व्यथितमानसः सन् । पद्मावतीमपि= दर्शकभगिनीं पद्मावतीमपि । तथैव = वासवदत्तावदेव, समर्थयामि = सम्भावयामि । वासवदत्तावियोगविदीर्णमानसोऽहं प्रियां पद्मावतीमस्वस्थां श्रुत्वा शङ्कितहृदयो वासवदत्तावदेवाऽस्याः स्वास्थ्यं प्रार्थये इत्याशयः । अन्योऽपि जनोऽनुभूतप्रियवियोगः स्वजनस्य कस्याप्यस्वास्थ्यमाकर्ण्याऽमङ्गलाशङ्कया वेपमानमानसः स्नेहाविष्टहृदयः सन् पूर्वाघातं स्मृत्वा तस्य स्वास्थ्यं काङ्क्षते ।

केचित्तु—'सरुज' इति षष्ठ्यन्तमिति कृत्वा—'रूपश्रिया समुदितां गुणतश्च युक्तां प्रियां प्राप्य पूर्वाभिघातसरुजोऽपि = वासवदत्तावियोगव्यथितस्य मम मन्द इवाऽद्य शोकः'—इत्येवमन्वयमिच्छन्ति । अनुभूतदुःखः = अनुभूत वासवदत्तावियोगदुःखोऽहं, पद्मावतीमपि–(तदस्वास्थ्यवार्त्तामाकर्ण्य) तथैव = वासवदत्तावदेव मृतामेव—समर्थयामि = सम्भावयामि । वासवदत्तावदियमपि कदाचिन्म्रियेतेति शङ्के-इत्येवमत्रापि केचन व्याचक्षते च । अन्ये तु पूर्वाभिघातसरुजोऽपि = वासवदत्तामरणव्यथितहृदयस्यापि मे पद्मावतीं प्राप्य किञ्चिदिव शोको मन्द इव = शिथिल इव, नतु सर्वथाऽपगतो मे शोक इत्यर्थः ।

तु=किन्तु, अनुभूतदुःख=भुक्तवियोगदुःखः–निरन्तरं दुःखस्यानुभवायैव विधिना सृष्टोऽहं—पद्मावतीमपि—तथैव = मत्समानभाग्यां निरन्तरदुःखानुभवायैव निर्मितामिव—समर्थयामि = सम्भावयामि । हतभाग्यस्य मे सम्बन्धिनोऽपि तथैवे'त्येवं व्याचक्रुः । तदेतद्व्याख्यानं काव्यतत्त्वानभिज्ञानामेव शोभते इति न युक्तमिति परे । वसन्ततिलकं वृत्तम् ॥ २ ॥

—अथ कस्मिन् प्रदेशे वर्तते पद्मावती ? ।

**विदूषकः**—समुद्दगिहके किल सेज्जा त्थिण्णा ।

[ समुद्रगिहके किल शय्याऽऽस्तीर्णा ] ।

**राजा**—तेन हि तस्य मार्गमादेशय ।

**विदूषकः**—एदु एदु भवं । [ एत्वेतु भवान् ] ।

**( उभौ परिक्रामतः ) ।**

**विदूषकः**—इदं समुद्दगिहकं, पविसदु भवं ।

[ इदं समुद्रगृहकम् । प्रविशतु भवान् ] ।

**राजा**—पूर्वं त्वं[1] प्रविश ।

**विदूषकः**—भो ! तह । ( **प्रविश्य**– ) अविहा ! चिट्ठदु चिट्ठदु दाव भवं ।

[भोः ! तथा । (**प्रविश्य**–) अविहा हितष्ठतु तिष्ठतु तावद्भवान् ] ।

---

अभिनवराजलक्ष्मीः

अथेति प्रश्ने । प्रदेशे = स्थाने । समुद्रगृहके तस्याः शय्या आस्तीर्णेति किल श्रुतं मया, मन्ये पद्मावत्यपि तत्रैव भविष्यतीत्युत्तराशयः । तेन हि = यद्येवं तर्हि । तस्य=समुद्रगृहकस्य । मार्गं = पन्थानम् । आदेशय = निर्दिश । अग्रतो भवेति यावत् । एत्वेत्विति । मत्पृष्ठतो भवानायातु, मार्गमहमादेशयामीत्यर्थः । सम्भ्रमे द्वित्वम् । उभौ = उदयनविदूषकौ । परिक्रामतः = किञ्चित्पदान्तरं गच्छतः ।

समुद्रगृहकं प्राप्य विदूषकः प्राह—इदमिति । प्रविशतु = अन्तर्यातु । पूर्वम् = आदौ । प्रविश = त्वमेवान्तः प्रविश । 'भो' इति स्वीकारे । तथा—अहमेवादौ प्रविशामि । अविहेति खेदे देशी [ अविहा = अरे बप्पारे ] ।

---

१ क्वचिन्न ।

**राजा**—किमर्थम् ? ।

**विदूषकः**—एसो खु दीवप्पभावसूइदरूवो वसुधातले परिवत्तमाणो अअं काओदरो ! ।

[ एष खलु दीपप्रभावसूचितरूपो वसुधातले परिवर्तमानोऽयं काकोदरः ] ।

**राजा**—[प्रविश्यावलोक्य सस्मितम् ] अहो ! सर्पावगतिर्वैधेयस्य[1] ।

**ऋज्वायतां हि मुखतोरणलोलमालां**
**भ्रष्टां क्षितौ त्वमवगच्छसि मूर्ख ! सर्पम् ।**

---

अभिनवराजलक्ष्मीः

तिष्ठतु–तिष्ठत्विति सम्भ्रमे द्विरुक्तिः। तावदिति—अवधारणे । किमर्थं = कुतोऽहं बहिरेव तिष्ठामि ?, तव खेदस्य च किं प्रयोजनमित्यर्थः । दीपस्य प्रभावेण—सामर्थ्येन—सूचितं = प्रकटितं—रूपं = स्वरूपं यस्यासौ तथा = दीपप्रकाशदृश्यमानशरीरः । वसुधातले = भूतले । परिवर्त्तमानः = परिस्फुरन्, कुण्डलनां बद्ध्वा स्थित इति वा । काकोदरः = भुजङ्गः । 'कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी'त्यमरः । इह समुद्रगृहके सर्पस्तिष्ठति तद्बहिरेव तिष्ठतु भवानित्याशयः । प्रविश्य = समुद्रगृहकं प्रविश्य । अवलोक्य = सर्पतया विभाव्यमानं वस्तु दृष्ट्वा । सस्मितं = किञ्चिद्विहस्येत्थमाहेत्यर्थः । अहो इत्याश्चर्ये । 'सर्पावगति'रिति गौडाः पठन्ति । अवगतिः = निश्चयः । 'असर्पेऽपी'त्यादिः । मुद्रितपाठे तु–सर्पव्यक्तिः=सर्पतया प्रतिभासः, सर्पभ्रान्तिरिति यावत् । वैधेयस्य = मूर्खस्य । तस्य मूर्खतामेव प्रकटयति—ऋज्विति ।

( अन्वयः ) हे मूर्ख ! हि त्वम् ऋज्वायतां क्षितौ भ्रष्टां मुखतोरणलोल-

---

१ 'सर्पव्यक्ति'रिति तु मुद्रितः पाठः ।

**मन्दानिलेन निशि या परिवर्तमाना**
**किञ्चित्करोति भुजगस्य विचेष्टितानि ॥३॥**

**विदूषकः—( निरूप्य- )** सुट्ठु भवं भणादि। ण हु अअं काओदरो। **( प्रविश्यावलोक्य- )** तत्तहोदी पदुमावदी इह आअच्छिअ णिग्गदा भवे।

---

अभिनवराजलक्ष्मीः

मालां सर्पमवगच्छसि। या निशि मन्दानिलेन परिवर्त्तमाना भुजगस्य विचेष्टितानि किञ्चित् करोति ॥ ३ ॥

( अर्थः ) मूर्ख = हे मूढ ! । हि = निश्चयेन । त्वं = विदूषकः । ऋज्वी सरला चासावायता = दीर्घा च—ऋज्वायता, तां ऋज्वायतां=सरलां दीर्घाञ्च । क्षितौ = भूमौ । भ्रष्टां = निपतिताम् । मुखतोरणे–मुख्यबहिर्द्वारे लोला-चञ्चला या माला सा–मुखतोरणलोलमाला, तां–मुखतोरणलोलमालां = समुद्रगृहक-प्रधानद्वारबद्धां चञ्चलां स्रजम् । सर्पं = काकोदरम् । अवगच्छसि = निश्चि-नोषि, जानासि । या=या तोरणमाला । निशि = रात्रौ । मन्दानिलेन=मन्द-समीरणेन । परिवर्त्तमाना = परिस्फुरन्ती, भूमौ लुठन्तीति वा । भुजगस्य = सर्पस्य । विचेष्टितानि = विलसितानि,—वक्रगमनादीनि । किञ्चित्=किञ्चि-दिव । स्वल्पम् । करोति=विधत्ते । एवञ्च-समुद्रगृहकबहिर्द्वारे बद्धां लम्बमानां पुष्पस्रजं बन्धशैथिल्याद्भूमौ निपतितां मन्दमारुतेन किञ्चिदिव सर्पवत्कु-टिलं परिसर्पन्तीं सर्पोऽयमित्यवगच्छति भवान् । सरलतया दैर्घ्येण मन्दानिला-न्दोलनेन भूमौ परिसर्पणेन च मालादामनि सर्पभ्रान्तिस्तवेत्याशयः । 'तोरणोऽस्त्री बहिर्द्वार'मित्यमरः । भ्रान्तापह्नुतिरलङ्कारः । वसन्ततिलकं वृत्तम् ॥ ३ ॥

निरूप्य = नितरामवलोक्य । [ अच्छी तरह देखकर ] । सुट्ठु =

[ ( निरूप्य )—सुष्ठु भवान् भणति । न खल्वयं काकोदरः । ( प्रविश्यावलोक्य—) तत्रभवती पद्मावतीहागत्य निर्गता भवेत् ] ।

**राजा—**वयस्य ! अनागतया भवितव्यम् ।

**विदूषकः—**कहं भवं जाणादि ?

[ कथं भवाञ्जानाति ? ] ।

**राजा —**किमत्र ज्ञेयम् । पश्य,—

**शय्या नाऽवनता, तथाऽऽस्तृतसमा, न व्याकुलप्रच्छदा,**
**न क्लिष्टं हि शिरोपधानममलं शीर्षाऽभिघातौषधैः ॥**

अभिनवराजलक्ष्मीः

शोभनं, सत्यम् । अयं = भूमौ निपतितः । न खलु = नैव । काकोदरः = सर्पः । प्रविश्य=समुद्रगृहकाऽन्तर्गत्वा । अवलोक्य=इतस्ततो विभाव्य च । इह = समुद्रगृहके । आगत्य = समेत्यापि । निर्गता = पुनः प्रतिनिवृत्य गता भवेत् । 'इति तर्कयामी' ति शेषः ।

राजा तन्निषेधति—**वयस्येति** । अनागतया = अप्रविष्टयैव । न सा आगत्य प्रतिनिवृत्ता, किन्तु नैवागतेत्येव मे निश्चय इत्यर्थः । कथं = केन प्रकारेण । जानाति = नैवागतेत्यवधारयति । अत्र = अस्मिन्विषये । ज्ञेयम् = विचारणीयम्, अनुमेयम् । स्पष्टत एव तथा प्रतीतेर्नात्र विचारस्यावश्यकतेत्यर्थः ।

ननु कथं भवता तथाऽवगतमत आह—**पश्येति** । विभावयेत्यर्थ : । **शय्येति** ।

[ अन्वयः ] शय्या अवनता न । विषमाऽपि न च । तथा आस्तृतसमा । व्याकुलप्रच्छदा न । अमलं शिरोपधानं शीर्षाभिघातौषधैः क्लिष्टं न हि । रोगे दृष्टिविलोभनं जनयितुं काचित् शोभा न कृता । प्राणी रुजा शयनं प्राप्य स्वयं शीघ्रं पुनः न मुञ्चति ।

१ तथाऽऽस्तृतसमे' ति मुद्रितः पाठस्तु न शोभनोऽयुक्तश्चेति गौडाः—'नचापि विषमे'त्येवं शोधयन्ति ।

अभिनवराजलक्ष्मीः

[अर्थः] हि = यतः । शय्या = तल्पम् । नावनता = नैव किञ्चिदपि निम्नतां गता । शय्योपरि हि कस्याश्चिदुपवेशने शयने वा तदीयदेहभारेण मध्ये प्रान्तयोर्वा किञ्चिदिव शय्याऽवनता भवति, इयं शय्या तु मनागपि नावनतेत्यर्थः । अतोऽस्यां न काप्युपविष्टेति स्पष्टं प्रतीयत एवेत्यर्थः ।

"तथाऽऽस्तृतसमा=यथा पूर्वम् आस्तृता तथैव समा, नतु किञ्चिदिव म्लानिमागतेत्यर्थः । यद्वा—आस्तृते = आस्तरणीभूते तूलिकावटिते पटे [ 'गद्दा' ] । समैव = न विषमेत्यर्थः । इति केचित् ।

गौडास्तु—'**न चाऽपि विषमे**'ति पठन्तः—

"ननु पार्श्वतः शयनेन शय्याया मध्येऽवनतिर्नैव जातेत्यत आह-नचेति । न चापि=न खलु । विषमा = कस्मिंश्चिदपि प्रदेशे वैषम्यमातेत्यर्थः । पार्श्वतः शयने हि—शय्यायाः कस्मिंश्चिदपि प्रदेशे ( दक्षिणे, वामे वा भागे ) वैषम्यं जायतएव, परमस्यां शय्यायान्तु नाल्पीयोऽपि वैषम्यं दृश्यतेऽतो नैवाऽस्यां काचिदपि सुप्तेति स्पष्टं प्रतीयते इत्याशयः । मुद्रितः—तथास्तृतसमे'ति पाठस्तु भ्रष्ट एवे'ति च प्राहुः ।

ननु प्रकृत्यैव तन्वङ्ग्याः—शिरोऽर्त्तिखेदसन्तापपरिपीडितदेहायाः शयनेऽपि भाराऽभावाच्छयनीयस्याऽनिम्नता, अवैषम्यञ्च युक्तमेवेति कथमेतद्भवता ज्ञातं—'सा नायाते'ति—इत्याशङ्क्याह—**नेति** । व्याकुलं —प्रच्छदम् = आस्तरणवस्त्रं यस्याः सा—व्याकुलप्रच्छदा = सङ्कुचितप्रच्छदपटा, न = नैव । शिरोऽर्त्तिखेदखिन्नायाः पद्मावत्याः शयने तु मुहुरङ्गपरिवर्त्तनविलुंठनपरिस्फुरणादिभिरतिसूक्ष्मस्य प्रच्छदपटस्य सङ्कोचोऽवश्यं भवेत् , न चाऽस्यां प्रच्छदपटस्य [ 'चादर' 'खोली' इति प्रसिद्धस्य ] सङ्कोचोऽल्पोऽपि दृश्यतेऽतो नात्र पद्मावती सुप्तेति स्पष्टं विभाव्यत इत्याशयः ।

ननु शय्यामाश्रित्य सा शिरोव्यथया मूर्च्छितैव सती कञ्चित्कालं सुप्तेति किं न स्यादत आह—**न क्लिष्टमिति** । अमलं = निर्मलं शुभ्रम् । शिरस अपधानं—शिरोऽपधानं = मस्तकोपधानम् । [ अपधान = तकिया ] यद्वा—

**रोगे दृष्टिविलोभनं जनयितुं शोभा न काचित्कृता,**
**प्राणी प्राप्य रुजां[१] पुनर्न शयनं शीघ्रं स्वयं मुञ्चति ॥**

अभिनवराजलक्ष्मीः

'शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथे'ति द्विरूपकोशात् शिरश्शब्दो, ऽदन्तोऽप्यस्तीति—शिरस्य उपधानम् = उपबर्हः—शिरोपधानमिति विग्रहो बोध्यः। अर्थस्तु पूर्ववदेव। शीर्षस्याभिघातः—पीडा, तस्यौषधैः—शीर्षाभिघातौषधैः = शिरोऽर्त्तिशमनौपयिकभेषजैः। न क्लिष्टं = न दूषितं। न वा मलिनम्।

ननु पद्मावत्याः शिरोव्यथया सुप्ताया निद्राभङ्गभिया सखीजनेन शीर्षाऽभिघातौषधानि न प्रयुक्तानीति-कथं निश्चीयतेभवता यत्सा नात्रागतेत्यत आह-रोगे इति। रोगे-शिरोव्यथायां जातायाम्। दृष्टेर्विलोभनं–दृष्टिविलोभनं = नयनरञ्जनं। रोगार्त्तजनमनोरञ्जनमिति यावत्। जनयितुं = विधातुम्। काचित्=कापि। शोभा=क्रीडाकौतुकादिरचनादिकम्। न कृता=नैव रचिता। 'दृश्यते' इति शेषः। रोगार्त्तजनमनो विनोदाय क्रीडाकौतुकचित्रलेखनादिकं [ 'चित्र रचना' 'ताश चौपड़ खेलना' आदि ] परिचारकवर्गेण क्रियते इति लौकिकाचारः।

ननु तस्या बलवदस्वास्थ्यं वीक्ष्य सखीजनेन तथा नाचरितमत आह—प्राणीति। प्राणी=जीवमात्रं। किम्पुनः। कोमलस्वभावः स्त्रीजनः। रुजा=रोगेण। शयनं=शय्यां, शयनीयम्। प्राप्य=आसाद्य। 'त'दिति शेषः। शीघ्रं=झटिति। स्वयम्=आत्मना। पुनर्न मुञ्चति = नैव परित्यजति। एवञ्च साऽत्र नैवायातेत्येव स्पष्टमवगम्यते इत्याशयः। शार्दूलविक्रीडितम्। [ एतावता गर्भसन्धेरनुमानं नामाङ्गं प्रदर्शितम्। 'लिङ्गादूहोऽनुमानते'त्युक्तेः ) ॥ ४ ॥

१ 'रुजा'मिति गौडाः पठन्ति। तत्र रुजां प्राप्य शयनं न मुञ्चतीत्यन्वयः।

**विदूषकः**—तेण हि इमस्सिं सय्याए मुहुत्तअं उवविसिअ तत्तहोदिं पडिवालेदु भवं।

[ तेन ह्यस्यां शय्यायां मुहूर्तकमुपविश्य तत्रभवतीं प्रतिपालयतु भवान्। ]

**राजा**—बाढम्। ( **उपविश्य**– ) वयस्य! निद्रा मां बाधते, कथ्यतां काचित् कथा।

**विदूषकः**—[1]अहं कहइस्सं। हुन्ति करदु अत्तभवं।

[ अहं कथयिष्यामि, हुङ्कृतिं [ 'हों' इति वा ] करोत्वत्रभवान्। ]

**राजा**—बाढम्।

**विदूषकः**—अत्थि णअरी उज्जइणी णाम। तहिं अहिअरमणीआणि उदअह्लाणाणि वत्तन्ति किल।

---

अभिनवराजलक्ष्मीः

तेन हि=यदि सा नायाता तर्हि। अस्यां=पद्मावत्यर्थमास्तीर्णायाम्। शय्यायां=शयनीये। मुहूर्तमेव–मुहूर्तकं=क्षणमात्रम्। उपविश्य=स्थित्वा। प्रतिपाल्यतु=प्रतीक्षतां भवान्। सा शीघ्रमेवायास्यतीति मन्ये इति भावः। बाढं=युक्तमुक्तं भवता। तथैव करोमीत्याशयः। उपविश्य=क्षणं शयनीये स्थित्वा। वयस्य=सखे वसन्तक! बाधते=पीडयति। निद्रातुरोऽहमित्याशयः। 'तदपनोदनाये'ति शेषः। कथा=उपाख्यानम्। ( किस्सा )। अहं=विदूषकोऽहम्। 'हों' इति अभ्युपगमार्थमव्ययम्। यद्वा—अभ्युपगमसावधानतादिसूचकध्वनिविशेषानुकरणमेतत्। ( हों= हुङ्कारा भरना ]'हुङ्कृतिमिति यावत्। क्वचित्तथैव पाठः। बाढं=युक्तम्।

---

१ 'अहं कहइस्सं'मिति गौडाः। अथ कथयिष्यामीतितच्छाया।

[ अस्ति नगर्युज्जयिनी नाम, तत्राऽधिकरमणीयान्युदक स्नानानि[1] वर्त्तन्ते किल ]।

**राजा**—कथमुज्जयिनी नाम !।

**विदूषकः**—जइ अणभिप्पेदा एसा कहा, अण्णं कहइस्सं ।

[ यद्यनभिप्रेतैषा कथा, अन्यां कथयिष्यामि ]।

**राजा**—वयस्य ! न खलु नाभिप्रेतैषा कथा । किन्तु,—

---

अभिनवराजलक्ष्मीः

[ ठीक है ]। नगरी = पुरी । नामेति प्रसिद्धार्थको निपातः ।

तत्र = उज्जयिन्याम् । अधिकरमणीयानि = अतिमनोज्ञानि । उदकेषु स्नानानि—उदकस्नानानि = जलस्नानानि । स्नानयोग्याः सलिलाशया इत्येवं वक्तव्येऽन्यथोक्तिर्विदूषकस्योपहासाऽनुगुणेति ध्येयम् । [ 'उदअत्थाणाणी'ति पठित्वा 'उदकस्थानानि'त्येवमर्थमन्ये मन्यन्ते, तन्न युक्तमुपहासपरत्वक्षतेः ]। वर्त्तन्ते = सन्ति ।

**कथमिति** । दिष्ट्या कथमेष मत्प्रियाया वासवदत्ताया जन्मभुवमुज्जयिनीमेव प्रकृत्य कथामारभते इत्यर्थः ।

राज्ञोऽभिप्रायमबुद्ध्वा—विदूषकः पृच्छति—यदीति । अनभिप्रेता = उज्जयिनीमधिकृत्य कथ्यमाना कथा यदि भवते न रोचते इत्यर्थः। अन्याम् = अपरां कथाम् । न खलु नाभिप्रेता = बाढमभिप्रेतैव । नञ्द्वयं प्रकृतार्थदार्ढ्यं बोधयति । किन्तु = किन्तर्हि । स्मरामीति श्लोकस्थेन सम्बन्धो बोध्यः ।

---

१ 'उदअत्थाणाणी'ति पठित्वा—उदकस्थानानीतिच्छायामन्ये मन्यन्ते । तन्न युक्तमुपहासाऽनुगुणत्वाभावात् ।

**स्मराम्यवन्त्या[१]ऽऽधिपतेः सुतायाः**
**प्रस्थानकाले स्वजनं स्मरन्त्याः ।**
**बाष्पं प्रवृद्धं नयनान्तलग्नं**
**स्नेहान्ममैवोरसि पातयन्त्याः ॥५॥**

अभिनवराजलक्ष्मीः

[ अन्वयः ] प्रस्थानकाले स्वजनं स्मरन्त्याः स्नेहात्प्रवृत्तं नयनान्तलग्नं बाष्पं ममैव उरसि पातयन्त्याः अवन्त्याधिपतेः सुतायाः स्मरामि ।

[ अर्थः ] प्रस्थानकाले = गुरुजनानुज्ञां विनैव उज्जयिनीं विहाय मया सह कौशाम्बीं प्रति गमनवेलायाम् । स्वजनं = परित्यज्यमानं मातापित्रादिकं, स्वबन्धुबान्धववर्गञ्च । स्मरन्त्याः = विचिन्तयन्त्याः, ( स्मरन्तीमिति यावत् ) स्नेहात् = आत्मीयजनानुरागात् । प्रवृत्तम् = उद्गतम् । अत एव—नयनयोरन्ते = प्रान्तदेशे, लग्नं = संसक्तं—नयनान्तलग्नं = लोचनप्रान्तभागसंसक्तं, पतनोन्मुखमिति यावत् । बाष्पम् = अश्रुप्रवाहम् । दृढमाश्लिष्टतया, काममहं पितरौ भ्रातृवर्गञ्च जह्यां न तु प्रियं त्वामिति सूचनाय वा । ममैव = मदीये एव, उरसि = वक्षसि । पातयन्त्याः = विसृजन्त्याः । (विसृजन्तीमिति यावत् ) । अवन्त्या आ समन्तादधिपतिः = अवन्त्याधिपतिः, तस्य—अवन्त्याधिपतेः = मालवराजस्य प्रद्योतस्य । सुतायाः = दुहितुर्वासवदत्तायाः । ( वासवदत्तामिति यावत् ) । स्मरामि = चिन्तयामि । उज्जयिनीकथां श्रुत्वा वासवदत्तां स्मरामीत्यर्थः । अत्र 'अधीगर्थे'ति कर्मणः शेषत्वविवक्षायां सर्वत्र षष्ठी ।

त्वयोज्जयिनीमधिकृत्य कथां कथयति सति उज्जयिन्यामनुभूतानि वासवदत्ताया अनुरागसूचकानि तानि तानि विलसितानि स्मृत्वा व्यथामुपगच्छामीत्यास्तां तस्याः कथेत्याशयः । उपजातिवृत्तम् ॥ ५ ॥

१ केचित्तु—अवन्तिषु साधुः—अवन्त्यः, स चासावधिपतिश्चेति विगृह्णन्ति ।

अपि च,–

**बहुशोऽप्युपदेशेषु यया मामीक्षमाणया ।**
**हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥६॥**

**विदूषकः**—भोदु, अण्णं कहइस्सं । अत्थि णअरं ब्रह्मदत्तं णाम, तहिं किल राआ कपिल्लो णाम ।

[ भवतु, अन्यां कथयिष्यामि । अस्ति नगरं ब्रह्मदत्तं नाम, तत्र किल राजा काम्पिल्यो नाम ] ।

अभिनवराजलक्ष्मीः

अपि च = किञ्च । **बहुश इति** ।

[ अन्वयः ] मामीक्षमाणया यया उपदेशेष्वपि बहुशः स्रस्तकोणेन-हस्तेन आकाशवादितं कृतं—[ तस्याः स्मरामि ] ।

[ अर्थः ] माम् = स्ववीणावादनोपाध्यायं मामुदयनम् । ईक्षमाणया = कामपीडितया साभिलाषं साकूतञ्च प्रेक्षमाणया । यया = अवन्तिराजपुत्र्या वासवदत्तया । उपदेशेष्वपि=वीणादिवादनशिक्षाप्रदानावसरेष्वपि । बहुशः = अनेकवारं । मुहुर्मुहुरपि । स्रस्तः कोणो यस्मात् असौ–स्रस्तकोणः, तेन—स्रस्तकोणेन=मदवलोकनव्याक्षिप्तचित्ततया वृथा निपतितवीणावादनसाधनेन । 'कोणो वीणादिवादन' मित्यमरः । [ 'अगुस्तानां' 'तारकी बनी अंगूठी' ] हस्तेन = स्वकीयदक्षिणहस्तेन ।

आकाशवादितं = व्यर्थमेव वादनार्थमङ्गुलिप्रचारणम् । कृतं = विहितम् । 'तस्या वासवदत्तायाः उज्जयिनीनामधेयं श्रुत्वा स्मरामी' त्येवं पूर्वेण सह सम्बन्धो बोध्यः । मदवलोकनरसावेशविस्मृतान्यकार्यया, मदैकतानया, हस्तच्युतवीणावादनयन्त्रयाऽपि तदनवगच्छन्त्या वृथैव

१ आकाशवादितं=धनुराकृतिवीणावादनयन्त्रविशेषशून्यहस्ततया निरर्थको वीणावादनप्रयासः कृत इत्यर्थः । मयि निहितलोचनया वीणामपश्यन्त्या-च्युतहस्तेन वीणातोऽन्यत्रापि वादनक्रिया भ्रमात्कृता इति वार्थः ।

**राजा**—किमिति ? किमिति ?।

**(विदूषकः—पुनस्तदेव पठति)।**

**राजा**—मूर्ख ! **'राजा ब्रह्मदत्तः, नगरं काम्पिल्य'** मित्यभिधीयताम्।

**विदूषकः**—किं राआ बह्मदत्तो, ? णअरं कपिल्लं ? ।

[ किं राजा ब्रह्मदत्तः ? नगरं काम्पिल्यम् ? ]।

**राजा**—एवमेतत्।

**विदूषकः**—तेण हि मुहुत्तअं पडिवालेदु भवं, जाव ओट्ठगअं करिस्सं। **'राआ बह्मदत्तो, णअरं कंपिल्लं'** । **(-इति बहुशस्तदेव पठित्वा-)** इदाणिं सुणादु भवं। अयि सुत्तो अत्तभवं। आदसीदला इअ वेला। अत्तणो पावरअं गेह्निअ आअमिस्सं।

**( निष्क्रान्तः )।**

---

अभिनवराजलक्ष्मीः

वादनार्थं हस्तचालनेन ( वादनयन्त्राभावाद्वीणावादनाऽसम्भवेऽपि ) वृथावादनप्रयासो यया विहितस्तां स्मरामीत्यर्थः ॥ ६ ॥

भवतु = अस्तु। अन्याम् = अपराङ्कथाम्। तत्र = ब्रह्मदत्ते नगरे। अत्र काम्पिल्य मिति नगरनामधेयं, 'ब्रह्मदत्त'इति राजनामधेयमन्या निर्दिशति विदूषक उपहासानुगुण्येनैवेति तत्त्वम्। किमिति = किं ब्रूषे। [ किमिति किमिति = क्या कहा ! क्या कहा ! ] तदेव='अस्ति नगरं ब्रह्मदत्तं, तत्र किल राजा काम्पिल्यो नामे'ति पूर्वं पठितमेव पुनः पठति।

इति = इत्थम्। अभिधीयतां = कथ्यतान्त्वया। किं = किमेवं वर्त्तते ? यद्। [ क्या ऐसे है कि- ]। एवमेतत्=आम्। एवमेव तत्। [ हां यह

---

१ कम्पिल्लं—सम्प्रति 'कासगंज-एटा' प्रान्ते कंपिलनाम्ना वर्त्तते।

[ तेन हि मुहूर्तकं प्रतिपालयतु भवान्, यावदोष्ठगतं करिष्यामि। 'राजा ब्रह्मदत्तः, नगरं काम्पिल्यम्' (—इति बहुशस्तदेव पठित्वा—) इदानीं शृणोतु भवान्। ( विलोक्य— ) अयि! सुप्तोऽत्रभवान्। अतिशीतलेयं वेला। आत्मनः प्रावारकं गृहीत्वाऽऽगमिष्यामि ]।

**( निष्क्रान्तः )।**

**(ततः प्रविशति वासवदत्ताऽऽवन्तिकावेषेण, चेटी च)।**

**चेटी**—एदु—एदु अय्या। दिढं खु भट्टिदारिआ सीसवेदणाए दुक्खाविदा।

[ एत्वेत्वार्या। दृढं खलु भर्तृदारिका शीर्षवेदनया दुःखिता ]।

---

अभिनवराजलक्ष्मीः

ऐसे ही है ]। तेन = यद्येवं तर्हि। मुहूर्तकं = क्षणमात्रम्। प्रतिपालयतु = प्रतीक्षतां भवान्। [ थोड़ी देर ठहरें ] [ यावत् = जबतक ]। ओष्ठगतं = कण्ठस्थं, मुखस्थमिति यावत्। विदूषको रङ्गे एव घोषति तावत्—राजेति।

तदेव = पूर्वोक्तमेव। राजोक्तप्रकारेण ओष्ठगतं कृत्वा पुनराह—इदानीमिति। हुङ्कृतिमश्रुत्वा विलोक्य प्राह—अयीति। अयि = अहो। यद्वा खेदेऽत्र अयिशब्दः। अतिशीतला = शीतबहुला। वेला = समयः। प्रवार एव प्रावारकस्तं—प्रावारकं = तूलघटितमुत्तरीयमावरणावस्त्रम्। [ 'रजाई' 'लिहाफ' 'सोड' ]। 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथे'त्यमरः।

ततः = विदूषकनिर्गमनान्तरं। आवन्तिकावेषेण = आवन्तिकावेषधारिणी वासवदत्ता प्रविशतीत्यन्वयः। चेटी = पद्मिनिकाख्या ( मधुरिकाख्या वा ) पद्मावतीपरिचारिका। 'प्रविशती'ति पूर्वेण सम्बन्धः।

आर्या = वासवदत्ता। एतु = आगच्छतु त्वरितम्। दृढम् = अत्यन्तम्।

**वासवदत्ता**—हद्धि । कहिं सअणीणं रइदं पदुमावदीए ?
[ हा धिक् ! । कुत्र शयनीयं रचितं पद्मावत्याः ? ] ।

**चेटी**—समुद्दगिहके किल सेज्जा त्थिण्णा ।
[ समुद्रगृहके किल शय्याऽऽस्तीर्णा ] ।

**वासवदत्ता**—तेण हि अग्गदो याहि । [ तेन हि—अग्रतो याहि ] ।

**( उभे परिक्रामतः ) ।**

**चेटी**—इदं समुद्दगिहकं, पविसदु अय्या । जाव अहं वि सीसाणुळेवणं तुवरेमि । **( निष्क्रान्ता ) ।**

[ इदं समुद्रगृहकम् । प्रविशत्वार्या । यावदहमपि शीर्षानुलेपनं त्वरयामि (**—निष्क्रान्ता** ) ।

**वासवदत्ता**—अहो ! अकरुणा खु इस्सरा मे । विरहपय्युस्सुअस्स अय्यउत्तस्स विस्समत्थाणभूदा इअं पि णाम पदुमावदी

---

अभिनवराजलक्ष्मीः

दुःखिता=पीडिता, व्याकुला च । पद्मावतीशिरोवेदनां श्रुत्वा दुःखं प्रकटयन्ती प्राह—हेति । धिक् = पद्मावत्यस्वास्थ्यवार्त्तया अत्यन्तं दुःखमापन्नास्मि । रचितं = विस्तीर्णम् । आस्तीर्णा = विरचिता [ पलङ्ग बिछाया है ] । अग्रतो गच्छ = मार्गं दर्शयितुमग्रतो मे प्रयाहीत्यर्थः ।

परिक्रामतः=किञ्चिच्चलनं नाटयतः । प्रविशतु=अन्तर्गच्छतु । शीर्षानुलेपनं=मस्तकपीडोपशमनं भेषजम् । त्वरां करोमि—त्वरयामि=शीघ्रमानयामि ।

प्रविशन्त्येव वासवदत्ता चिन्तयति—अहो इति । अहो इति विषादे । मे = मम । ईश्वराः = मद्भाग्यदेवताः । अकरुणाः = मयि निष्कृपाः । मन्ये ममोपरि कुपिता एव भाग्यदेवता इत्यर्थः ।

अस्सत्था जादा । जाव पविसामि । ( **प्रविश्यावलोक्य-** ) अहो ! परिजणस्स पमादो !, अस्सत्थं पदुमावदिं केवलं दीवसहाअं करिअ परित्तजदि !! । इअं पदुमावदी ओसुत्ता । जाव उवविसामि ।

अहवा अण्णासणपरिग्गहेण अप्पो विअ सिणेहो पडिभादि, ता इमस्सिं सय्याए उपविसामि । ( **-उपविश्य** ) किंणु खु एदाए सह उवविसन्तीए अज्ज पहलादिदं विअ मे हिअअं ? । दिं-ट्ठिआ अविच्छिण्णसुहणिस्सासा । णिव्वुत्तरोआए होदव्वं ।

अहवा—एअदेससंविभाअदाए सअणीसस्स सुएदि—'मं आलिंगेहि'त्ति । जाव सइस्सं । ( **-शयनं नाटयति** ) ] ।

[ अहो ! अकरुणाः खल्वीश्वरा मे । विरहपर्युत्सुकस्याऽऽर्यपुत्रस्य विश्रामस्थानभूतेयमपि नाम पद्मावती—अस्वस्था जाता । यावत् प्रविशामि ।

( प्रविश्यावलोक्य- ) अहो ! परिजनस्य प्रमादः, अस्वस्थां पद्मावतीं केवलं दीपसहायां कृत्वा परित्यजति !! । इयं पद्मावत्यवसुप्ता ।

---

अभिनवराजलक्ष्मीः

कुत एतदत आह-विरहेति । विरहेण-मद्विरहेण । पर्युत्सुकस्य = उत्कण्ठितचेतसः । आर्यपुत्रस्य = उदयनस्य । विश्रामस्थानभूता = विरह-व्यथापीडितमनोविनोदनसाधनीभूता । अस्वस्था=शिरोव्यथया पीडिता, रोगा-र्त्तेति यावत् । यावत्प्रविशामि = प्रविशाम्येव खलु । शय्यायां सुप्तमुदयनं 'पद्मावतीय'मिति विभावयन्ती वासवदत्ता तावदाह—परिजनस्येति । परि-चारकवर्गस्य । प्रमादः = अनवधानता । अस्वस्थां = रुग्णाम् । दीपसहायां= दीपमात्रपरिजनाम् । असहायामिति यावत् । अमङ्गलपरिहाराय तु 'असहा-या'मिति नोक्तम् । रुग्णस्याऽसहायतयाऽवस्थापनमयुक्तमेवेत्याशयः ।

यावदुपविशामि। अथवा-अन्यासनपरिग्रहेण अल्प इव स्नेहः प्रतिभाति, तदस्यां शय्यायामुपविशामि।

( उपविश्य- ) किंनु खल्वेतया सह उपविशन्त्या अद्य प्रह्लादितमिव मे हृदयम्?। दिष्ट्या—अविच्छिन्नसुखनिःश्वासा। निवृत्तरोगया भवितव्यम्।

अथवा—एकदेशसंविभागतया शयनीयस्य सूचयति—'मामालिङ्ग'ेति। यावच्छयिष्ये। ( **–शयनं नाटयति** ) ]।

---

अभिनवराजलक्ष्मीः

अवसुप्ता = निद्रापरवशा। उपविशामि = अधोदेशे कल्पिते आसने तिष्ठामि। अन्यासनपरिग्रहेण = आसनान्तरोपनिवेशेन। अल्प इव=न्यून इव। स्नेहः= अनुरागः। प्रतिभाति = बहिः प्रकटीभवति। नास्याः पद्मावत्यां वास्तवोऽनुराग इति प्रतीयते इत्याशयः। अस्यां = पद्मावत्याश्शय्यायामेव। एतया = पद्मावत्या। अद्य = सम्प्रति अभूतपूर्वमिव। प्रह्लादितमिव = प्रहृष्टमिव। हर्षोत्फुल्लमिवेति यावत्। सुप्तं राजानं पद्मावतीत्वेननिश्चिन्वती वासवदत्ता राज्ञोऽविच्छिन्नं सुखं यथा स्यात्तथा निस्सरन्तमुच्छ्वाससमीरणं विलोक्य आशास्ते—दिष्ट्येति। दिष्ट्या = आनन्दस्यावसरोऽयम्। दिष्ट्येति हर्षे। अविच्छिन्नः = अव्युच्छिन्नः, निरन्तरप्रवाहः। सुखः = अक्लेशनिर्गमप्रवेशः, शीतलो न तूष्णः निःश्वासो यस्याः सा–अविच्छिन्नसुखनिःश्वासा = स्वस्थजनवन्निःश्वासं मुञ्चमाना। ( ननु रोगवच्छिथिलदुःखनिःश्वासेयमित्यर्थः )। 'विभाव्यते' इति शेषः। निवृत्तो रोगो यस्याः सा = निवृत्तरोगा, तया—निवृत्तरोगया = व्यपगतशिरोवेदनया। सुखेन निःश्वासेन—स्वस्थेयमिति सम्भावयामीत्यर्थः।

अथवा = किञ्च। शयनीयस्य = शय्यायाः। एकदेशस्य संविभागो यस्याः सा, तस्या भावस्तत्त्वेन–एकदेशसंविभागतया = शय्यायां जनान्तरशयनार्हस्य

**राजा**–( **स्वप्नायते**– ) हा वासवदत्ते ! ।

**वासवदत्ता**—( **सहसोत्थाय**– ) हं अय्यउत्तो ! ण खु पदुमावदी । किंणु खु दिट्ठह्मि ? । महन्तो खु अय्य जोअन्धराअणस्स पडिण्णाहारो मम दंसणेण णिप्फलो संवुत्तो ।

[ हम् ! आर्यपुत्रो, न खलु पद्मावती । किन्तु खलु दृष्टाऽस्मि ? । महान् खल्वार्ययौगन्धरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः संवृत्तः ] ।

---

अभिनवराजलक्ष्मीः

एकदेशस्य यथावद्विभज्य रिक्तस्य स्थापिततया । सूचयति = इयं पद्मावती मां बोधयति ।

किन्तदित्यत आह—मामिति । मां = पद्मावतीम् । आलिङ्ग = आश्लिष्य, परिष्वजस्वेति यावत् । शय्यायाअर्द्धं भागं विहायाऽवशिष्टेऽर्द्धे पार्श्वपरिवर्त्तनेन सुप्तेयं पद्मावती, तन्नूनमस्या मनस्येवमासीत्,—यत्—'समागता वासवदत्ता मामलिङ्ग्य शेता'मिति । एवञ्चार्द्धे भागे सुप्ताया अस्या इदमेवाभिलषितमित्यवधारयामीत्याशयः । आलिङ्ग्य सुप्ता हर्षोत्फुल्लमानसा वासवदत्ता स्वगतं प्राह–यावदिति । यावदिति पक्षान्तरे । 'यावत्कात्स्न्येंऽवऽधारणे । प्रशंसायां परिच्छेदे मने पक्षान्तरेऽपि च । सम्भ्रमे चाऽधिकारे चे'ति मेदिनी । शयिष्ये = न केवलमालिङ्गनमेवाचरामि, किन्तर्हि आलिङ्ग्य स्वप्स्यामीत्यर्थः । यद्वा–सुप्ताया आलिङ्गनस्य सुप्तयैव यथावदाचरितुं शक्यतया—यथावदालिङ्गनायाहमपि स्वप्स्यामीत्युक्तिरित्यवधेयम् । नाटयति = अभिनीय दर्शयति पद्मावतीबुद्ध्या राज्ञः सविधे स्वपितीति यावत् ।

स्वप्नः = स्वप्नदृष्टो विषयः, तमाचष्टे—स्वप्नायते = स्वप्नदृष्टं कथयति । 'तत्करोति तदाचष्टे' इति णिच् । यद्वा—स्वप्नं पश्यति——स्वप्नायते = वासवदत्ताविषयकं स्वप्नं विलोकयति । 'प्रातिपदिकाद्धात्वर्थे' इतिणिच्, 'णिचश्चे'त्यात्मनेपदम् । यद्वा 'स्वप्न'शब्दो वृत्तिविषये तद्वति वर्त्तते, ततः

**राजा**—हा अवन्तिराजपुत्रि ! ।

**वासवदत्ता**—दिट्ठिआ सिविणाअदि खु अय्यउत्तो । ण एत्थ कोच्चि जणो । जाव मुहुत्तअं चिट्ठिअ दिट्ठिं हिअअं च तोसेमि ।

[ दिष्ट्या स्वप्नायते खल्वार्यपुत्रः । नाऽत्र कश्चिज्जनः । यावन्मुहूर्तकं स्थित्वा दृष्टिं हृदयञ्च तोषयामि ] ।

---

अभिनवराजलक्ष्मीः

'कर्तुः क्य'ङिति क्यङ् । स्वप्नः = स्वप्नवान्, तद्वदाचरति—स्वप्नायते, स्वप्नं पश्यन्नालपतीत्यर्थः । [ राजा सोता हुए बड़बड़ाता है ] ।

सहसेति । शब्दं श्रुत्वा 'आर्यपुत्रोऽयं न पद्मावती' त्येवं विज्ञाय सहसैव शयनीयादुत्थायाह वासवदत्ता—**हमिति** ! हमिति खेदे । न खलु = नैव ।

किं नु खलु = किं स्वित् ? । दृष्टा = प्रबुद्धेन आर्यपुत्रेण विलोकिताऽस्मि किं ?, यदयमार्यपुत्रः-'हा ? वासवदत्ते' इति भाषते, तत्किं मां दृष्ट्वैव भाषते इत्याशयः ।

स्वदर्शने च कार्यविनाशरूपमनिष्टन्तावदाह—**महानिति** । महान् = 'वासवदत्तां गूढं स्थापयित्वा पद्मावतीपरिणयेन मगधेश्वरसाहाय्यमासाद्य वत्सराज्यं पुनराहरिष्यामी'त्येवं साम्राज्यलाभादिविषयकतयाऽतिमहान् । प्रतिज्ञैव भारः——प्रतिज्ञाभारः = पद्मावतीपरिणय-साम्राज्यलाभादिप्रतिज्ञारूपो भारः । दर्शनेन = प्रत्यभिज्ञानेन । निष्फलः = निरर्थकः । संवृत्तः = जातः । पद्मावतीपरिणये जातेऽपि सामाज्यलाभरूपप्रधानांशस्याद्याप्यसिद्धेरित्याशयः ।

राजा पुनरपि स्वप्नायते—हेति । अवन्तिराजस्य = उदयनस्य । पुत्रि = दुहितः ! वासवदत्ते । दिष्ट्या=सौभाग्येन । स्वप्नायते=स्वप्नं पश्यन् भाषते । नाहमार्यपुत्रेण दृष्टाऽस्मि, किन्तु स्वप्नं पश्यन् किमपि किमप्याभाषते

**राजा**—हा प्रिये ! प्रियशिष्ये ! देहि मे प्रतिवचनम् ।

**वासवदत्ता**—आलवामि भट्टा ! आलवामि ।

[ आलपामि भर्तः ! आलपामि ]

**राजा**—किं कुपितासि ? ।

**वासवदत्ता**—णहि णहि, दुक्खिदह्मि ।

[ नहि नहि, दुःखिताऽस्मि ] ।

**राजा**—यद्यकुपिता, किमर्थं नालङ्कृतासि ? ।

---

अभिनवराजलक्ष्मीः

आर्यपुत्र इति न निष्फलो यौगन्धरायणस्य प्रतिज्ञाभार इत्याशयः । एतच्च भृशं तदाह्वानेन 'हा' शब्दोपादानेन चावगतमित्यवधेयम् ।

अत्र = समुद्रगृहके । जनः = परिचारकवर्गः । स्थित्वा = आसित्वा । आर्यपुत्रं प्रेक्षमाणा, 'स्वप्नायितं शृण्वती चे'ति शेषः । दर्शनेन दृष्टिं, श्रवणेन हृदयञ्चेति यथायथं योज्यम् । प्रतिवचनम् = उत्तरम् ।

वासवदत्ता उत्तरं ददाति—**आलपामीति** । उत्तरं ददामीत्यर्थः । भर्त्तः= हे स्वामिन् ! किं करणीयं ? कथयेत्यर्थः । 'आर्यपुत्रे'ति सम्बोधनन्तु वासवदत्तया न प्रयुक्तं स्वप्रत्यभिज्ञानभीतयैव । 'भर्त्त'इति—तु सकलपरिजनवर्गप्रयोज्यं सम्बोधनं स्वामिन्नित्यर्थकम् । वासवदत्तया प्रतिवचनं दीयमानमश्रुत्वैव स्वप्नायमान एव राजा पृच्छति—किमिति । क्रुद्धाऽसि किं, यन्मां नावभाषसे इत्यर्थः । प्रोषितभर्त्तृकावेषधारिणीं वासवदत्तां कुपितां सम्भावयत इयमुक्तिः । नहि नहि = नैव नैव । नैव कुपिताऽस्मीत्याशयः । किन्तर्हि नालपसीत्यत आह—दुःखितेति । भवद्विरहेण परिक्लिष्टाऽस्मीत्यर्थः । यदि = यदा । अकुपिता = मयि कोपं न धत्से । 'तर्हि'ति शेषः । किमर्थं = कुतो हेतोः । नालङ्कृतासि = न भूषणैर्मण्डिताऽसि ।

**वासवदत्ता**—इदो वरं किं ? ।

[ इतः परं किम् ? ] ।

**राजा**—किं विरचिकां[1] स्मरसि ? ।

**वासवदत्ता**—( **सरोषम्–** ) आ अवेहि, इहावि विरहिआ ।

[ ( सरोषम्– ) आ अपेहि ! इहाऽपि विरहिका[1] ? ] ।

**राजा**—तेन हि विरचिकार्थं भवतीं प्रसादयामि ।

( **हस्तौ प्रसारयति** )

**वासवदत्ता**—चिरं ठिदह्मि । को वि मं पेक्खे, ता गमिस्सं ।

---

अभिनवराजलक्ष्मीः

इतः परं = त्वद्विरहादधिकं, किं=किमत्र कारणमन्विष्यते आर्यपुत्रेण ? । त्वद्विरहेणैव दुःखिता सती भूषणैः परिहीनाऽस्मीत्याशयः । एवञ्च त्वद्विरहजं दुःखमेव मण्डनराहित्ये कारणमिति सूचितम् ।

वासवदत्तोक्तमुत्तरवाक्यमश्रुत्वैव पुनः स्वप्नायितेन राजा भाषते–**किमिति** । 'विरचिका' 'विरहिका' वा वासवदत्ताविरागभाजनं काचिदुदयनभोगिनी । किं तत्स्मरणेन क्रुद्धा सती मण्डनशून्याऽसीत्याशयः । विरचिकाया नाम श्रुत्वा वासवदत्ता क्रुद्धा सती–सरोषं = सकोपं तावदाह–**आ इति** । 'आ'इति रोषे, स्मरणे वा । अपेहि = दूरेऽपसर । [ चलो हटो ] । प्रणयकोपेनेयमुक्तिर्वासवदत्तायाः । इहापि = स्वप्नेऽपि, पद्मावतीभवनेऽपि वा । तेन हि = यदि विरचिकां स्मृत्वा कुपिताऽसि तर्हि । विरचिकार्थं = तदुपरिजातं कोपं दूराकर्त्तुम् । प्रसादयामि = अनुनयामि त्वाम् । [ विरचिका के लिए आपसे सप्रेम अनुरोध करता हुआ मैं उसके लिए क्षमा माँगता हूँ ] ।

इत्थमभिधाय वासवदत्तामनुनेतुं—हस्तौ प्रसारयति = दृढमालिङ्गितुं

---

१ 'विरहिका'मिति पाठान्तरम् । 'विरहिकार्थं'मिति क्वचित्पाठः ।

अह्वा सय्यावलम्बिअं अय्यउत्तस्स हत्थं सअणीए आरोविअ गमिस्सं।

( तथा कृत्वा निष्क्रान्ता )।

[ चिरं स्थिताऽस्मि । कोऽपि मां पश्येत् । तद्गमिष्यामि ।

अथवा,—शय्यावलम्बितमार्यपुत्रस्य हस्तं शयनीये आरोप्य गमिष्यामि । ( तथा कृत्वा निष्क्रान्ता ) ]।

**राजा—( सहसोत्थाय- )** वासवदत्ते ! तिष्ठ तिष्ठ ।

हा धिक्—

**निष्क्रामन् सम्भ्रमेणाहं द्वारपक्षेण ताडितः ।**
**ततो व्यक्तं न जानामि-भूतार्थोऽयं ?, मनोरथः ? ॥७॥**

---

अभिनवराजलक्ष्मीः

पाणी प्रसारयति । यद्वाऽञ्जलिबन्धनार्थं हस्तौ प्रसारयतीत्यर्थो बोध्यः तथा दृष्ट्वा वासवदत्ता तावच्चिन्तयति—चिरमिति । चिरं = बहुवेलम् । स्थिताऽस्मि = विजनेऽस्मिन्समुद्रगृहके भर्त्तुरन्तिके स्थिताऽस्मि । तत् = तस्मात् । अथवा = यद्वा । शय्यातः प्रलम्बितं—शय्याप्रलम्बितं = निद्रावशेन अनवहितस्य शयनीयादधोलम्बमानम् । शयनीये = मञ्चके । आरोप्य = संस्थाप्य । 'ततश्च शयनीये तद्धस्तं संस्थाप्य सा गते'त्यप्यवधेयम् ।

ततो निष्क्रान्तायां वासवदत्तायां लब्धसञ्ज्ञो—राजा 'सत्यं वासवदत्तयैव दत्तप्रतिवचनोऽस्मी'ति विभाव्य तां ग्रहीतुं सहसोत्थाय धावमान आह-तिष्ठेति । आकुलपादं धावमानो द्वारपक्षभागेन सन्ताडितोनिपतितः सन् दुःखं नाटयति—हा धिगिति । स्वप्रियाऽनुसरणस्य विघ्नितत्वादिह धिगित्युक्तम् । हा धिक् = हा कष्टम् । किन्तत्कष्टमत आह—निष्क्रामन्निति ।

अहम् = उदयनः । सम्भ्रमेण = 'किमियं सत्यमेव वासवदत्ता मां प्रतिभाषते, अन्यथा वे'ति विनिश्चेतुं सत्वरम् । निष्क्रामन् = समुद्रगृहकाद्बहिर्निस्सरन् । द्वारपक्षेण = द्वारपार्श्वकाष्ठेन । ताडितः = प्रतिहतोऽस्मि ।

( प्रविश्य )

**विदूषकः**—अयि ! पडिबुद्धो अत्तभवं ।

[ अयि ! प्रतिबुद्धोऽत्रभवान् ] ।

**राजा**—वयस्य ! प्रियमावेदये, धरते खलु वासवदत्ता ।

अभिनवराजलक्ष्मीः

सत्वरं प्रियामनुसरन् द्वारप्रदेशपार्श्वभागस्थितदारुखण्डेन प्रतिहतः सन् पतितोऽस्मीत्याशयः । ततः = तस्माद्धेतोः । यतोऽहं द्वारदण्डेनाहतः पतितोऽस्मि अत एव हेतोरिति यावत् । अयं = वासवदत्तासमागमः । भूतार्थः = किं सत्यः ? । 'युक्तं क्ष्मादावृते भूयं प्राण्यतीते समे त्रिषु' इत्यमरः । [ ऋते = सत्येऽर्थे ] ।

मनोरथः = किं वा मन्मनोरथमात्रकल्पितो रज्जौ सर्प इव भ्रम एवेति । व्यक्तं = स्पष्टम् । निस्सन्देहमिति यावत् । न जानामि=नावगच्छामि । यदि धावन्नहं तां हस्ते गृहीत्वा द्रष्टुं समर्थोऽभविष्यन्तदा तु स्पष्टं ज्ञातं स्यात्—'इयं वासवदत्ता, अन्या वे'ति । परन्तु द्वा[१]रदण्डाघातान्मध्ये एव निपतितोऽहम्, सा च पलाय्य मदग्रतो निर्गता, अतोऽहं तत्त्वतो नाधिगच्छामि—'सा सत्यं वासवदत्तैवासीत्, किं वा मम मनोरथमात्रविलास एव से'ति वाक्यार्थः ॥ ७ ॥

प्रविष्य=समुद्रगृहकं–प्रविश्य । विदूषकः—'इत्थमाहे'ति शेषः । अयीति हर्षे । प्रतिबुद्धः = विगतनिद्रः । प्रियं = हर्षजनकं वृत्तान्तम् । आवेदये = कथयामि । किन्तदित्यत आह—धरते इति । जीवतीत्यर्थः । नैव मृता

१ केचित्तु 'द्वारपक्ष'शब्देन कपाटमभिप्रयन्ति । कपाटन घट्टनन्तु—वासवदत्तया निर्गच्छन्त्या द्वारस्य पिधानादेवेत्येवं समर्थयन्ते । अत्रौचित्यहानिः परं भवतीति विद्वांसो विभावयन्तु ।

**विदूषकः**—अविहा[1] वासवदत्ता ! । कहिं वासवदत्ता ? । चिरा खु उवरदा वासवदत्ता ।

[ अविहा वासवदत्ता ! । कुत्र वासवदत्ता ? । चिरात् खलूपरता वासवदत्ता ! ] ।

**राजा**—वयस्य ! मा मैवं,—

**शय्यायामवसुप्तं मां बोधयित्वा सखे ! गता ।**
**'दग्धे'ति ब्रुवता पूर्वं वञ्चितोऽस्मि रुमण्वता ॥८॥**

**विदूषकः**—अविहा असंभावणीअं एदं ण[2] । आ उदअह्णाणसंकित्तणेण त्तत्तहोदिं चिन्तअन्तेण सा सिविणे दिट्ठा भवे ।

---

अभिनवराजलक्ष्मीः

सेति भावः । खल्विति निश्चये । अविहेति खेदे । हा धिक् वासवदत्ता, तां परिशोचामीत्यर्थः । कुत्र = क्व वर्त्तते ? । नैव साऽस्तीत्याशयः ।

चिरत् = बहोःकालात्पूर्वमेव । उपरता = मृता । मा मा एवम्=एवं मा वद । वासवदत्तोपरतेति मा वदेत्यर्थः । मा मेति निषेधे । सम्भ्रमे द्वित्वम् ।

'भूतार्थोऽयं मनोरथः' इति कोटिद्वयमध्ये प्रथमां कोटिं समर्थयते—शय्यायामिति । सखे = हे मित्र ! । शय्यायां = तल्पे । अवसुप्तं = गाढं प्रसुप्तम् । मां = वत्सराजं माम् । बोधयित्वा = हस्तस्पर्शादिना प्रबुद्धं कृत्वा । गता = प्रयाता । दग्धा='ग्रामदाहेन दग्धा' । इति=इत्थम् । ब्रुवता=मिथ्यैव कथयता । रुमण्वता = रुमण्वदाख्येन मन्त्रिणा । पूर्वं = पुरा लावाणके । वञ्चितः = प्रतारितोऽस्मि । एवञ्च सत्यमेव वासवदत्तयैव प्रतिबोधितोऽस्मि, नतु मनोरथमात्रकल्पितया वासवदत्तयेति भावः ॥८॥

---

१ 'आः वासवदत्ते'ति पाठान्तरम् । तत्र—आ इति पीडायाम् ।

२ अत्र 'मा दाणीं भवं अदिमत्तं सन्तप्पिदु' इत्यपि क्वचित्पाठः । तत्र-'मेदानीं भवानतिमात्रं सन्तप्यतु' इतिच्छाया ।

[ अविहा ! असम्भावनीयमेतन्न । आः ! उदकस्नानसङ्कीर्तनेन तत्र-भवतीं चिन्तयता सा स्वप्ने दृष्टा भवेत् ! ] ।

**राजा**—एवम् मया स्वप्नो दृष्टः ।

**यदि तावदयं स्वप्नो धन्यमप्रतिबोधनम् ।**
**अथायं विभ्रमो वा स्याद्विभ्रमोऽप्यस्तु मे चिरम् ॥९॥**

---

अभिनवराजलक्ष्मीः

अविहेति—खेदे । असम्भावनीयम् = अशक्यसम्भावनम् । एतत् = वासवदत्तया प्रतिबोधनम् । ननु तर्हि कथं सा मां प्रबोधितवतीत्यत आह—आ इति । स्मरणे पीडायां वाऽऽकारः । 'आः स्मरणेऽप्यकारणे कोप-सन्तापयोरपी'ति मेदिनी । उदकस्नानसङ्कीर्त्तनेन=पूर्वं मया कथयितुमारब्धायां कथायामुदकस्नानसङ्कीर्त्तनेन । चिन्तयता=स्मृतिविषयतां प्राप्तां तां चिन्तयता । सा = वासवदत्ता । एवं = युक्तं ब्रूषे । सत्यं मया तद्गतमानसेन सा स्वप्न एव साक्षात्कृता भवेत् । तत्रापि तावदाह—यदीति ।

यदि = त्वदुक्तरीत्या यदि । तावदिति पक्षान्तरे । अयं = वासवदत्ता-समागमः । स्वप्नः = मनोरथकल्पितं स्वप्नविज्ञानमात्रमेव । तर्हि–अप्रतिबोध-नम् = जागरणविरहः, स्वप्नविगमाऽभावः । निद्रैवेति यावत् । धन्यम् = युक्तम्, प्रियम् । यदि स्वप्नेनैव तावदुपकल्प्य प्रदर्शिता मे वल्लभा, तर्हि अस्तु मे सर्वदा स्वप्न एवेत्याशयः ।

अथवेति–पक्षान्तरे । यद्वेत्यर्थः । अथ=वासवदत्तादर्शनस्पर्शनरूपोऽर्थः । विभ्रमः = उन्मादः, बुद्धिभ्रान्तिरेव । स्यात् = भवेत् । 'तर्ही'ति शेषः । विभ्रमोऽपि = बुद्धिभ्रम एव । मे = मम । चिरं = चिरकालम् । अस्तु = भवतु । यदि प्रियादर्शनं स्वप्नो वा मतिविभ्रमो वा स्यात्तर्हि कामं स एव चिरं मे भवतु, येन प्रियादर्शनस्पर्शनजन्यं सुखमनुभवामीत्याशयः ॥९॥

---

१ 'विभ्रमो ह्यस्तु' इति पाठान्तरम् । हि = निश्चयेन ।

**विदूषकः**—भो वयस्य ! इमस्सि [1]राअउले अवन्तिसुन्दरी णाम जक्खिणी पडिवसदि, सा तुए दिट्ठा भवे ।

[ भो वयस्य ! अस्मिन् राजकुलेऽवन्तिसुन्दरी नाम यक्षिणी प्रतिवसति, सा त्वया दृष्टा भवेत् ! ] ।

**राजा**—न, न—

**स्वप्नस्याऽन्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम् ।**
**चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम् ॥ १० ॥**

अभिनवराजलक्ष्मीः

तदेवं—'मया साक्षादेव वासवदत्ता दृष्टे'ति निर्भ्रान्तं कथयन्तं वत्सराजं विदूषकः प्राह—**भो** इति ।

एतस्मिन् राजकुले = मगधराजान्तःपुरे । अवन्तिसुन्दरी नाम = अवन्तिसुन्दरीतिनामधेया । अवन्तिकानामधेयेति यावत् । यक्षिणी = देवयोनिविशेषः । आवन्तिकया पुरुषान्तरदर्शनस्य परिहृततया तद्विषये नानाविधो लोकप्रवादः प्रचलित आसीत्, 'इह वटे यक्षःप्रतिवसती'तिवत् । एवञ्च विदूषकेणापि तन्नाम्नः श्रुतत्वेऽपि तद्दर्शनाऽभावाद्यक्षीत्वेन तामध्यवस्यता एवमुक्तम् । अवन्तिका त्वया दृष्टेति तत्त्वम् । यक्षीत्वन्तूपहासेन सर्वजनाऽदृश्यतया चेति तत्त्वम् । अत्र सर्वेऽपि टीकाकारा भ्रान्ता एवेति **गौडाः** ।

राजा तु तदुक्तमुपहासमबुध्वा निषेधति—**नेति** । न न = नहि नहि । न मया यक्षी दृष्टा । तर्हि-किं दृष्टमत आह—**स्वप्नस्येति** । स्वप्नस्य = स्वापस्य । अन्ते = अवसाने । विबुद्धेन=प्रबुद्धेन मया । चारित्रं=स्वशीलम् । कुलस्त्रीजनोचितं परपुरुषदर्शनपरिहारादिलक्षणं स्वशीलमिति यावत् । रक्षन्त्या अपि = परिपालयन्त्या अपि । नेत्राभ्यां विप्रोषितमञ्जनं यत्र तत्—नेत्रविप्रोषिताञ्जनम् = अञ्जनशून्यनेत्रयुगलशोभितम् । दीर्घा अलकाः = घूर्ण-

१ 'एतस्सिंणगरे' ( एतस्मिन्नगरे ) पा० ।

अपि च वयस्य ! पश्य पश्य,—

**योऽयं सन्त्रस्तया देव्या तया बाहुर्निपीडितः ।**
**स्वप्नेऽप्युत्पन्नसंस्पर्शो रोमहर्षं न मुञ्चति ॥ ११ ॥**

अभिनवराजलक्ष्मीः

कुन्तला यस्मिंस्तत् = दीर्घालकं = लम्बचूर्णकुन्तलम् । 'अलकाश्चूर्णकुन्तलाः' इत्यमरः । मुखम् = आननम् । दृष्टं = विलोकितम् ।

कुलस्त्रीजनोचितलज्जावनतं लम्बालकमञ्जनविकलनेत्रद्वयशोभितं तन्मुखं मया दृष्टम् ।

न च यक्ष्या लज्जादिकम्, अञ्जनादिरहितं नेत्रादिकञ्च सम्भवति, अतो नूनं सा कुलवधूर्वासवदत्तैव भवेदिति भावः । अत्रावन्तिकायाः प्रोषितपतिकावेषधारिण्या अञ्जनरहितं नेत्रद्वयं, लज्जादिकञ्च दृष्टमासीद्वत्सराजेनेत्यवधेयम् । एवञ्च नायं स्वप्नो न वा यक्षीदर्शनमिति वत्सराजेन दर्शितम् ॥ १० ॥

ननु विभ्रम एवायं भवतो भवेदत आह—योऽयमिति । सन्त्रस्तया = मत्प्रतिबोधभीतया । तया देव्या = वासवदत्तया । योऽयं = मदीयो योऽयम् । बाहुः = भुजः । निपीडितः = शय्यायां स्थापनावसरे हस्तेन गृहीतः । सोऽयम्—स्वप्ने = निद्रावस्थायाम् । उत्पन्नसंस्पर्शोऽपि = जातदेवीहस्तसम्पर्कोऽपि । रोमहर्षं = रोमाञ्चम् । न मुञ्चति = व्यपगतेऽपि स्वप्ने इदानीमपि न जहाति । स्वप्नदशानुभूततत्करस्पर्शो मद्धस्तो रोमाञ्चितोऽद्यापि तिष्ठतीत्याशयः । एवञ्च नायं मे मतिभ्रमः, किन्तु सत्यमेव वासवदत्तया संस्पृष्टोऽहमिति 'पश्य पश्ये'त्युक्त्वा सूचितम् । 'एतेन' 'यदि तावदयं स्वप्न' इति श्लोकोक्तपक्षद्वयनिरासोऽत्र 'स्वप्नस्यान्ते' [ ५ अङ्क १० श्लो० ] इति 'योयम्' [अङ्क ५ श्लोक ११] इति च श्लोकद्वयेनोपन्यस्त इत्यवधेयम् ॥ ११ ॥

**विदूषकः**—मा दाणिं भवं अणत्थं चिन्तिअ। एदु एदु भवं, चउस्सालं पविसामो।

[ मेदानीं भवाननर्थं चिन्तय[1]। एत्वेतु भवान्, चतुःशालं प्रविशावः ]।

( प्रविश्य- )

**काञ्चुकीयः**—जयत्वार्यपुत्रः। अस्माकं महाराजो दर्शको भवन्तमाह—'**एष खलु भवतोऽमात्यो रुमण्वान् महता बलसमुदयेनोपयातः खल्वारुणिमभिघातयितुम्**। तथा-

अभिनवराजलक्ष्मीः

इदानीं = सम्प्रति। व्यपगतायां तस्यामिति यावत्। अनर्थम् = असम्भाव्यम्। मा चिन्तय = मा विभावय। अलं चिन्तयेति भावः। एत्वेतु = आगच्छतु तावत्। चतुःशालम् = प्रासादान्तःस्थितं शयनीयाद्युपशोभितं भवनविशेषम्। प्रविशावः = गच्छावः। 'सञ्जवनं त्विदं,—चतुःशाल'मिति अमरकोशः। [ चतुःशाल = 'चौबारा' 'चौशाल' ]। प्रविश्य काञ्चुकीयः- 'इत्थमाहे'ति शेषः।

जयतु = विजयताम्। आर्यपुत्रः = वत्सराजो भवान्। जामातृत्वेन तथा सम्बोधनम्। किमाहेत्यपेक्षायां तन्निर्दिशति—एष इति। महता = अतिविशालेन। बलसमुदयेन = सेनासमवायेन। 'समुदायः समुदयः समवायश्चयो गणः'इत्यमरः। आरुणिं=तन्नामानन्त्वच्छत्रुम्। अभिघातयितुं = त्वया प्रयोज्यकर्त्रा अभिहतं—विनष्टं कारयितुम्। तथा = तथैव, आरुणिं हन्तुमेव।

हस्तिनश्च अश्वाश्च रथाश्च—हस्त्यश्वरथम्। 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गाना'मित्येकवद्भावः। हस्त्यश्वरथं पदातयश्च यत्र तानि[2] हस्त्यश्वरथपदातीनि =

१ 'चिन्तयित्वे'ति पाठे—चिन्तयित्वा = अतिमात्रं विभाव्य, नान्न प्रयोजनमित्यर्थो बोध्यः। २ 'पादात'मिति केचित्पठन्ति। 'पादाताश्च पदातयः' इत्याशयः।

**हस्त्यश्वरथपदातीनि[1] मामकानि विजयाऽङ्गानि सन्नद्धानि । तदुत्तिष्ठतु भवान् ।**

अपि च,—

**भिन्नास्ते रिपवो, भवद्गुणरताःपौराःसमाश्वासिताः,**
**पार्ष्णी यापि भवत्प्रयाणसमये तस्या विधानं कृतम् ।**

---

अभिनवराजलक्ष्मीः

करितुरगस्यन्दनारोहिभटपटलपरिमण्डितानि[2] । विजयाङ्गानि = विजयावहानि । अङ्गानि = साधनानि । युद्धेष्वप्रतिहतानि सैन्यानीत्यर्थः । सन्नद्धानि = कृतसन्नाहानि । गन्तुमुद्यतानीत्यर्थः । उत्तिष्ठतु = विजययानाय सज्जो भवतु ।

अपिच = किञ्च । भिन्ना इति । ते = तव । रिपवः = शत्रवः, तत्पक्ष्याश्च । भिन्नाः = भेदनीतिप्रयोगेण निर्बलतां नीताः । भवतो-गुणेषु-दयादानदक्षिण्यादिगुणेषु—रताः = अनुरक्ताः-भवद्गुणरताः = त्वदेकपक्षपातिनः । पुरेषु भवाः-पौराः = नगरग्रामादिवासिनः प्रजावर्गाः । समाश्वासिताः = 'नूनं वत्सराजो विजेष्यते, मा भैष्ट यूय'मित्यादिवचनैर्धैर्यं नीतास्त्वदनुरक्ताश्च विहिताः । एवञ्च प्रजानुरागस्त्वयि दार्ढ्यं नीत इत्याशयः ।

किञ्च—भवतः प्रयाणस्य समयः—भवत्प्रयाणसमयस्तस्मिन्—भवत्प्रयाणसमये = भवतो विजययात्रावसरे । याऽपि = या खलु । पार्ष्णी=पृष्ठभागः । तस्याः = पार्ष्णीभागस्थतत्तद्देशस्थशत्रूणामिति यावत् । विधानम् = तदवरोधोपायः । पृष्ठसंरक्षणोपायः । कृतं = विहितम् ।

अत्र-'सैन्यपृष्ठे पुमान् पार्ष्णिः पश्चात्पदजिगीषयो'रितिविश्वात् पुँल्लिगस्यापि पार्ष्णिशब्दस्य—'पार्ष्णिः स्यादुन्मदस्त्रियाम् । स्त्रियां, द्वयोः-सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च ॥' इतिमेदिनीप्रामाण्येन स्त्रियामपि वर्त्तमानतया ततः-'कृदिकारादक्तिन' इति ङीषि पार्ष्णीशब्दोऽपि सम्भवत्येवेत्याशयः ।

---

१ अन्ये तु-हस्तिनश्च अश्वाश्च रथाश्च पदाताश्च-हस्त्यश्वरथपदातम्, तदस्त्येषां तानि-हस्त्यश्वरथपदातीनि । मत्वर्थीय इनिरित्याहुः । तत्र 'पदात' शब्दश्चिन्त्यः ।

**यद्यत्साध्यमरिप्रमाथजननं तत्तन्मयाऽनुष्ठितं,**
**तीर्णा चाऽपि बलैर्नदी त्रिपथगा, वत्साश्च हस्ते तव॥१२॥**

**राजा—( उत्थाय- )** बाढम् ।

अयमिदानीम्—

**उपेत्य नागेन्द्रतुरङ्गतीर्णे**
**तमारुणिं दारुणकर्मदक्षम् ।**

अभिनवराजलक्ष्मीः

एवञ्च—त्वद्दिग्विजययात्रायां ये पृष्ठदेशस्था विरोधित्वेन सम्भाविता राजानस्तेषां समाधानं कृतमिति भावः । तत्र—तत्र सेना स्थापितेति तत्त्वम् ।

किञ्च—अरीणां प्रमाथः = हिंसनं, तस्य जननं = शत्रुविध्वंसनोपयोगि । यद्यत्साध्यं=यद्यत्कर्म कर्त्तुं शक्यं तत्तत्कर्म । मया=मगधाधिराजेन दर्शकेन । अनुष्ठितं = यथावन्निष्पादितम् । च = किञ्च, बलैः = सैन्यैः । त्रिपथगा नदी अपि = गङ्गाख्या सीमासरिदपि । तीर्णा=समुत्तीर्णा । सैन्यमस्मदीयं गङ्गान्तीर्त्वा शत्रुराज्ये निविष्टमित्याशयः । अतो हेतोः—नीतिबलेन शत्रुबलस्य निग्रहात् शत्रूणां पराजयस्यावश्यम्भावितया-वत्साः = वत्सदेशः तव हस्ते = त्वद्धस्तगता एव । 'इति विभावये'ति शेषः । अस्माभिर्युद्धसामग्री सङ्घटिता । सेना प्रचलिता । इदानीं त्वया स्वपराक्रमो दर्शनीय इति हृदयम् । काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं' वृत्तम् ॥ १२ ॥

बाढमित्यभ्युपगमे 'अयमिदानी'मिति वक्ष्यमाणेन श्लोकेन सहैवान्वेति । उपेत्येति । इदानीम् = अस्मिन्काले । अयम्=अहमुदयनः । उपेत्य= शत्रुनिवासभूतं प्रदेशं ( वत्सान् ) प्राप्य । नागेन्द्राः = हस्तिनः, तुरङ्गाः = वाजिनश्च, तीर्णाः = कृतसञ्चारा यस्मिन्—तस्मिन्—नागेन्द्रतुरङ्गतीर्णे = हस्तितुरगव्याप्ते । [नागेन्द्रतुरङ्गैस्तीर्णे = व्याप्ते विस्तीर्णे इति—चाऽर्थो बोध्यः ] । विकीर्णाः = प्रक्षिप्ताः, बाणाः = शरा एव, उग्रतरङ्गाणां भीषणवीचीनां भङ्गा

१ 'इत्यस्माकं महाराजो दर्शको भवन्तमाहे'ति पूर्वेण सम्बन्धः ।

**विकीर्णबाणोग्रतरङ्गभङ्गे**
**महार्णवाभे युधि[1] नाशयामि ॥ १३ ॥**

**( निष्क्रान्ताः सर्वे )**

**इति पञ्चमोऽङ्कः ।**

---

अभिनवराजलक्ष्मीः

इव = खण्डानीव यस्मिन् तथोक्ते-विकीर्णबाणोग्रतरङ्गभङ्गे=प्रक्षिप्तबाणभीषणतरतरङ्गाकुले। अत एव-महार्णवस्येव आभा यस्यासौ तस्मिन्-महार्णवाभे = समुद्रसदृशे[2]। युधि = युद्धे। दारुणेषु कर्मसु दक्षः, तं दारुणकर्मदक्षं = क्रूरकर्मलम्पटम्। तं = प्रसिद्धम्। आरुणिं = तन्नामानं स्वशत्रुम्। नाशयामि = निहन्मि।

गौडास्तु-विकीर्णबाणोग्रतरङ्गभङ्गेऽपि-नागेन्द्रतुरङ्गतीर्णे = हस्तितुरङ्गसङ्घसाहाय्येन कृतसन्तरणे, महार्णवाभे युधि-उपेत्याहं तमारुणिं निहन्मीत्यर्थमाहुः। युक्तश्चायमेवाऽर्थः। अन्यैष्टीकाकारैस्तु-अन्यथैवाऽस्यान्वयः कृतः, सच न मनोज्ञ इत्याहुः। उपेन्द्रवज्रावृत्तम्। तल्लक्षणन्तु—'उपेन्द्रवज्रा जतजास्ततो गौ' इति वृत्तरत्नाकरे ॥ १३ ॥

**इति श्रीगुरुप्रसादशास्त्रिविरचितायामभिनवराजलक्ष्म्यां**
**स्वप्नवासवदत्तप्रतिपदव्याख्यानभूतायां**
**पञ्चमोऽङ्कः ।**

---

१ युच्छब्दः पुंस्यपि, महाकविप्रयोगात्।

२ अत्र युद्धस्य महार्णवतुल्यत्वोक्त्वा—'नागेन्द्रतुरङ्गतीर्णे' इति 'विकीर्णबाणोग्रतरङ्गभङ्गे' इति च विशेषणाद्वयं समुद्रपक्षेऽपि योज्यम्। तथाहि—नागेन्द्राः = महासर्पाः। तुरङ्गाः = तुरङ्गसमानवेगा मकरादयः—तैस्तीर्णे = व्याप्ते इति समुद्रपक्षेऽर्थः। एवं समुद्रेऽपि-विकीर्णः = अतिविस्तीर्णो बाणाख्यो भीषणो जलतरङ्गविशेषउत्तिष्ठति कदाचित्, [ बाण = समुद्रीवान 'बाढ' ]। तेन भङ्गः—पोतादिभङ्गोऽपि भवतीत्यवधेयम्।

# अथ षष्ठोऽङ्कः ।

—:*:—

( ततः प्रविशति काञ्चुकीयः ) ।

**काञ्चुकीयः**—क इह भोः ! काञ्चनतोरणद्वारमशून्यं कुरुते ? ।

( प्रविश्य— )

**प्रतीहारी**—अय्य ! अहं विजआ । किं करीअदु ? ।

[ आर्य ! अहं विजया । किङ्क्रियताम् ? ] ।

**काञ्चुकीयः**—भवति ! निवेद्यतां—निवेद्यतां वत्सराज्यलाभप्रवृद्धोदयायोदयनाय—'एष खलु महासेनस्य सकाशाद्वैभ्यसगोत्रः

अभिनवराजलक्ष्मीः

अङ्कादौ कथोपक्षेपार्थं मिश्रविष्कम्भकमारचयति—तत इति । काञ्चुकीयः = अन्तःपुरपरिचारकः कञ्चुकपरिवृताङ्गो वृद्धो राजभृत्यः । काञ्चनतोरणद्वारम्=स्वर्णघटितं बहिर्द्वारम् । यद्वा काञ्चनतोरणद्वारं = स्वर्णलेपादिपरिष्कृतं बहिर्द्वारम् । 'रत्नतोरणद्वार'मिति पाठान्तरम् । 'काञ्चनतोरणद्वार'मिति द्वारविशेषस्य सञ्ज्ञेति तु गौडाः । अशून्यं—सनाथम् । क इह कुरुते = कः खलु कुरुते? । [राजमहलके स्वर्णद्वारपर कौन पहरेदार है ? ] ।

प्रतीहारी = वेत्रलताधारिणी अन्तःपुरद्वाररक्षिका राज्ञः पुरतः समागतजननिवेदनाधिकारिणी परिचारिका । विजया नाम = विजयाख्या परिचारिका तत्र द्वारे तिष्ठामि । किङ्क्रियताम् = आज्ञापय को नियोगो मयाऽनुष्ठेयः ? ।

भवति !=सुभगे ! । वत्सानां राज्यं वत्सराज्यं, तस्य लाभेन प्रवृद्ध उदयो यस्य—तस्मै—वत्सराज्यलाभप्रवृद्धोदयाय = वत्सराज्यलाभसञ्जातभाग्योदयाय । उदयनाय = उदयनाख्याय वत्सराजाय । निवेद्यतां—निवेद्यतां = त्वरितं निवेद्यताम् । सम्भ्रमे द्वित्वम् ।

किन्तदित्यत आह—एष इति । एषः = सन्निकटवर्त्ती । महासेनस्य =

काञ्चुकीयः प्राप्तः, तत्रभवत्या चाऽङ्गारवत्या प्रेषिताऽऽर्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतीहारमुपस्थितौ" इति ।

**प्रतीहारी**—अय्य ! अदेसकालो पडिहारस्स ।

[ आर्य ! अदेशकालः प्रतीहार[1]स्य ] ।

**काञ्चुकीयः**—कथमदेशकालो नाम ? ।

---

अभिनवराजलक्ष्मीः

उज्जयिनीपतेः प्रद्योतस्य । सकाशात् = सन्निधेः । रैभ्येण समानं गोत्रं यस्य असौ–रैभ्यसगोत्रः = रैभ्यकुलोद्भूतः । गोत्रशब्दो नामवाचकोऽप्यस्ति । रैभ्य-नामेतिचार्थः । काञ्चुकीयः = अयमहं प्रद्योतमहासेनकाञ्चुकीयः । तत्र भवत्या = माननीयया । अङ्गारवत्या = अङ्गारवतीनाम्न्या प्रद्योतमहिष्या वासदत्ताजनन्या । प्रेषिता = प्रहिता । आर्या = पूज्या । वसुन्धरा नाम = वसुन्धरानाम्नी । धात्री च = उपमाता च । 'प्राप्ते'ति विपरिणामेनान्वयः । प्रतीहारं = द्वारदेशम् । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । इति = इत्थं । 'निवेद्यता' मिति पूर्वेण सम्बन्धः ।

आर्य = कञ्चुकिन् ! देशेन सहितः कालो देशकालः—न देशकालः—अदेशकालः । 'देशकाल'शब्दौ योग्यदेशकालपरौ । अदेशकालः = नोचितं स्थानं । न चोचितः समय इत्यर्थः । प्रतीहारस्य = सन्देशकथनस्य । सन्देशकथनस्य नोचितो देशः, न चोचितः समय इदानीमित्या-शयः । राज्ञे निवेदनस्यायमनवसर इति यावत् । यद्वा—प्रतीहारस्य =

---

१ 'प्रतीहारो द्वारि द्वाःस्थे द्वाःस्थितायान्तु योषिति' इति विश्वः ।

प्रतीहारी—सुणादु अय्यो—अज्ज भट्टिणो सुय्यामुह-[1]प्पासादगदेण ( णडेण ) केणवि वीणा वादिदा। तं च सुणिअ भट्टिणा भणिअं-'घोसवदीए सद्दो विअ सुणीअदि'त्ति।
[ शृणोत्वार्यः। अद्य भर्तुः स्वीयमुख्यप्रासा[1]दगतेन (नटेन) केनापि

अभिनवराजलक्ष्मीः

द्वारपालस्य। इदानीं राज्ञः सविधे प्रतीहारेण गन्तुं निवेदयितुं च न शक्यते इत्याशयः। द्वारपालिकागमनयोग्यो देशः, द्वारपालिकानिवेदन-योग्योऽवसरश्च नास्तीति तत्त्वम्। कथमिति। कथमिदानीमवसरो नास्तीत्याशयः।

अद्य=अस्मिन्नहनि। भर्तुः=उदयनस्य। पाठान्तरे—भर्त्तरि=राजनि उदयने। स्वीयमुख्यप्रासादगते। स्वीयं=स्वकीयं वंशपर-म्परागतं, मुख्यं=प्रधानं, प्रासादं=कौशाम्बीराजभवनं, गते=प्राप्ते सति। शत्रुभिरधिकृतस्य स्वीयमुख्यप्रासादस्य वत्सदेशविजयेन पुनर्लाभात्तं प्रासादं गते भर्त्तरीत्याशयः। केनापि नटेन=केनापि वैदेशिकेन कुशीलवेन। वीणा=तन्त्रीवाद्यं। वादिता=ध्वनिता। [ अत्र—'भर्तुः सूर्यामुख-प्रासादगतेन केनाऽपि वीणावादिते'ति मुद्रितः पाठः। तत्र—सूर्यामुखः=अत्युच्चं भवनम्। [ धरहरा, बुर्ज ]। केचित्तु—सूर्या नाम नवोढा[2], सा च प्रकृते पद्मावती, तस्या यो मुखमिव मुखं—मुख्यः प्रासादस्तं गतेन=प्राप्तेन केनापि वीणावादिता। यद्वा—सूर्यामुखप्रासादगतेन=नवोढाप्रासादपुरोभागवर्त्तिना, केनापि वीणा वादिता। यद्वा—सूर्यानाम

१ अत्र='भर्त्तरि स्वर्गसुखप्रासादे'ति 'स्वीयमुख्यप्रासादे'ति च गौडाः पठन्ति। 'सूर्यामुखप्रासादे'ति 'सुखशय्यामहाप्रासादे'ति च मुद्रितः पाठः।

२ यथा भगवते "देवस्या सूर्यया सार्धं"मित्यत्र सूर्या=नवोढेति तद्व्या-ख्यातारः।

वीणा, वादिता। तां श्रुत्वा भर्त्रा भणितं—'घोषवत्याः शब्द इव श्रूयते' इति ]।

**काञ्चुकीयः**—ततस्ततः !।

**प्रतीहारी**—तदो तहिं गच्छिअ पुच्छिदो—'कुदो इमाए वीणाए आगमो' त्ति ?। तेण भणिअं-अह्मेहिं णम्मदातीरे कुच्चगुम्मलग्गा दिट्ठा। जइ प्पओअणं इमाए, उवणाअदु भट्टिणो' त्ति। तं च उवणीदं अङ्के करिअ मोहं गदो भट्टा।

तदो मोहप्पच्चागदेण बप्फपय्याउलेण मुहेण भट्टिणा भणिअं—'दिट्ठासि घोसवदि ! सा खु ण दिस्सदि' त्ति।

अय्य ! ईदिसो अणवसरो। कहं णिवेदेमि !।

---

अभिनवराजलक्ष्मीः

विवाहाधिष्ठातृभूता[1] मङ्गलदेवता। सा मङ्गलार्थं दारुशीलाद्युत्कीर्णा मुखे यस्य स—सूर्यामुखप्रासादः, तं गतेनेत्यर्थ इत्याहुः। कश्चिच्च 'सूर्यामुखप्रासादे'ति पाठे'भर्त्तु'रित्यस्य व्यर्थत्वात्तत्स्थाने 'सुशय्यामहाप्रासादगतेने'त्येवं पाठं कल्पयन्—"सुशय्या = सुखशय्या। यस्मिन्महाप्रासादे राज्ञः शयनाय सुखशय्या आस्तीर्यते तं प्रासादं गतेनेत्यर्थः—" इत्येवं व्याचख्यौ। ]

केचित्तु—'सूर्यमुखप्रसादे'ति पठित्वा प्रातः सूर्यावलोकनाय रचितेनोन्नतमेन प्रासादेनेत्यर्थमाहुः।

तां = वादितां वीणाम्। तच्छब्दमिति यावत्। भर्त्रा = उदयनेन। भणितं = कथितम्। 'परिजनस्य अग्रतः' इति शेषः। घोषवत्याः = वासवदत्तावीणायाः। एतदागमवृत्तान्तश्च कथा सरित्सागरे द्रष्टव्यः।

शब्द = स्वनः। 'अस्या वीणाया ध्वनिघोषवत्याः स्वनमनुहरतीवे'ति

---

१ एकाग्निकाण्डभाष्ये हरदत्तेन सूर्या = विवाहदेवतेति व्याख्यातम्।

[ ततस्तत्र गत्वा पृष्टः—कुतोऽस्या वीणाया आगमः ?—इति । तेन भणितं–'अस्माभिर्नर्मदातीरे कूर्चगुल्मलग्ना दृष्टा । यदि प्रयोजनमनया,—उपनीयतां भर्त्रे' इति । तां चोपनीतामङ्के कृत्वा मोहं गतो भर्ता ।

ततो मोहप्रत्यागतेन बाष्पपर्याकुलेन मुखेन भर्त्रा भणितं–'दृष्टाऽसि घोषवति ! सा खलु न दृश्यते' इति । आर्य ! ईदृशोऽनवसरः, कथं निवेदयामि ? ] ।

---

अभिनवराजलक्ष्मीः

नूनमियं घोषवती भवेदित्युदयनेनोक्तमित्याशयः । ततस्ततः–ततः किं जातमग्रे तत्त्वरितं कथय । आगमः = प्राप्तिः । तेन = नटेन । अस्माभिः= मया । 'अस्मदो द्वयोश्चे'ति बहुवचनम् । नर्मदातीरे=रेवातीरे । कूर्चगुल्मलग्ना=दर्भस्तम्बसंसक्ता । दृष्टा = विलोकिता । 'ततोऽस्माभिरानीते'ति शेषः । प्रयोजनं = कार्यम् । अनया = वीणया । उपनीयतां=निवेद्यताम् । भर्त्रे=उदयनाय । तां=वीणाम् । उपनीताम्=आनीताम् । अङ्के=उत्सङ्गे । कृत्वा= स्थापयित्वा । मोहं = मूर्च्छाम् । गतः = प्राप्तः । मोहप्रत्यागतेन = व्यपगतमूर्च्छेन । लब्धसञ्ज्ञेनेति यावत् । बाष्पपर्याकुलेन=अश्रुसङ्कुलेन । मुखेन= आननेन । उपलक्षणे तृतीया । तादृशेनाननेन उपलक्षितो यो भर्ता तेनोक्तमिति योजना । घोषवति = हे घोषवत्याख्ये वासवदत्तावीणे ! दृष्टाऽसि = मया विलोकितासि । मत्सविधे प्राप्तासि । सा=त्वत्स्वामिनी वासवदत्ता तु । न दृश्यते=नैवेदानीमपि मया विलोक्यते । 'इति भणित'मिति सम्बन्धः ।

इत्थं राज्ञोऽस्वास्थ्यं विरहव्याकुलत्वञ्च निवेद्य विजया नाम प्रतीहारी काञ्चुकीयमाह—आर्येति । ईदृशः = पूर्वोक्तः । अनवसरः = निवेदनयोग्यावसरविरहः । कथम्=इत्थं राज्ञो स्वास्थ्यं ज्ञात्वाऽपि कथम् ? निवेदयामि = भवदुक्तं तावद्राज्ञः पुरतः कथयामि ? ।

**काञ्चुकीयः**—भवति ! निवेद्यताम् , इदमपि तदाश्रयमेव ।

**प्रतीहारी**—अय्य ! इअं णिवेदेमि । एसो भट्टा सुय्यामुहप्पासादादो ओदरइ । ता इह एव्व णिवेदइस्सम् ।

[ आर्य ! इयं निवेदयामि । एष भर्ता सूर्य्यामुखप्रासादादवतरति । तदिहैव निवेदयिष्यामि ] ।

**काञ्चुकीयः**—भवति ! तथा ।

( उभौ निष्क्रान्तौ )

**मिश्रविष्कम्भकः ।**

—(:*:)—

अभिनवराजलक्ष्मीः

भवति = श्रीमति विजये ! । निवेद्यतां = अवसराभावेऽपि निर्विशङ्कं राज्ञे निवेद्यताम् । इदमपि=अस्मदागमनादिकामपि । तदाश्रयमेव = वासवदत्ताकथानुबन्ध्येव । वासवदत्ताविषयकमेव किञ्चिद्वक्तुमस्माकमागमनमतो भवत्या राज्ञेऽस्मदागमनं निर्विशङ्कं निवेद्यतान्तावदित्यर्थः । अस्मद्वक्तव्येन राजा सन्तुष्ट एव भविष्यतीति तत्त्वम् ।

इयम् = एषाऽहं त्वरितमेव । राजानं निर्दिश्याह—एष इति । स्वीयमुख्यप्रासादात् = स्वकीयप्रधानप्रासादात् । 'सूर्यामुखप्रासादा'दिति पाठे तु—सूर्यामुखसञ्ज्ञकादत्युच्छ्रितात्प्रासादादित्यर्थः । [ सूर्यामुख सूर्यमुख = 'धरहरा' ऊँची बुर्ज' ] । अवतरति=नीचैरायाति । इहैव=प्रतीहारभूमावेव । भवति = कल्याणिनि ! । तथा = यथा भवत्यै रोचते तथाऽनुष्ठीयताम् ।

उभौ = धात्रीकञ्चु

मिश्रविष्कम्भकः = इति सङ्कीर्णविष्कम्भको नामार्थोपक्षेपकः ।

१ 'सूर्यमुखेति', 'स्वीयमुख्ये'ति च केचित्पठन्ति ।

( ततः प्रविशति राजा, विदूषकश्च ) ।

**राजा—**

**श्रुतिसुखनिनदे ! कथं नु देव्याः**
**स्तनयुगले जघनस्थले च सुप्ता ।**

---

अभिनवराजलक्ष्मीः

तत्र विष्कम्भकलक्षणं दर्पणे—

'वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
सङ्क्षेपार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः ।
शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यप्रकल्पितः ॥ इति ।

प्रकृते विजयाख्यायाः प्रतीहार्याः प्राकृतभाषितया नीचपात्रता, कञ्चुकिनस्तु संस्कृतभाषितया मध्यमपात्रतेति ताभ्यां रचितोऽयं विष्कम्भको 'मिश्रविष्कम्भक' इत्युच्यते ।

राजेति । घोषवतीमुद्दिश्य राजा इत्थमाहेत्यर्थः । श्रुतीति । श्रुतौ = श्रवणे, कर्णयोर्वा—सुखः = सुखजनकः—निनदः = स्वनो यस्याः सा—श्रुतिसुखनिनदा, तत्सम्बुद्धौ हे श्रुतिसुखनिनदे ! = कर्णमधुरस्वने ! हे घोषवति ! देव्याः = वासवदत्तायाः । स्तनयोर्युगलं—स्तनयुगलं, तस्मिन्—स्तनयुगले = कुचकुम्भयुगले । जघनमेव स्थलं—जघनस्थलं, तस्मिन्—जघनस्थले = नितम्बपुरोभागे च । सुप्ता = विश्रान्ता, कृतवसतिश्च त्वम् । ( अहमिति तु गम्यम् ) । वीणाया वादनार्थं उत्सङ्गे निवेशः क्रियते । तेन जघनस्थले कुचयुगले च तस्या विश्रान्तिरुचितैव ।

**विहगगणरजोविकीर्णदण्डा**
**प्रतिभयमध्युषितास्यरण्यवासम् ? ॥१॥**

अपि च; अस्निग्धासि घोषवति ! या तपस्विन्या न स्मरति—

**श्रोणीसमुद्वहनपार्श्वनिपीडितानि**
**खेदे स्तनान्तरसुखान्युपगूहितानि[1] ।**

अभिनवराजलक्ष्मीः

सम्प्रति–विहगानां = पक्षिणां, गणः = समूहः, तेन उत्थापितं यद्रजः= धूलिः, तेन कीर्णो व्याप्तो दण्डो यस्याः सा—विहगगणरजोविकीर्णदण्डा = पक्षिगणविक्षितधूल्यादिमलदिग्धप्रवालाख्यदण्डा सती । मलाविला, धूलिधूसरिता च सतीति यावत् । प्रतिभयं = भयानकम् । 'भयानकम् । प्रतिभय' मित्यमरः । अरण्यवासं = काननिवासम् । कथं नु = कथमिव । अध्युषिताऽसि = कृतवर्त्यासि ।

अनन्यदुर्लभे वासवदत्ताकुचकुम्भे तदुत्सङ्गे च स्थितिं कृत्वा भयानके कानने मललिप्तदेहा भूत्वा कथमिव त्वमवात्सीरित्यर्थः । अहो दुर्दैवविलसितं यद्वासवदत्ताविरहितया त्वया मलाविलया वनवासविडम्बनमनुभूतमित्याशयः । पुष्पिताग्रा वृत्तम् ॥ १ ॥

अपिच = किञ्च । घोषवति = हे वासवदत्तावीणे ! । अस्निग्धाऽसि = स्नेहविकलासि । स्नेहरहितासि । तपस्विन्याः = दैवक्लिष्टायाः । 'श्रोणिसमुद्वहनादीनि स्वोपलालनानि न स्मरसि' इत्येवमग्रिमेण श्लोकेनान्वयः ।

श्रोणीति । श्रोण्या समुद्वहनानि श्रोणीसमुद्वहनानि, पार्श्वाभ्यां निपीडितानि—पार्श्वनिपीडितानि । श्रोणीसमुद्वहनानि च पार्श्वनिपीडितानि च—श्रोणीसमुद्वहनपार्श्वनिपीडितानि = नितम्बधारण पार्श्वनिगूहनानि । गमनसमये

१ 'खेदस्तनान्तरे'ति मुद्रितः पाठः । स च सप्तमीसमासेन योज्यः ।

**उद्दिश्य मां च विरहे परिदेवितानि**
**वाद्यान्तरेषु कथितानि च सस्मितानि॥२॥**

अभिनवराजलक्ष्मीः

रज्जुबद्धा वीणा पश्चाद्भागे नितम्बे लम्ब्यते योषिद्भिः। एवं वादनसमये चोत्सङ्गे वीणा धार्यते, तथा च नितम्बलम्बनं, पार्श्वनिपीडनञ्च तस्याः सुलभमेव। [ केचित्तु—श्रोणीशब्देन जघनमेव ग्राह्यं. वादनसमये च जघनेन = उत्सङ्गेन वीणाधारणञ्च भवत्येव। एवं गमनादिसमये पतनवारणाय पार्श्वाभ्यां = कक्षाभ्यां तस्या धारणं भवत्येवेत्येवमर्थमाहुः। अन्ये तु—श्रोणीसादृश्याच्छ्रोणी = वीणाधःस्थितः स्थूलो दारुमयश्चर्मावनद्धो भागः, तस्याः समुद्वहनं = धारणम्। पार्श्वञ्च—वीणापार्श्वप्रदेशो वीणादण्डाख्यः—तस्य निपीडनम्—आलिङ्गन'मित्येवं व्याचक्षते ]।

खेदे = वादनजन्ये आयासे सति'। 'रतिखेदे इति तु स्वपक्षे गूढोऽर्थः। स्तनयोरन्तरं–स्तनान्तरं, स्तनान्तरे। सुखानि=सुखदानि–स्तनान्तरसुखानि = कुचकुम्भान्तरालसम्पर्कसुखदानि। उपगूहितानि—वासवदत्ता आलिङ्गनानि। विरहे = मद्विरहे। मामुद्दिश्य = मामभिलक्ष्योकृत्य। परिदेवितानि = त्वां वादयन्त्यास्त्वद्ध्वनिमिषेणैव विरहविलापरोदनादीनि।

किञ्च—वाद्यान्तरेषु = वादित्रावसरेषु, तदवकाशेषु च। [ 'अन्तरा' इति भाषा ]। वादित्रवादनविच्छेदावसरे इति यावत्। सस्मितानि = सहसितानि। सोपहासानीति वा। कथितानि=उपालम्भवचनानि। 'अस्निग्धासि घोषवति! या न स्मरसि–' इत्यन्वयो बोध्यः।

श्लोकोऽयं राज्ञा वीणाव्याजेन स्वोपालम्भायोक्तो वेदितव्यः। कामिन्यो हि–कामुकं स्वश्रोणीषु—नितम्बेषु जघनेषु च—वहन्ति, पार्श्वाभ्यां स्तनोपपीडं निपीडयन्ति, रतिखेदे च स्तनान्तराले निगूहन्ते। स्वप्रियविरहे च गानवादित्रवादनाद्यवसरेषु साभिप्रायं गानवादनव्याजेन परिदेवनोपालम्भनानि समाचरन्ति चेति भावः। अधन्योऽहं यः खलु तस्यास्तपस्विन्या वासवदत्ताया

**विदूषकः**—अलं, मा दाणिं भवं अदिमत्तं सन्तप्पिदु[1]।
[ अलम्, मेदानीं भवानतिमात्रं सन्तप्यतु[1] ]।

**राजा**—वयस्य ! मा मैवं,—

**चिरप्रसुप्तः कामो मे वीणया प्रतिबोधितः।**
**तां तु देवीं न पश्यामि यस्या घोषवती प्रिया॥३॥**

---

अभिनवराजलक्ष्मीः

श्रोणीसमुद्वहनादिकं, विरहविलापादिकञ्च विस्मृतवानस्मीति हृदयम्। अचेतनवीणोपालम्भेन च राज्ञ उन्मादो नाम कामावस्थाविशेषः सूचितः। वसन्ततिलकं वृत्तम्॥ २॥

अलम् = रोदनपरिदेवनादिना न प्रयोजनम्। इदानीम् = सम्प्रति। अतिमात्रं = भृशम्। भवान् मा सन्तप्यतु = मारोदीत्। 'अलमिदानीं भवानतिमात्रं सन्तप्ये'ति मुद्रितः पाठः। तस्य च—इदानीं भवान् अतिमात्रम्—अत्यन्तं—मा सन्तप्य = भवतः सन्तापेन न प्रयोजनम्। सन्तापं मा करोत्वित्यर्थो बोध्यः।

मा मा एवम् = एवं मा वद। मया सन्तापो न त्यक्तुं शक्यते। कुत एतदत आह—चिरेति। चिरकालम्। प्रसुप्तः = अप्रतिबुद्धः, मे = मम। कामः = प्रियादर्शनाभिलाषः, अनुरागश्च। वीणया = अनया घोषवत्या। प्रतिबोधितः = उद्बोधितः। यस्याः = वासवदत्तायाः। घोषवती = तदाख्येयं वीणा। प्रिया = वल्लभा, चिरसहचरी। तान्तु देवीं=तां खलु वासवदत्ताम्। न पश्यामि = हा धिक्। नावलोकयामि। इयं वीणा तु मयेदानीं चिराद् दृष्टा, परमेतत्स्वामिनी त्वद्यापि न दृश्यते ! अहो महन्मे दौर्भाग्यमित्याशयः। एवञ्च कथमहं सन्तापं परित्यजेयमिति गूढोऽर्थः॥ ३॥

---

१ 'सन्तप्पिअ' इत्यपि पाठः। 'सन्तप्ये'ति च तच्छाया।

वसन्तक ! शिल्पिजनसकाशान्नवयोगां घोषवतीं कृत्वा शं प्रमानय ।

**विदूषकः**–जं भवं आणवेदि । (**वीणां गृहीत्वा निष्क्रान्तः**)

[ यद्भवानाज्ञापयति । ( वीणां गृहीत्वा निष्क्रान्तः ) ] ।

( **प्रविश्य**– )

**प्रतीहारी**–जेदु भट्टा । एसो खु महासेणस्स सआसादो रेब्भसगोत्तो कञ्चुईओ, देवीए अङ्गारवदीए पेसिदा अय्या वसुन्धरा णाम वासवदत्ताधत्ती अ—पडिहारं उवट्ठिदा ।

[ जयतु भर्ता । एष खलु महासेनस्य सकाशाद्रैभ्यसगोत्रः काञ्चुकीयो, देव्या अङ्गारवत्या प्रेषिताऽऽर्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतिहारमुपस्थितौ ] ।

**राजा**—तेन हि पद्मावती तावदाहूयताम् ।

---

अभिनवराजलक्ष्मीः

इत्थं विलप्य पुना राजा प्राह—वसन्तकेति । वसन्तक = सखे विदूषक ! शिल्पिजनसकाशात् = वीणानिर्माणकुशलशिल्पिजनसमीपात् । नवः = नवीनः[1], योगः=दण्डतन्त्रीवर्णादियोजना यस्याः सा–तां–नवयोगाम्= यथावत्परिष्कृताम् । [1] योग = मरम्मत, पालिशआदि ] । कृत्वा = विधाय । यत् = वीणापरिष्करणं कारयितुम् । 'तत्तथैव निष्पाद्य शीघ्रमानयामी'ति शेषः । प्रतीहारी = समागतजननिवेदनाधिकृता द्वारपालिका स्त्री । जयतु = विजयताम् । महासेनस्य = उज्जयिनीप्रभोः प्रद्योतस्य । रैभ्यसगोत्रः = रैभ्यगोत्रोत्पन्नः । प्रतीहारं = द्वारदेशम् । उपस्थितौ = सम्प्राप्तौ ।

तेन हि=यद्येवं तर्हि । तावत्=प्रथमम् । आहूयताम्=आकार्यताम् ।

---

१ 'योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु' इति मेदिनी ।

**प्रतीहारी**—जं भट्टा आणवेदि ! ( **निष्क्रान्ता** ) ।

[ यद्भर्ताऽऽज्ञापयति । ( निष्क्रान्ता ) ] ।

**राजा**—किन्नु खलु शीघ्रमिदानीमयं वृत्तान्तो महासेनस्य विदितः ! ।

**( ततः प्रविशति पद्मावती, प्रतिहारी च )**

**प्रतीहारी**—एदु एदु भट्टिदारिआ ।

[ एत्वेतु भर्तृदारिका ] ।

**पद्मावती**—जेदु अय्यउत्तो ।

[ जयत्वार्यपुत्रः ] ।

**राजा**—पद्मावति ! किं श्रुतं—"महासेनस्य सकाशाद्रैभ्यसगोत्रः काञ्चुकीयः प्राप्तस्तत्रभवत्या चाङ्गारवत्या प्रेषिताऽऽर्या वसुन्धरा नाम वासवदत्ताधात्री च प्रतीहारमुपस्थितौ—" इति ?

**पद्मावती**—अय्यउत्त ! पिअं मे ञादिकुलस्स कुसलवुत्तन्तं सोदुं ।

---

अभिनवराजलक्ष्मीः

ओलोकसन्देशस्य स्त्रीभिरेव ग्रहणस्यौचित्यात्, पद्मावत्या वासवदत्तास्थानीयत्त या तत्पितृकुलागतलोकस्य तत्सविधे एवाह्वानस्यौचित्याच्च पद्मावत्यास्तावदाह्वानम् । यदिति । भर्ता यथाऽऽज्ञापयति तथा करोमि । किन्नु=कथम् । शीघ्रं = त्वरितमेव । अयं वृत्तान्तः = वासवदत्तादाह—पद्मावतीपरिणयादिरूपो वृत्तान्तः । जयतु = विजयताम् । शुभाशंसनात्मकं समुदाचारवाक्यमेतद्राज्ञः, स्वामिनश्च पुरतः सेवकैः, पत्न्यादिभिश्च प्रथममुच्चार्यते ।

किं श्रुतं = किं त्वया श्रुतोऽयं वृत्तान्तः प्रतीहार्या मुखेन । किन्तदित्यत आह—महासेनस्येति । इति = 'इत्ययं वृत्तान्तः किं श्रुतो भवत्ये'ति सम्बन्धः । किमत्र करणीयमिति च प्रश्नाशयः ।

[ आर्यपुत्र ! प्रियं मे ज्ञातिकुलस्य कुशलवृत्तान्तं श्रोतुम् ] ।

**राजा**—अनुरूपमेतद्भवत्याऽभिहितं—**'वासवदत्तास्वजनो मे स्वजनः'** इति । पद्मावति ! आस्यताम् । किमिदानीं नाऽऽस्यते ? ।

**पद्मावती**—अय्यउत्त ! किं मए सह उवविट्ठो एदं जणं पेक्खिसदि ? ।

[ आर्यपुत्र ! किं मया सहोपविष्ट एतं जनं प्रेक्षिष्यते ? ] ।

**राजा**—कोऽत्र दोषः ? ।

**पद्मावती**—**'अय्यउत्तस्स अवरो परिग्गहो'**त्ति उदासीणं विअ होदि ।

[ 'आर्यपुत्रस्याऽपरः परिग्रह' इत्यौदासीन्यमिव[1] भवति ] ।

अभिनवराजलक्ष्मीः

ज्ञातिकुलस्य = बन्धुवर्गस्य । यद्वा-बन्धुवर्गस्य=तातपरिवारस्य । 'ज्ञातिस्तातसगोत्रयो'रिति मेदिनी । कुशलवृत्तान्तं = मङ्गलप्रवृत्तिम् ! 'वार्त्ता प्रवृत्तिर्वृत्तान्तः'इत्यमरः । श्रोतुम् = आकर्णयितुम् । मे प्रियं=मम इष्टम् । इच्छार्थोपपदतया 'समानकर्त्तृकेष्वि'ति तुमुन् । रूपस्य योग्यम्—अनुरूपं = स्वोचितम् । वासवदत्तास्वजनः = वासवदत्ताबन्धुवर्गः । मे = मम पद्मावत्याः । आत्मगतमेतच्चिन्तनं राज्ञः, पद्मावतीमुद्दिश्योक्तं प्रकटं वा प्रशंसावाक्यमित्यवधेयम् । आस्यताम् = उपविश्यताम् । इदानीम् = सम्प्रति । आस्यते= स्थीयते । किमिति विलम्बः क्रियते ? उपविश तावादित्याशयः । उपविष्टः = स्थितः । एतं जनं = महासेनकञ्चुकिनं, वासवदत्ताधात्रीञ्च । वासवदत्तास्थाने

१ 'उदासीनमिवे'ति मुद्रितः पाठः । भावप्रधाननिर्देशेन-औदासीन्यं, विराग इति च तदर्थः । 'न श्लाघनीयं भवती'दि क्वचित्पाठः, स तु शोभनः ।

**राजा**—'कलत्रदर्शनार्हं जनं कलत्रदर्शनात् परिहरती'ति बहुदोषमुत्पादयति । तस्मादास्यताम् ।

**पद्मावती**—जं अय्यउत्तो आणवेदि (—उपविश्य) अय्यउत्त ! 'तादो वा अम्बा वा किं णु खु भणिस्सदि'त्ति आविग्गा विअ संवुत्ता ।

---

अभिनवराजलक्ष्मीः

मामवस्थितां दृष्ट्वा तद्बन्धुकुलागतस्य जनस्यावश्यमेव दुःखं भवेदेव, अतो मम भवता सहोपवेशनमत्र नोचितमित्याशयः ।

अत्र = मया सह तवोपवेशने । दोषः = हानिः । आर्यपुत्रस्य = भवतः । अपरः = द्वितीयः । परिग्रहः = भार्या । इति=इत्यतः । औदासीन्यं=इतोत्साहत्वमिव । 'धात्रीकाञ्चुकीययो'रिति शेषः । अनेन स्नेहशून्येन राज्ञा उदयनेन द्रागेव द्वितीयो विवाहः कृत इति विभाव्यौदासीन्यमिवास्य लोकस्य भवेदित्याशयः । 'उदासीनमिवे'ति मुद्रितः पाठः । अनभिमतमिव, अप्रियमिव चेति तदर्थो बोध्यः 'ण शिलाहणीअं' इति क्वचित्पाठः । 'न श्लाघनीय'मिति च तच्छाया । 'परिग्रहः कलत्रे च मूलस्वीकारयोरपि । शपथे परिवारे च राहुवक्रस्थभास्करे' इत्यजयः । कलत्रदर्शनार्हं = पत्नीदर्शनोचितम् । जनं = बन्धुबान्धवादिवर्गम् । परिहरति = वर्जयति । इति = इत्येवम्, इत्येतदिति वा । बहुदोषं = निन्दात्मकं महान्तं दोषम् । उत्पादयति = प्रकटयति । तस्मात् = अतो हेतोः । आस्यतां = मया सहैवोपविश । भवत्या सहैव तद्दर्शनं युक्तम्, औदासीन्यन्तु स्वल्पो दोषोऽन्यथाऽपि मार्जयितुं शक्य इत्याशयः ।

[ यदार्यपुत्र आज्ञापयति । आर्यपुत्र ! तातो वाऽम्बा वा किन्नु खलु भणिष्यतीत्याविग्नेव संवृत्ता ] ।

**राजा**—पद्मावति ! एवमेतत्—

**'किं वक्ष्यती'ति हृदयं परिशङ्कितं मे,**
**कन्या मयाऽप्यपहृता न च रक्षिता सा ।**

---

अभिनवराजलक्ष्मीः

तातः = वासवदत्तातातया मत्तातो महासेनः । अम्बा = अङ्गारवती च । किमिति । प्रियमप्रियं वा भणिष्यति = अभिधास्यतीति । आविग्नेव = शङ्कितेव, उद्विग्नेव च । संवृत्ता = जाताऽस्मि । अत्र वासवदत्तापितरौ स्वपितृतया निर्दिशति पद्मावती, बन्धुजनानुरागादेव ।

एवमेतत् = त्वदुक्तं सत्यमेव । उचितैव तेऽत्र शङ्का । न केवलं भवत्या एव, ममाप्यत्र हृदयं शङ्कितमिवेति सूचयन्नाह–किमिति ।

मे = ममापि । हृदयं = मनः । किं वक्ष्यतीति = तातो वाऽम्बा वा किं वाऽभिधास्यत इति शङ्कितं = जाताशङ्कम् । उद्विग्नम् – 'अस्ती'ति शेषः ।

ननु कुतस्ते शङ्केत्यत आह–कन्येति । कन्या = असञ्जातपाणिग्रहणा कुमारी । सा = प्रद्योतदुहिता वासवदत्ता । मया = अविनीतेन मया । अपहृता = तयोरननुमत्या चौर्येणेवापहृत्य कौशाम्बीमानीता । न च = नैव च । रक्षिता = यथावत्परिरक्षिता । अपहारात्मकं महान्तमपराधं कृत्वाऽपि तदनवेक्षणेनाऽपरमतीवाऽपराधं कृतवानस्मीत्याशयः ।

**भाग्यैश्चलैर्महदवासगुणोपघातः**
**पुत्रः पितुर्जनितरोष इवास्मि भीतः ॥४॥**

**पद्मावती**—[1]णकिं सक्कं रक्खिदुं पत्तकालं।

[ नकिं शक्यं रक्षितुं प्राप्तकालम् ]।

---

अभिनवराजलक्ष्मीः

अस्मात्कारणात्—चलैः = चञ्चलैः, अस्थिरैरिति यावत्। भाग्यैः = यौवनधनादिसौभाग्यैः। यौवनादिमदात्। नियतिविपर्ययात्। दुरदृष्टवशेनेति तु पर्यवसितोऽर्थः। अवाप्तः—गुणानां = सदाचारादीनाम्—उपघातः=भङ्गो येनासौ—अवाप्तगुणोपघातः = कृतोचितव्यतिक्रमः। [ यद्वा—महता प्रयत्नेन-वा, महद्भयो वा आवाप्ता लब्धा ये गुणाः—तेषाम्—उपघातः—नाशः अपरिरक्षणं च यस्येत्येवं विग्रहेण 'महदवाप्तगुणोपघात' इत्येकं पदमिति बोध्यम् ]।

अत एव-पितुः=स्वतातस्य। जनितः=उत्पादितो रोषो येनासौ तथाभूतः जनितरोषः = उत्पादितक्रोधः। पुत्रः = सुत इव। महत्=अत्यन्तम्। भीतोऽस्मि=जाताशङ्कोऽस्मि। 'पितु'रिति चात्रापि आकाङ्क्षावशाद्विभक्तिविपरिणामेनान्वेति। पितुर्भीतोऽस्मीति सम्बन्धः। यथा भाग्यदोषाद्विनाशितकार्यः पुत्रः पितुर्बिभेति एवं वासवदत्तापहरात्तस्या अकाल एवोपरमाच्चाहमपि महासेनाद्भीतोऽस्मीत्याशयः॥ ४॥

नकिं = नहि। 'नकि'मिति हि नियातो वर्जने वर्त्तते। केचित्तु—किं = किमपि वस्तु। कालं प्राप्तं—प्राप्तकालं = मृत्युवशङ्गतम्। विनाशकाले समुपस्थिते इति यावत्। रक्षितुं = परित्रातुम्। न शक्यं = नैव शक्यं,

---

१ 'ननु किं शक्य'मिति क्वचित्पाठः। तत्र नन्विति प्रश्ने। न शक्यमित्यर्थः।

**प्रतीहारी**—एसो कञ्चुईओ, धत्ती अ पडिहारं उवट्ठिदा।

[ एष काञ्चुकीयो, धात्री च प्रतीहारमुपस्थितौ ]।

**राजा**—शीघ्रं प्रवेश्यताम्।

**प्रतीहारी**—जं भट्टा आणवेदि। ( **निष्क्रान्ता** )।

[ यद्भर्ताऽऽज्ञापयति। ( निष्क्रान्ता ) ]।

**(ततः प्रविशति काञ्चुकीयो, धात्री, प्रतीहारी च)।**

**काञ्चुकीयः**—भोः !

**सम्बन्धिराज्यमिदमेत्य महान् प्रहर्षः,**

**स्मृत्वा पुनर्नृपसुतानिधनं विषादः।**

---

अभिनवराजलक्ष्मीः

केनापीत्यर्थमाहुः। एवञ्च विधेर्विधानेनैव भवत्कर्तृको वासवदत्ताऽपहारः, मृत्युश्च तस्या इति नात्रापराध्यत्यार्यपुत्र इति—महासेनस्य क्रोधोऽनुचित एवार्यपुत्रोपरीति हृदयम्। 'प्राप्तकाले' इत्यपि पाठः। काले = विनाशकाले, प्राप्ते = समायाते सतीत्येवं च तस्यार्थो बोध्यः।

उपस्थिताविति। भवदाज्ञां प्रतीक्षमाणौ द्वारदेशे तिष्ठत इत्यर्थः। 'अग्रे देवः प्रमाणं। यथोचितमाज्ञापयितुमर्हती'ति शेषः।

भो इति—आत्मोपनिमन्त्रणे। केचित्तु 'भो दैवे'त्येवं श्लोकगतेनाऽस्य सम्बन्धमिच्छन्ति। सम्बन्धीति। इदम् = एतत्। सम्बन्धिनो राज्यं—सम्बन्धिराज्यम् = उदयनराज्यम्। वत्सराज्यमिति यावत्। एत्य = उपेत्य। महान्=अतिशयितः। प्रमोदः=हर्षो मे जायते। पुनः = किन्तु। नृपस्य सुताया निधनं—नृपसुतानिधनं = महासेनपुत्र्या वासवदत्ताया मरणम्। स्मृत्वा =

किं नाम दैव ! भवता न कृतं यदि स्या-
द्राज्यं परैरपहृतं, कुशलञ्च देव्याः ! ॥५॥

**प्रतीहारी**—एसो भट्टा, उपसप्पदु अय्यो ।

[ एष भर्ता, उपसर्पत्वार्यः ] ।

**काञ्चुकीयः**—( **उपेत्य-** ) जयत्वार्यपुत्रः ।

**धात्री**—जेदु भट्टा ।

[ जयतु भर्ता ] ।

**राजा**—( **सबहुमानम्-** ) आर्य !

---

अभिनवराजलक्ष्मीः

विचिन्त्य । विषादः=महाञ्छोकश्च जायते । दैव=हे विधे ! । परैः=रिपुभिः । अपहृतं = बलात्स्वायत्तीकृतम् । राज्यं = वत्सराज्यम् । यदि=चेत् । स्यात् = यदा सम्प्रति सिद्धं तदैव । च = किञ्च—तदैव देव्याः = वासवदत्तायाअपि । कुशलं = मङ्गलम्, अविरहः । पुनरुज्जीवनं वा । 'स्यात्तर्हि'ति शेषः । भवता किं न कृतंस्यात् = भवता किं साधितं स्यात् ? । यद्यस्मिन्समये वासवदत्ताऽपि स्यात्तर्हि किमप्यभिलपणीयकमवशिष्टं न स्यात् । दैवानुकूल्येन जाते राज्यलाभे यदि सम्प्रति वासवदत्ताऽपि कुशलिनी स्यात्तर्हि कियान्प्रमोदः स्यादित्याशयः । तदेवं वासवदत्तामपनीय ननु विधे ! भवतैवायं काञ्चन-सौरभयोगोऽपिनाशित इति विधीरामस्तावदिति तत्त्वम् । एवञ्चेदममृतं विषसंसृष्टमिव मम न प्रमोदमावहतीत्यत्रधेयम् । वसन्ततिलकं वृत्तम् ॥५॥

राजानं प्रदर्श्य प्रतीहारी कञ्चुकिनमाह—एष इति । उपसर्पतु = सन्निधौ गच्छतु । उपेत्य = निकटे गत्वा । आर्यपुत्रः = महाराजः । [ आर्य-पुत्र = कँवरजी साहेब ] । भर्ता = स्वामी ।

**पृथिव्यां राजवंश्यानामुदयाऽस्तमयप्रभुः ।**
**अपि राजा स कुशली मयाऽऽकांक्षितबान्धवः ? ॥६॥**

**काञ्चुकीयः**—अथ किम्। कुशली महासेनः इहापि सर्वगतं कुशलं पृच्छति ।

**राजा—[ आसनादुत्थाय— ]** किमाज्ञापयति महासेनः ? ।

---

अभिनवराजलक्ष्मीः

सबहुमानं=बहुमानप्रदर्शनपूर्वकं सादरं पृच्छति । आर्य=कञ्चुकिन् । अस्य श्लोकेन सहैवान्वयः पृथिव्यामिति । पृथिव्यां= भूमण्डले । राज्ञां वंश्याः—राजवंश्याः, तेषां—राजवंश्यानां=राजवंशप्रभवानां नरपतीनां मध्ये । उदयश्च अस्तमयश्चतयोः—उदतास्तमययोः प्रभुः—उदयास्तमयप्रभुः = उदयास्तमय-स्वामी । उदयमारभ्य'अस्तमयपर्यन्तं यो भूभागस्तस्य स्वामीत्यर्थः । यस्य राज्ये सूर्यस्य उदयोऽस्तञ्च सममेव भवत इत्याशयः । केचित्तु—राजवंश्यानां=नृपतीनाम्-उदयास्तमययोः =अभ्युदयह्रासयोः, प्रभुः = स्वामी, सम्राडित्यर्थमाहुः ।

एवंभूतः सन्नपि स राजा—मया =उदयनेन सह । आकाङ्क्षितं बान्धवं येनासौ तथा—आकाङ्क्षितबान्धवः =अभिलषितबन्धुभावः । सर्वराजाधिपोऽपि यो मया सह वासवदत्ताद्वारकं सम्बन्धमैच्छदित्याशयः । राजा = प्रसिद्धा महासेनः प्रद्योतः । अपि कुशली =कुशलेन वर्त्तते किम् ? । अपिः प्रश्ने । किं कुशली तत्रभवान्महासेन इत्याशयः ॥ ६ ॥

अथ किम्=बाढम् । आम् । [ हाँ ] । इहापि = अत्रापि भवत्पक्षेऽपि । सर्वगतं =राज्यबन्धुबान्धवादिविषयकम् । आसनात् = सिंहासनात् । उत्थाय = सत्कारप्रदर्शनार्थमुत्थाय । एवं—कुशलप्रश्नानन्तरं [ महासेनेन विशिष्य किमपि सन्दिष्टं स्यात्तदेवं श्रोष्यामीति धिया—] विशिष्य वक्तव्यं श्रोतुं पृच्छति—किमिति । आज्ञापयति = आदिशति । [ कहिए महाराज महासेन की क्या आज्ञा है ? ] ।

**काञ्चुकीयः**—सदृशमेतद्वैदेहीपुत्रस्य। नन्वासनस्थेनैव भवता श्रोतव्यो महासेनस्य सन्देशः।

**राजा**—यदाज्ञापयति महासेनः। (–उपविशति)।

**काञ्चुकीयः**—दिष्ट्या परैरपहृतं राज्यं पुनः प्रत्यानीतमिति। कुतः—

**कातरा येऽप्यशक्ता वा नोत्साहस्तेषु जायते।**
**प्रायेण हि नरेन्द्रश्रीः सोत्साहैरेव भुज्यते ॥ ७ ॥**

---

अभिनवराजलक्ष्मीः

वैदेह्याः पुत्रः—वैदेहीपुत्रः तस्य—वैदेहीपुत्रस्य = मैथिलीपुत्रस्य। यस्य माता विनयादिविख्यातविदेहराजकुलोत्पन्ना तस्य उच्चकुलोत्पन्नस्य भवतः। एतत्=विनयादिकम्, ईदृशं वृद्धगुरुजनसत्कारप्रदर्शनञ्च। सदृशं = योग्यमेव।

नन्वित्यनुनये। भवन्मुखेन महासेनस्येयं प्रार्थनेति भावः। आसनस्थेन= सिंहासनएवोपविष्टेन भवता। श्रोतव्यः = श्रवणीयः। इति महासेनेनैव निर्धारितमित्याशयः। यदाज्ञापयति = भवन्मुखेन यथाऽऽदिशति महासेनस्तथैव विधास्ये।

महासेनसन्देशमिदानीमुपन्यस्यति–दिष्ट्येति। दिष्ट्या = प्रहृष्टा वयम्। यद्वा—दृष्ट्या = सौभाग्येनेत्यर्थः। परैः = शत्रुभिः। अपहृतं=बलात्स्वायत्तीकृतम्। राज्यं = वत्सराज्यम्। प्रत्यानीतं = प्रत्याहृतम्भवता। शत्रून्विजित्य भवता पुनरधिकृतमिति यावत्। कुतः = कस्मात्। अत एव हर्षः—यत्। (अस्य श्लोकेन सहैवान्वयो बोध्यः)।

कातराइति। ये = ये नृपाः। कातरा = बलवन्तोऽपि भीरुस्वभावाः। अपि वा=किंवा। अशक्ताः=निर्बलाः। तेषु=कातरेषु, निर्बलेषु च राजसु। उत्साहः=अध्यवसायः। न जायते=नैवोत्पद्यते। अतोऽध्यवसायसिद्धये धैर्यं बलञ्चात्मनि सम्पादनीयमित्याशयः। हि = यतः। प्रायेण = बहुधा। नरेन्द्राणां श्री—नरेन्द्रश्रीः = राजलक्ष्मीः। सोत्साहैः =

**राजा**—आर्य ! सर्वमेतन्महासेनस्य प्रभावः । कुतः—

**अहमवजितः पूर्वं तावत्सुतैः सह लालितो ,**
**दृढमपहृता कन्या भूयो मया न च रक्षिता ।**

---

अभिनवराजलक्ष्मीः

अध्यवसायपरैरेव । भुज्यते = अनुभूयते । अतो राजलक्ष्मीसिद्ध्यै उत्साहोऽवश्यं विधेयः, स च धैर्येण बलेन च विना न सम्भवतीति—धीरेण बलवता च राज्ञा भाव्यमित्याशयः । धैर्येण बलेन च भवता पुना राज्यं लब्धमिति वयमेतद्वीक्ष्य प्रहृष्टाः स्म इति भावः । अप्रस्तुतप्रशंसा नामालङ्कारः ॥ ७ ॥

इत्थं स्वप्रशंसां श्रुत्वा राजा विनयमात्मनो दर्शयन्नाह—सर्वमिति । एतत्सर्वं = शत्रुसंहारराज्यलाभादिकम् । प्रभावः = अनुभावः । सामर्थ्यम् । तदनुभावेनैव मया वत्सराज्यं पुनर्लब्धमित्याशयः । महासेनप्रभावलब्धत्वमेव राज्ये सूचयन्नाह—कुत इति । यत इत्यर्थः । अहमिति ।

[ अन्वयः ] पूर्वन्तावत् अवजितः अहं सुतैः सह दृढं लालितः । (परन्तु-) मया (तस्य) कन्या दृढम् अपहृता, भूयः न च रक्षिता । च—तस्या निधनं श्रुत्वा अपि तस्य मयि तथैव स्वता । ननु उचितान् वत्सान् प्राप्तुं यत् ( किञ्चिदपि मयि वर्त्तते ) अत्र नृपः कारणम् ।

[ अर्थः ] पूर्वं तावत् = पुरा विन्ध्याटव्यां गजग्रहणकाले । अवजितः= पराजितो निगृहीतश्च । अहम् = उदयनः । सुतैः सह = स्वापत्यैर्वासवदत्ता-गोपालक-पालकाख्यैः सहैव । सुतनिर्विशेषमिति यावत् । दृढं = बितराम् । लालितः = सस्नेहं परिपालितः । पराजित्य निगृहीतोऽप्यहं शत्रुभावेन कारागृहादौ न निक्षिप्तः, किन्तर्हि पुत्रवत्परिपालितो नृपेण महासेनेनेत्यहो ! मयि आदित एव तस्य वात्सल्यभावः । एवन्तथा परिलालितेनापि—मया=खलेन दुर्वृत्तेन च मया उदयनेन । कन्या = तत्कन्या । महासेनदुहिता वासवदत्ता । दृढं = बलात्कारेण । 'दृढ'मिति देहलीदीपकन्यायेनोभयत्रान्वेति ।

**निधनमपि च श्रुत्वा तस्यास्तथैव मयि स्वता,**
**ननु यदुचितान्[1] वत्सान् प्राप्तुं नृपोऽत्र हि कारणम् ॥९॥**

अभिनवराजलक्ष्मीः

अपहृता = अपहृत्य स्वदेशमानीता। एवमुपकारपरस्याऽपि तस्य नृपतेर्मया कन्या बलादपहृतेति—किं वक्तव्यं मेऽनुचितकारित्वं, कृतघ्नत्वञ्चेति भावः। एवं वदता राज्ञा स्वाविनयं प्रकटितम्।

भूयः=पुनश्च अपहृत्यापि। न च रक्षिता=न यथावदवेक्षिता, परिपालिता च। मदपराधादेव देवी वासवदत्ता वह्नौ प्रदग्धेत्याशयः। अपहृत्याऽपि तत् कन्यारत्नं यथावन्मया न परिरक्षितमित्यपरमनौचित्यं मे इति गूढोऽर्थः।

च=किञ्च। तस्याः=स्वदुहितुर्वासवदत्तायाः। निधनं = मरणवृत्तान्तम्। श्रुत्वाऽपि=आकर्ण्यापि। मयि=सर्वतोभावेन अपराधिनि उदयने। तथैव=पूर्ववदेव। स्वपुत्रवदेवेति यावत्। 'महासेनस्ये'ति शेषः। स्वता=ममता, वात्सल्यम्। 'अस्ती'ति शेषः। 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये' इत्यमरः।

ननु=इत्यवधारणे। निश्चितमेतत्, नात्राल्पोऽपि सन्देहः। उचितान्=मदीयान्, शत्रुभिरपहृतान्, वंशपरम्पराप्राप्तत्वेन मदुचितान्। वत्सान् = वत्सदेशराज्यम्। प्राप्तुं=पुनरधिगन्तुम्। यत् = यदावश्यकमुपकरणं धैर्यबलोत्साहादिकं मयि वर्त्तते। यद्वा—तान्प्राप्तुं 'यत्समर्थोऽहं जात'इति शेषो बोध्यः। 'शकधृषे'ति तुमुन्। अत्र = अस्मिन्विषये। नृपो हि – महासेनः प्रद्योतमहाराज एव। कारणं=हेतुः। तत्कृपयैव मयि उत्साहादिसमुद्भव इत्याशयः।

[ भावार्थः ] महासेनप्रभावेणैवाहं निर्भयः सन् पद्मावतीविवाहादिना प्राप्तदर्शकसाहाय्यो रिपून्विनाशयितुं राज्यञ्च स्वं पुनः प्रत्यानेतुं शक्तोऽ-

---

१ अत्र—'यदुचितान्' इति मुद्रितः पाठः। गौडास्तु—'यदुचितः' इति पठन्ति। तत्र वत्सान् प्राप्तुं यदहमुचितः = समर्थो जातोऽस्मीत्यर्थः। 'यदुचित'मिति वा पाठः स्यात्।

**काञ्चुकीयः**—एष महासेनस्य सन्देशः । देव्याः सन्देशमिहाऽत्र-भवती कथयिष्यति ।

**राजा**—हा अम्ब ! ।

अभिनवराजलक्ष्मीः

भूवम् । यदि कृतानेकापराधोऽहं महासेनेन नृपेण तदा कारागारादिषु निक्षिप्तः स्यान्तर्हि कुतस्तावत्पद्मावतीपरिणयः, कुतस्तराञ्च पुनर्वत्सराज्यलाभस्य वार्त्ताऽपि । एवञ्च महासेनकृपयैव कृतापराधेनाऽपि मया ततो निग्रहमप्राप्तेन पद्मावतीपरिणयपूर्वकं दर्शकसाहाय्यं लब्ध्वा वत्साः प्राप्ता इत्याशयः ।

गौडास्तु[1]–'उचितान् वत्सा'निति मुद्रितं पाठं भ्रष्टं मन्यमानाः–'ननु यदुचितो वत्सान्प्राप्तुं—नृपोऽत्र हि कारण मिति पठन्ति । उचितः = समर्थः । तत्र–'वत्सान् प्राप्तुं शक्तोऽहं यज्जातोऽस्मि, अत्र नृपः कारण'मिति च तस्य सरलोऽर्थः । 'उचितं तु स्वभावे क्ली निश्चिताभ्यस्तयोः पुनः । त्रियुक्तेऽनुमते योग्ये'इति केशवः । 'उचितं विदितेऽभ्यस्ते मते युक्ते त्रिषु' इति हैमः । 'शकधृषे'ति तुमुन् । अयमेव च पाठो युक्तः, कविसम्मतश्च भाति । केवलं शोधकमहापण्डितैः स्वबुद्धिप्रामाण्येणान्यथा शोधित इत्याहुः ।

हरिणीवृत्तम्, तल्लक्षणञ्च 'रसयुगहयेर्न्सौ म्रौ स्लौ गो यदा हरिणी-तदा'इति वृत्तरत्नाकरे ॥ ८ ॥

एषः=पूर्वोक्तोऽयम् । सन्देशः=वाचिकम् । देव्या = महासेनमहिष्या अङ्गारवत्याः । इह = भवत्सन्निधौ । अत्रभवती = माननीया वासवदत्ताधात्री वसुन्धरा च । वासवदत्तावियोगार्त्तो राजा देव्या नाम श्रुत्वैव वासवदत्ता-स्मरणेन कष्टानुभवं नाटयति–हेति । हा = कष्टमतिकष्टम् । अम्ब=मातः ! ।

१ 'ननु यदुचितो वत्सान्प्राप्तु'मिति गौडाः पठन्ति । उचितः=समर्थः ।

**षोडशान्तःपुरज्येष्ठा पुण्या नगरदेवता ।**
**मम प्रवासदुःखार्त्ता माता कुशलिनी ननु ? ॥६॥**

**धात्री—**अरोआ भट्टिणी भट्टारं सव्वगदं कुसलं पुच्छदि ।

[ अरोगा भट्टिनी भर्तारं सर्वगतं कुशलं पृच्छति ]।

---

अभिनवराजलक्ष्मीः

नास्तीदानीं वासवदत्ता, अस्मद्दैवदुर्विपाकात्—उपरता खलु वासवदत्ता । यद्वा—हा अम्ब = त्वां शोचामीत्यर्थः । हा देवि ! अनेन पुत्रीवियोगेन त्वं शोचनीयासि संवृत्तेति च हृदयम् ।

शोकाभिनयानन्तरं रुदन्नेव वासवदत्तामातुरङ्गारवत्याः कुशलं पृच्छति—षोडशेति ।

[ अन्वयः ] षोडशान्तःपुरज्येष्ठा, पुण्या नगरदेवता, मम प्रवासदुःखार्त्ता [ मम ] माता कुशलिनी ननु ? ।

[ विग्रहः ] षोडश अन्तःपुराणि—षोडशान्तःपुराणि, तेषु ज्येष्ठा-षोडशान्तःपुरज्येष्ठा । प्रवास एव दुःखं तेन आर्त्ता—प्रवासदुःखार्त्ता । कुशलमस्त्यस्याः—सा कुशलिनी ।

[ अर्थः ] षोडशान्तःपुरज्येष्ठा = षोडशसङ्ख्याक-महासेनपत्नी-प्रधान-भूता । पट्टमहिषीति यावत् । [एतेन महासेनस्य षोडश भोगिन्य आसन्निति सूचितम् ]। पुण्या-पवित्रशीला । नगरस्य देवतेव—नगरदेवता = उज्जयिनीपुरीप्रधानदेवतेव [ = गौरीव-] पातिव्रत्येन शोभमाना । [उज्जयिनी-नगरदेवो महाकालः, नगरदेवता च—तत्र महागौरीत्यवधेयम् । ]

मम प्रवासदुःखार्त्ता=उज्जयिन्याः पलायितस्य मम-प्रवासेन=विरहेण दुःखिता । वासवदत्तामादाय ततोऽपयातस्यापि ममोपरि स्नेहेन उत्कण्ठितेति यावत् । माता = मम श्वश्रूरङ्गारवती । कुशलिनी ननु = क्षेमयुक्ता अरोगा—अस्ति किम् ? ॥ ६ ॥

**राजा**—'सर्वगतं कुशल'मिति ? । अम्ब ! ईदृशं कुशलम् ! ।

**धात्री**—मा दाणिं भट्टा अदिमत्तं सन्तप्पिदुं ।

[ मेदानीं भर्ताऽतिमात्रं संतप्तुम् ] ।

**काञ्चुकीयः**—धारयत्वार्यपुत्रः । उपरताऽप्यनुपरता महासेनपुत्री एवमनुकम्प्यमानाऽऽर्यपुत्रेण ।

---

अभिनवराजलक्ष्मीः

वासवदत्तामरणश्रवणदुःखितायास्तस्याः कुतः कुशलम् ? । न केवलं रोगशून्यत्वेन शरीराऽस्वास्थ्याभावादेव कुशलं मन्तव्यमित्याशयेनाह—**अरोगेति** । अरोगा = रोगरहिता । भट्टिनी = स्वामिनी अङ्गारवती । भर्त्तारं = भवन्तम् । सर्वगतं = सर्वपरिजनादिविषयकम् । 'कुशलं क्षेममस्त्रियाम्' इत्यमरः । 'अकथितञ्चे'ति भर्त्तुः कर्मसञ्ज्ञा । द्विकर्मकः पृच्छतिः ।

'भट्टिनी सर्वगतं कुशलं पृच्छति'-इति श्रुत्वा राजा सशोकं तावदाह—**सर्वगतमिति** । 'अम्ब' इत्यादिः । अम्ब ! 'सर्वगतं कुशलम्'-इति = इत्येवम् । 'पृच्छसी'ति शेषः । मातः ! किं सर्वगतं कुशलं पृच्छसि ? । तर्हि शृणु-अम्ब = मातः ! । ईदृशं = वासवदत्तया प्राणप्रियया विरहितोऽपि जीवामीत्येतादृशम् । कुशलं = मङ्गलम् । 'अत्र जानीहि' इति शेषः ।

गौडास्तु—'सर्वगतं कुशलम् ? । इह 'अम्ब ! ईदृशं कुशलम्–'इत्येवं पठन्ति । 'सर्वगतं कुशल' मित्यस्य च 'किंपृच्छसी'ति शेषः ।

इदानीम् = उपरतायां वासवदत्तायाम् । अतिमात्रं = भृशम् । 'अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भर'मित्यमरः । सन्तप्तुं = सन्तापं कर्त्तुम् । मा = नहि । 'अर्हती'ति शेषः । 'मा इदानीं भर्त्ता अतिमात्रं सन्तप्यतु' इति गौडाः पठन्ति । धारयतु = धैर्यमवलम्बतान्तावत् । -'शोकवेगं धारयतु भवा'निति वा । एवम् = इत्थं मुहुर्मुहुः । आर्यपुत्रेण = भवता । अनुकम्प्यमाना = सशोकं सदयञ्च स्मर्यमाणा । महासेनपुत्री = प्रद्योतदुहिता

अथवा,—

**कः कं शक्तो रक्षितुं मृत्युकाले ?,**
**रज्जुच्छेदे के घटं धारयन्ति ? ।**

अभिनवराजलक्ष्मीः

वासवदत्ता । उपरताऽपि = देवलोकङ्गताऽपि, मृताऽपि । अनुपरतैव = जीवत्येव । मृताऽपि जीवत्येव यां भवादृशो भर्त्ता एवं सकरुणं स्मरतीत्याशयः । 'उपरताऽप्यनुपरते' त्यनेन तस्याः पुनर्लाभोऽपि गूढं सूचितः ।

'मदपराधादेव वासवदत्तामृते'ति शोचन्तं सान्त्वयति—**अथवेति** । किञ्चेत्यर्थः । **क इति** ।

[ अन्वयः ] मृत्युकाले कः कं रक्षितुं समर्थः ? । रज्जुच्छेदे घटं के धारयन्ति ? । एवं वनानां तुल्यधर्मा लोकः काले छिद्यते, काले रुह्यते च । [ यद्वा काले काले छिद्यते, काले काले रुह्यते चेत्यन्वयः ] ।

[ अर्थः ] मृत्युकाले = मरणसमये उपस्थिते सति । कः = नानाविधमुपायं विदधानोऽपि कः खलु पुमान् । कं = कं किल शरीरिणम् । रक्षितुं = मृत्योः परित्रातुम् । शक्तः = समर्थः ? । मृत्युकाले समागते सति न कोऽपि जनः कमपि रक्षितुं समर्थ इति भावः ।

एतदेवोपपादयति **रज्जुच्छेदे इति** । रज्जोः = घटादिबद्धस्य गुणस्य-छेदः—रज्जुच्छेदः, तस्मिन्—रज्जुच्छेदे = वरत्राभङ्गे जाते सति । घटं = कूपे निपतन्तं कुम्भम् । के धारयन्ति = के नाम अवस्थापयितुं समर्थाः ? । न केऽपि धारयितुं समर्थाः । रज्जुलम्बितो हि घटः कूपे जलानयनार्थमधः प्रक्षिप्यमाणो रज्जुच्छेदे नूनं कूपे पतत्येव, न केनाप्यवरोद्धुं शक्यते । एवमेव यावदायुष्यं सर्वे प्रयत्नाः सिद्धियान्ति, आयुषः क्षये तु प्रयत्नसहस्रै-

**एवं लोकस्तुल्यधर्मा वनानां,**
**काले काले छिद्यते रुह्यते च ॥ १० ॥**

अभिनवराजलक्ष्मीः

रप्युपचर्यमाणो न जीवतीति—वासवदत्ताया आयुषः क्षयादेवोपरमो न भवदपराधेनेत्यलं चिन्तयेत्याशयः ।

एवम् = अनेन प्रकारेण शरीरिणां दैवाधीनतया । वनानाम्=अरण्यस्थ-वृक्षाणाम् । वृक्षसमूहो हि—अरण्यम् । तुल्यो धर्मो यस्यासौ—तुल्यधर्मा[1] = समानस्वभावः । स्वभावस्तु अनुपदं वक्ष्यमाणः । 'धर्मः पुण्ययमन्याय-स्वभावाचारसोमपाः' इत्यमरः । अत्र 'तुल्यधर्मः' इति मुद्रितः पाठस्तु शोधकप्रतिभोद्भूत एव, नात्र महाकविरपराध्यति । लोकः = संसारः । प्राणि-मात्रमिति यावत् । लोकवनयोः साधारणं धर्मं निर्दिशति—काले इति । काले-काले = समये-समये । यथायथं । छिद्यते = लूयते । विनश्यतीति यावत् । एवं—काले = स्वोचिते काले च । रुह्यते = पुनरुद्भवति च ।

[ भावार्थः ] रज्जुलम्बितकलसवद्दैवपरतन्त्रोऽयं संसारः । यथा—रज्जुच्छेदे कूपे पतन्तं कलसं निरोद्धुं न कोऽपि समर्थस्तथा आयुषोऽभावे म्रियमाणं प्राणिनं ब्रह्माऽपि परित्रातुं न प्रभुः । अदृष्टवशादेव वृद्धिह्रासौ जगतो भवतोऽरण्यस्थवृक्षादिवदिति वासवदत्ताविषये शोको न कार्यः, यतो जगत ईदृश्येव गतिरिति भावः । दृष्टान्ताऽलङ्कारः । शालिनीवृत्तम् ॥१०॥

आर्य = कञ्चुकिन् । मामैवम् = एवं मा वद । वासवदत्ताशोको मया न विहातुं शक्य इत्याशयः । महासेनस्येति ।

---

१ 'तुल्यधर्मा' इत्यत्र 'धर्मादनिच्केवला'दित्यनिच् । 'तुल्यधर्म' इति तु मुद्रितः पाठः । तत्राऽनिजभावश्चिन्त्यः ।

**राजा**—आर्य ! मा मैवम् ,—

**महासेनस्य दुहिता शिष्या देवी च मे प्रिया ।**
**कथं सा न मया शक्या [1]स्मर्तुं देहान्तरेष्वपि ? ॥११॥**

**धात्री**–आह भट्टिणी–"उवरदा वासवदत्ता । मम वा महासेणस्स वा जादिसा गोवालअपालआ तादिसा एव्व तुमं पढमं एव्व अभिप्पेदो जामादुअ"त्ति । एदण्णिमित्तं उज्जइणिं आणीदो । अणग्गिसक्खिअं वीणाववदसेण दिण्णा । अत्तणो चवलदाए अणिव्वुत्तविवाहमंगलो एव्व गदो । अहअ—अह्मेहिं तव अ

अभिनवराजलक्ष्मीः

[ अन्वयः ] महासेनस्य दुहिता मे शिष्या देवी च प्रिया । सा देहान्तरेष्वपि मया स्मर्तुं कथं न शक्या ? ।

[ अर्थः ] महासेनस्य=प्रद्योतस्य । दुहिता=पुत्री । मे=मम । शिष्या=प्रियशिष्या । वासवदत्तया वीणावादनमुदयनादेव शिक्षितमिति पुराविदः ।

किञ्च मे–देवी=महिषी । 'देवी कृताऽभिषेकाया'मित्यमरः । च=पुनः । प्रिया = प्राणवल्लभा । आसीदिति शेषः । सा = ईदृशी खलु वासवदत्ता । अन्ये देहाः–देहान्तराणि, तेषु—देहान्तरेषु = जन्मान्तरेष्वपि । मया = उदयनेन स्मर्तुं = विचिन्तयितुम् । कथं = केन प्रकारेण । न शक्या = न शक्यते । अपि तु स्मर्तुं योग्यैवेत्याशयः । इह जन्मनि सा मया विस्मर्तुं न शक्यते । इति तत्त्वम् ।

'कथं सा नु मया शक्या त्यक्तुं देहान्तरेष्वपि' इति तु गौडाः पठन्ति । त्यक्तुं = विस्मर्तुम् । जन्मान्तरेष्वपि तामहं त्यक्तुं विस्मर्तुञ्च न शक्नोमीत्याशयः । एवञ्च 'रज्जुच्छेदे के घटं धारयन्ती'ति भवदुक्तं नात्र युक्तं मन्ये इत्याशयः ।

आह = सर्वगतकुशलजिज्ञासानन्तरमित्थमाह । भट्टिनी = स्वामिनी

१ कथं सा नु मया शक्या त्यक्तुं देहान्तरेष्वपि' इति तु गौडाः पठन्ति ।

वासवदत्ताए अ पडिकिदि चित्तफलआए आलिहिअ विवाहो णिव्वुत्तो । एसा चित्तफलआ तव सआसं पेसिदा । एदं पेक्खिअ णिव्वुदो होहि ।

[ आह भट्टिनी—"उपरता वासवदत्ता । मम वा महासेनस्य वा यादृशौ गोपालक-पालकौ, तादृश एव त्वं प्रथममेवाभिप्रेतो 'जामाते'ति । एतन्निमित्तमुज्जयिनीमानीतः । अनग्निसाक्षिकं वीणाव्यपदेशेन दत्ता । आत्मनश्चपलतयाऽनिर्वृत्तविवाहमङ्गल एव गतः । अथ च आवाभ्यां

---

अभिनवराजलक्ष्मीः

अङ्गारवती । उपरता = देवलोकङ्गता । वासवदत्ता = मत्पुत्री । मम = अङ्गारवत्याः । महासेनस्य वा=महासेनापरनामधेयस्य प्रद्योतमहाराजस्य वा । यादृशौ = यथा प्रियौ । गोपालक—पालकनामानौ महासेनस्य पुत्रौ । तादृश एव = पुत्रतुल्य एव । त्वम् = उदयनः । प्रथममेव = आदावेव । त्वत्कर्तृकाद्वासवदत्ताऽपहारात्पूर्वमेव । जामातेति = वासवदत्ताया दुहितुः पतिरिति । अभिप्रेतः = मनसा कल्पितः, हृदिस्थितः । वृथैव त्वया विनयेन वासवदत्ताऽपहृता, अस्माभिस्तु वासवदत्तापतित्वेन त्वमादावेव कल्पित-इत्याशयः । एतन्निमित्तमेव = वासवदत्ताविवाहनिष्पादनायैव, एतन्मनोरथ-सिद्ध्यर्थमेव च । उज्जयिनीमानीतः = कपटहस्तिव्याजेन बद्ध्वा मालवराज-धानीमुज्जयिनीमानीतस्त्वम् । वीणायाः = वीणावादनशिक्षायाः । व्यपदेशेन = छलेन । नास्ति—अग्निः साक्षी यत्र तत्— अनग्निसाक्षिकं = अग्निसाक्षि-वर्जम् । दत्ता = समर्पितैव । 'वासवदत्तां शिक्षये'त्युक्त्वा त्वद्धस्ते ददद्भ्या-मावाभ्यामग्निसाक्षिवर्जं दत्तैव तुभ्यं वासवदत्ताऽऽसीदित्याशयः ।

आत्मनश्चपलतया = स्वस्यैव बालचापलेन, असमीक्ष्यकारितया, अधीरतयेति यावत् । न निर्वृत्तं = न संवृत्तं विवाह एव मङ्गलं यस्यासौ—

तव च वासवदत्तायाश्च प्रतिकृतिं चित्रफलकायामालिख्य विवाहो निर्वृत्तः। एषा चित्रफलका तव सकाशं प्रेषिता। एनां प्रेक्ष्य निर्वृत्तो भव। ]

**राजा**—अहो! अतिस्निग्धमनुरूपं चाभिहितं तत्रभवत्या।

**वाक्यमेतत्प्रियतरं राज्यलाभशतादपि।**
**अपराद्धेष्वपि स्नेहो यदस्मासु न विस्मृतः॥१२॥**

अभिनवराजलक्ष्मीः

अनिर्वृत्तविवाहमङ्गल एव = असम्पन्नविवाहकौतुक एव। गतः = वासवदत्तामादाय प्रच्छन्नं कौशाम्बीम्प्रति गतः। अथ च = एवमधीरतया गते च त्वयि, तदनन्तरम्। आवाभ्यां = अङ्गारवतीमहासेनाभ्याम्। प्रतिकृतिं = मूर्त्तिं, प्रतिमाम्। चित्रफलिकायां = चित्राधारभूते पत्र—वस्त्र—काष्ठफलकादौ। आलिख्य = उत्कीर्य, विधाय। निर्वृत्तः = सम्पादितः। युवयोः = वासवदत्तोदयनयोः।

'चित्रफलक'मिति पाठं गौडा मन्यन्ते। 'फलका'मित्यत्र तु क्षिपकादेराकृतिगणत्वादित्त्वं नेत्यवधेयम्। तव = उदयनस्य। सकाशं = समीपे। प्रेषिता = प्रहिता। एनां = चित्रफलकाम्। वासवदत्ताप्रतिकृतिमिति यावत् प्रेक्ष्य = दृष्ट्वा। निर्वृत्तः = सुखितः। चित्रफलकलिखितां वासवदत्तामूर्त्तिं दृष्ट्वा मनसि धैर्यं बधानेति यावत्।

देव्याः सन्देशं श्रुत्वा राजा प्रशंसन्नाह—अहो इति = अहो इत्याश्चर्ये। अतिस्निग्धम् = अतिस्नेहसंसिक्तम्। अनुरूपञ्च = गुरुजनोचितञ्च। अभिहितम् = आदिष्टम्, उक्तम्। तत्र भवत्या = पूजनीयया मम श्वश्र्वा अङ्गारवत्या।

अतिस्निग्धतामेव सन्देशवाक्यस्य विशदयति—वाक्यमिति।

[ अन्वयः ] एतत् वाक्यं राज्यलाभशतादपि प्रियतमम् यत्—अपराद्धेष्वपि अस्मासु स्नेहो न विस्मृतः।

**पद्मावती**—अय्यउत्त ! चित्तगदं गुरुअणं पेक्खिअ अभिवादेदुं इच्छामि ।

[ आर्यपुत्र ! चित्रगतं गुरुजनं प्रेक्ष्याऽभिवादयितुमिच्छामि ] ।

**धात्री**-पेक्खदु-पेक्खदु भट्टिदारिआ । **(चित्रफलकां दर्शयति)** ।

[ प्रेक्षतां प्रेक्षतां भर्तृदारिका । ( -चित्रफलकां दर्शयति ) ] ।

**पद्मावती**—( **दृष्ट्वाऽऽत्मगतम्**- ) ! हं अदिसदिसी खु इअं अय्याए आवन्तिआए ! । ( **प्रकाशम्**- ) अय्यउत्त ! सदिसी सु इअं अय्याए ? ।

[ दृष्ट्वा आत्मगतम्- ) हम् ! अतिसदृशी खल्वियमार्याया आव-

अभिनवराजलक्ष्मीः

[ अर्थः ] एतत् = भवन्मुखेन मया श्रुतम् । वाक्य = श्वश्रूसन्देशवाक्यम् । राज्यस्य लाभो राज्यलाभस्तस्य शतं, तस्मात्—राज्यलाभशतादपि = परश्शताद्राज्यलाभादपि । प्रियतरं = हृद्यतरम् । यत् = यस्मात्कारणात् । अपराद्धेष्वपि=कृतापराधेऽपि । मयि=उदयने । स्नेहः=वात्सल्यम् । न विस्मृतः = न परित्यक्तः । स्नेहसंसिक्तमङ्गारवत्या सन्दिष्टं श्रुत्वा परं प्रहृष्टोऽस्मीत्याशयः ॥ १२ ॥

आर्यपुत्र ! स्वामिन् । चित्रगतं = चित्रलिखितम् । गुरुजनं = वासवदत्तां ज्येष्ठां मे सपत्नीम् । अभिवादयितुं = प्रणन्तुम् । 'पश्यतु—पश्यत्वि'ति सम्भ्रमे आदरे च द्वित्वम् । चित्रफलकां = वासवदत्ताचित्रम् । दृष्ट्वा = वासवदत्ताचित्रं दृष्ट्वा । आत्मगतम् = स्वमनसि । अन्याऽश्राव्यतयेति यावत् । 'अश्राव्यं खलु यद्वस्तु तदिह स्वागतं मत'मिति विश्वनाथः । 'ह'मिति स्मरणे, शङ्कायां, विनिश्चये वाऽव्ययम् । अतिसदृशी = नितरां सदृशी ।

न्तिकायाः ! । ( प्रकाशम्– ) आर्य्यपुत्र ! सदृशी खल्वियमार्यायाः ? ] ।

**राजा**—न सदृशी, सैवेति मन्ये । भोः कष्टम्—

**अस्य स्निग्धस्य वर्णस्य विपत्तिर्दारुणा कथम् ? ।**
**इदञ्च मुखमाधुर्य्यं कथं दूषितमग्निना ? ॥ १३ ॥**

अभिनवराजलक्ष्मीः

खलु = निश्चयेन । इयं = प्रतिकृतिः । आर्यायाः=ब्राह्मणभगिन्याः । प्रकाशं= सर्वश्राव्यं यथा स्यात्तथा पृच्छति—आर्यपुत्रेति । स्वामिन् ! येयं प्रतिकृतिरुज्जयिन्या आयाता सा किम् आर्यायाः वासवदत्तायाः सदृशी, उत नैवेति प्रश्नाशयः । खलु इति प्रश्ने ।

न सदृशी=न केवलं सदृशी एव । किन्तर्हि–सैवेति=वासवदत्ता साक्षादेव सन्मुखमुपस्थितेति । मन्ये = विभावयामि । एवञ्च इयं प्रतिकृतिश्चित्रकारेण नितरामेव वासवदत्ताऽनुकारिणी लिखिता, नेतो वासवदत्तायाः कोऽपि भेद इत्याशयः । चित्रं दृष्ट्वा कष्टं नाटयन्नाह–भो इति । भो इति दैवोपालम्भे । कष्टम् = दुःखम् । महदनौचित्यं विधेरिति यावत् । अस्येति ।

[ अन्वयः ] स्निग्धस्य अस्य वर्णस्य दारुणा विपत्तिः कथम् ? । च— इदं मुखमाधुर्यम् अग्निना कथं दूषितम् ? ।

[ अर्थः ] स्निग्धस्य = सरसस्य, नयनाभिरामस्य, लावण्यपरिपूर्णस्य च । सामुद्रिकोक्तविशिष्टस्नेहपरिपूर्णस्येति वा । अस्य = पुरतोविभाव्यमानस्य । वर्णस्य = वासवदत्तारूपस्य । दारुणा=भीषणा । विपत्तिः=अग्निदाहेनाकालमृत्युरूपा विपत्तिः । कथं=कथं जाता ? । सामुद्रिकशास्त्रप्रामाण्येन ईदृशमुखश्री–च्छाया-स्नेहादिपरिपूर्णाया रूपसम्पद्विशिष्टाया अकालमृत्योरसम्भावादस्या अकालमृत्युः कथं जात इति वितर्कः । यद्वा—नेदृशं रूपं न तादृशीं विपत्तिमर्हतीति योजनीयम् । इदं = चित्रे स्पष्टं प्रतीयमानम् । मुखमाधुर्यम्=

**पद्मावती**—अय्यउत्तस्स पडिकिदिं पेक्खिअ जाणामि—'इअं अय्याए सदिसी ण वे'त्ति ।

[ आर्यपुत्रस्य प्रतिकृतिं प्रेक्ष्य जानामि—'इयमार्यायाः सदृशी न वे'ति ] ।

**धात्री**—पेक्खदु—पेक्खदु भट्टिदारिआ !

[ प्रेक्षतां—प्रेक्षतां भर्तृदारिका ] ।

**पद्मावती**—(दृष्ट्वा—) अय्यउत्तस्स पडिकिदीए सदिसदाए जाणामि—'इअं अय्याए सदिसि'त्ति ।

---

अभिनवराजलक्ष्मीः

मुखसौन्दर्यम् । [यह भोला-भाला मुखड़ा] । अग्निना = लावणकग्रामदाहप्रवृत्तेन वह्निना । कथं = कथमिव । दूषितं = विनाशितम् ? । हा दैवं धिक् ! येनेदृशी विधेरपूर्वा माधुर्यघटिता विभूतिरकाले एव नाशितेत्याशयः ॥१३॥

राज्ञा कथितं—'न सदृशी, सैवेति मन्ये' इति वाक्यं श्रुत्वाऽपि तत्र विरहाकुलितचित्तस्य यथावन्निर्णेतुमशक्तस्य राज्ञो वचसि यथावद्विश्वासमकृत्वैव पद्मावती तावदाह—आर्यपुत्रस्येति । आर्यपुत्रस्य = भर्तुरुदयनस्य । प्रतिकृतिं = प्रतिमां । चित्रमिति यावत् । जानामि = अवगच्छामि । इयं = मद्धस्तस्थिता वासवदत्ताप्रतिकृतिः । आर्यायाः = वासवदत्तायाः । सदृशी = तुल्या । नवा = नैव सदृशीति वा । इयं प्रतिमा वासवदत्ताया एव, अन्यस्या वेति निश्चिनोमीत्यर्थः ।

यदि आर्यपुत्रस्य प्रतिकृतिरार्यपुत्रेण सदृश्येव स्यात्तर्हि तेनैव चित्रकारेण निर्मिता आर्याया वासवदत्ताया अपि प्रतिकृतिस्तादृश्येव भवेत् । एवञ्चोदयनप्रतिकृतिं दृष्ट्वा वासवदत्ताप्रतिकृतेरपि कीदृशं कियद्वा सादृश्यमिति । निश्चिनोमीत्याशयः ।

उदयनप्रतिकृतिमुपनयति चेटीधात्री—पश्यत्विति । अत्र सम्भ्रमे द्वित्वम् ।

[ (दृष्ट्वा) आर्य्यपुत्रस्य प्रतिकृत्याः सदृशतया जानामि—इयमार्याया: सदृशीति ] ।

**राजा**—देवि ! चित्रदर्शनात्प्रभृति प्रहृष्टोद्विग्नामिव त्वां पश्यामि, किमिदम् ? ।

**पद्मावती**—अय्यउत्त ! इमाए पडिकिदीए सदिसी इह एव्व पडिवसदि ।

[ आर्य्यपुत्र ! अस्याः प्रतिकृत्याः सदृशीहैव प्रतिवसति ] ।

**राजा**—किं वासवदत्तायाः ? ।

**पद्मावती**—आम !

[ आम् ! ] ।

**राजा**—तेन हि शीघ्रमानीयताम् ।

---

अभिनवराजलक्ष्मीः

दृष्ट्वा = उदयनचित्रं दृष्ट्वा । प्रतिकृत्याः = प्रतिमायाः । सदृशतया = आर्यपुत्र-सदृशतया । इयं = वासवदत्ताप्रतिकृतिः । आर्यया = वासवदत्तया । सदृशी= तुल्येति निश्चिनोमीत्यर्थः । एवञ्चेदं चित्रं वासवदत्ताया एवेति मे विश्वासो जात इत्याशयः ।

वासवदत्ताचित्रं दृष्ट्वा 'नूनमावन्तिकैव वासवदत्ते'ति तर्कयन्तीं प्रहृष्टामिव, संशयदोलारूढतया उद्विग्नाञ्च विभाव्यमानां पद्मावतीं राजा पृच्छति—देवीति ।

चित्रदर्शनात्प्रभृति = वासवदत्ताचित्रदर्शनादारभ्य । प्रहृष्टोद्विग्नां = = हृष्टामुद्विग्नाञ्च । पश्यामि = तर्कयामि । चित्रं दृष्ट्वा हर्ष उद्वेगश्च कुतो भवत्या लक्ष्यते इत्याशयः । प्रतिकृत्याः = प्रतिमायाः । इहैव = कौशाम्ब्यामेव, मद्भवने एव च । प्रतिवसति = तिष्ठति । किं वासवदत्तायाः= किं वासवदत्ताप्रतिकृतिसदृशी काचिन्महिला त्वद्भवने वर्त्तते ? । आम्=बाढम्,

**पद्मावती**—अय्यउत्त ! मम कण्णाभावे केण वि बह्मणेण 'मम भइणिअ'त्ति ण्णासो णिक्खित्तो। पोसिदभत्तुआ परपुरुसदंसणं परिहरदि। ता अय्या पेक्खदु—सदिसी णवे'त्ति।

[ आर्यपुत्र ! मम कन्याभावे केनापि ब्राह्मणेन 'मम भगिनिके'ति न्यासो निक्षिप्तः। प्रोषितभर्तृका परपुरुषदर्शनं परिहरति। तदार्या पश्यतु[1]—सदृशी नवेति ]।

---

अभिनवराजलक्ष्मीः

( हाँ )। आमिति स्वीकारे निपातः। आम इति तु देशी। तेन हि= यदि वासवदत्तासदृशी काचिदिहैव तिष्ठति तर्हि। आनीयताम् = इहोपस्थापय।

तदानयनाऽयोग्यतां प्रदर्शयन्ती पद्मावती तावदाह—आर्यपुत्रेति। कन्याभावे = विवाहात्पूर्वम्। मम भागिनिकेति=प्रोषितभर्तृका ममेयं भगिनी किञ्चित्कालं परिरक्षणीयेति कथयित्वा। निक्षिप्तः = स्थापितः।

प्रोषितभर्तृका = असन्निहितपतिका। परपुरुषदर्शनम् = अन्यपुरुषदर्शनम्। परिहरति = परिवर्जयति। तत् = तस्मात्। इह भवतां पुरतस्तस्या आनयनस्यानुचितत्वादिति यावत्। आर्या=वासवदत्ताधात्री वसुन्धरा एव। पश्यतु=दृष्ट्वा निश्चिनोतु। सदृशी = वासवदत्तातुल्या। नवा = असदृशी वा। अत्र—"आर्या सहागतां दृष्ट्वा जानात्वार्यपुत्रः" इति क्वचित्पाठः, स च पूर्वापरविरोधादुपेक्ष्यः। तत्संलापनप्रकारस्तु महाविदुषामेवोचित

---

१ 'अय्य मए सह आअदं पेक्खिअ जाणादु अय्यउत्तो' इति क्वचित्पाठः। 'आर्यां मया सहागतां दृष्ट्वा जानात्वार्यपुत्रः' इतिच्छाया। तद्वासवदत्तां छलेनानयामि, तां पश्यतु प्रच्छन्न भवानिति तदर्थं च परे प्राहुः। नोचितोऽयं पन्थाः।

**राजा—**

**द्य भगिनी; व्यक्तमन्या भविष्यति ।**
**परस्परगता लोके दृश्यते रूपतुल्यता ॥ १३ ॥**

**प्रतीहारी**—जेदु भट्टा । एसो उज्जइणीओ बह्मणो,—भट्टिणीए हत्थे 'मम भइणिअ'त्ति ण्णासो णिक्खित्तो,—तं पडिग्गहिदुं पडिहारे उवट्ठिदो ।

[ जयतु भर्ता । एष उज्जयिनीयो ब्राह्मणः,—भट्टिन्या हस्ते 'मम भगिनिके'ति न्यासो निक्षिप्तः,—तं प्रतिग्रहीतुं प्रतीहारमुपस्थितः ] ।

---

अभिनवराजलक्ष्मीः

इत्याहुर्गौढाः । 'ब्राह्मणभगिनी'ति श्रुत्वा वितर्कयति—यदीति । यदि = चेत् । सा = त्वद्भवनस्था वासवदत्तासदृशी आवन्तिका । विप्रस्य = ब्राह्मणस्य । भगिनी = स्वसा भवेत् । तर्हि = तदा । व्यक्तं = नूनम् । निश्चयेनेति यावत् । अन्या = वासवदत्तातिरिक्तैव । भविष्यति = सम्भविष्यति । यतः—लोके = जगति । परस्परगता = अन्योन्यगता । रूपतुल्यता = आकृतिसादृश्यम् । भिन्नास्वपि व्यक्तिषु । दृश्यते = अवलोक्यते । त्वद्भवनस्थाऽन्यैव काचिद्भवेत् , नतु वासवदत्ता सा । लोके परस्परं विभिन्नयोरप्याकृतिसाम्यञ्च क्वचिद्दृश्यते एवेति भावः ॥ १४ ॥

'जयतु भर्त्ते'ति राजादिसम्भाषणसमुदाचारः । एषः = अयम् । उज्जयिनीयः = उज्जयिनीनिवासी । भ ट्टन्याः = स्वामिन्याः पद्मावत्याः । हस्ते = निकटे । मम भगिनिकेति='ममेयं भगिनी रक्षणीया त्वये'त्युक्त्वा । न्यासः = निक्षेपः । निक्षिप्तः = अनेन पूर्वं स्थापितः । तं = न्यासम् । प्रतिग्रहीतुं =

**राजा**—पद्मावति ! किन्नु स ब्राह्मणः ? ।

**पद्मावती**—होदव्वं ।

[ भवितव्यम् ] ।

**राजा**—शीघ्रं प्रवेश्यतामभ्यन्तर[1]समुदाचारेण स ब्राह्मणः ।

**प्रतीहारी**—जं भट्टा आणवेदि ( **—निष्क्रान्ता** ) ।

[ यद्भर्ताऽऽज्ञापयति ( —निष्क्रान्ता ) ] ।

**राजा**—पद्मावति ! त्वमपि तामानय ।

**पद्मावती**—जं अय्यउत्तो आणवेदि ( **—निष्क्रान्ता** ) ।

[ यदार्यपुत्र आज्ञापयति । ( —निष्क्रान्ता ) ] ।

**[ ततः प्रविशति परिव्राजकब्राह्मणवेषो यौगन्धरायणः, प्रतीहारी च ] ।**

---

अभिनवराजलक्ष्मीः

परावृत्त्य ग्रहीतुं । नेतुमिति यावत् । प्रतीहारं = द्वारदेशम् । किं नु = किंस्वित् ? । स ब्राह्मणः = किं स एवाय ब्राह्मणः, यस्य भगिनी त्वन्निकटे वर्त्तते ? । भवितव्यं = 'भवदुक्तेने'ति शेषः । सम्भवतीदम् । ['हो सकता है', कौन जाने कदाचित् वही हो' ? ] । भवितव्यमिति श्रुत्वा राजा प्रतीहारीन्तावदाह—शीघ्रमिति । प्रवेश्यतां = स ब्राह्मणः प्रवेश्यताम् । अभ्यन्तरं प्रवेशे क्रियमाणः समुदाचारः तेन—अभ्यन्तरसमुदाचारेण = गृहप्रवेशोचितेन पाद्यार्घ्यादिना सत्कारं कृत्वा गृहाभ्यन्तरं प्रवेशयेति यावत् । ताम् = आवन्तिकाम् । 'न्यासभूतां तां ब्राह्मणाय परावर्त्तयितु'मित्यादिः । यत् = यत्कार्यं कर्त्तुम् । आज्ञापयति = निर्दिशति, तथा करोमि । वासवदत्तामानयामीत्यर्थः । भो इति—उद्वेगे, चिन्तायाञ्च निपातः । प्रच्छाद्येति ।

[ अन्वयः ] मया नृपतेः हितार्थं राजमहिषीं प्रच्छाद्य—हितमिति

---

१ 'अभ्यन्तरम्' इति गौडाः पठन्ति ।

**यौगन्धरायणः**—( आत्मगतं ) भोः !

**प्रच्छाद्य राजमहिषीं नृपतेर्हितार्थं**
**कामं मया कृतमिदं 'हित'मित्यवेक्ष्य ।**
**सिद्धेऽपि नाम मम कर्मणि पार्थिवोऽसौ**
**'किं वक्ष्यती'ति हृदयं परिशङ्कितं मे ! ॥१५॥**

**प्रतीहारी**—एसो भट्टा । उपसप्पदु अय्यो ।

[ एष भर्ता । उपसर्पत्वार्यः ] ।

---

अभिनवराजलक्ष्मीः

अवेक्ष्य—इदं । कामं कृतम् । मम कर्मणि सिद्धेऽपि नाम—असौ पार्थिवः किं वक्ष्यति—इति मे हृदयं परिशङ्कितम् ! ।

[अर्थः] मया=यौगन्धरायणेन । नृपतेः=राज्ञ उदयनस्य । हिताय इति—हितार्थं = लाभार्थम् । साम्राज्यलाभार्थं पद्मावतीपरिणयद्वारकं मगधराजकुलेन सह सम्बन्धं विधातुमिति भावः । राजमहिषीम् = उदयनस्य राज्ञो महिषीं वासवदत्ताम् । प्रच्छाद्य=प्रच्छन्नं पद्मावतीनिकटे स्थापयित्वा । हितमिति=राज्ञः कल्याणाय इदमेव युक्तमिति । अवेक्ष्य = नितरां विचार्य । इदं = पद्मावती-परिणयादिरूपङ्कार्यम् । कामं कृतम् = यथेच्छं, स्वच्छन्दं, स्वेच्छयैव—मया कृतमिति यावत् । मम = मद्विहिते । कर्मणि = मन्त्रे । पद्मावतीपरिणय—राज्यलाभादिरूपे कर्मणि । सिद्धेऽपि नाम = सफले जातेऽपि नाम । नामेति वाक्यालङ्कारे, सम्भावने वा । असौ पार्थिवः = असौ राजा उदयनः । किं वक्ष्यति = किमभिधास्यति ? । इति इत्थं-विचार्य । मे=मम । हृदयं=चित्तम् । परिशङ्कितं = शङ्काकुलम् । 'अस्ती'ति शेषः । वसन्ततिलकं वृत्तम् ॥ १५ ॥

राजानं प्रदर्श्य प्रतीहारी यौगन्धरायणं प्राह—एष इति । भर्त्ता = राजा उदयनस्तिष्ठति । उपसर्पतु = समीपं गच्छतु । उपसृत्य = निकटे गत्वा ।

**यौगन्धरायणः**—( **उपसृत्य-** ) जयतु भवाञ्जयतु ।

**राजा—(स्वगतं-)** श्रुतपूर्व इव स्वरः । **(प्रकाशं-)** भो ब्राह्मण !

किं भवतःस्वसा पद्मावत्या हस्ते 'न्यास' इति निक्षिप्ता ? ।

**यौगन्धरायणः**—अथ किम् ! ।

**राजा**—तेन हि त्वर्यतां त्वर्यतामस्य भगिनिका ।

**प्रतीहारी**—जं भट्टा आणवेदि । ( **-निष्क्रान्ता** ) ।

[ यद्भर्ताऽऽज्ञापयति । ( निष्क्रान्ता ) ]।

**( ततः प्रविशति पद्मावती, आवन्तिका, प्रतीहारी च ) ।**

**पद्मावती**—एदु-एदु अय्या । पिअं दे णिवेदेमि ।

[ एत्वेत्वार्या । प्रियं ते निवेदयामि ] ।

**आवन्तिका**—किं किम् ? । ·

[ किं ? किम् ? ] ।

---

अभिनवराजलक्ष्मीः

जयतु = विजयस्व । दार्ढ्यद्योतनाय 'जयतु' इत्यस्य पुनरुक्तिः । पूर्वं श्रुतः—श्रुतपूर्वः = पूर्वं कदाचिच्छ्रुत इव प्रतीयते । [ यह आवाज तो सुनी हुई सी मालूम होती है ? ] । स्वसा = भगिनी । पद्मावत्याः = मत्पत्न्याः । हस्ते = सविधे । न्यास इति = निक्षेप इति कृत्वा । निक्षिप्ता=किं स्थापिता ? । अथकिम् [ जीहाँ ] । राजा प्रतीहारीमाज्ञापयति—तेनेति । तर्हीत्यर्थः । त्वर्यतां त्वर्यतां = शीघ्रं दीयताम् । अस्य = विप्रस्य । भगिनिका = स्वसा । यदिति । यथा महाराज आज्ञापयति तथा सम्पादयमीत्यर्थः ।

आर्या = आवन्तिका । एत्वेतु = शीघ्रमागच्छतु । प्रियं = हृद्यम् । निवेदयामि = कथयामि । दिष्ट्येति हर्षे । सौभाग्यं मे इति यावत् ।

**पद्मावती**—भादा दे आअदो ।

[ भ्राता ते आगतः ] ।

**आवन्तिका**—दिट्ठिआ इदाणिं पि सुमरदि ।

[ दिष्ट्येदानीमपि स्मरति ! ] ।

**पद्मावती**—( **उपसृत्य-** ) जेदु अय्यउत्तो । एसो णासो ।

[ ( उपसृत्य- ) जयत्वार्यपुत्रः । एष न्यासः ] ।

**राजा**-निर्यातय पद्मावती । (अथवा) साक्षिमान् न्यासो निर्यातयितव्यः। इहाऽत्रभवान् रैभ्यः, अत्रभवती चाऽधिकरणं भविष्यतः।

**पद्मावती**—अय्य ! णीअदां दाणिं अय्या ।

[ आर्य ! नीयतामिदानीमार्या ] ।

---

अभिनवराजलक्ष्मीः

इदानीमपि = गतेऽपि बहुतिथे काले सम्प्रति । स्मरति = मां स्मरति । [ उन्हें इतने दिन के बाद मेरा स्मरण तो हुआ ! ] । एषः = अयम् । न्यासः = न्यासभूता आवन्तिका । उपस्थितोऽयं निक्षेपो विप्रस्य, अत्र यदुचितं तत्करोत्वार्यपुत्र इत्याशयः । निर्यातय = प्रत्यर्पय । देहीति यावत् । [ वापिस दो ] । अथवा = यद्वा शोभनोऽयं पन्थाः । साक्षिमत् = साक्षिणां पुरत एवेति यावत् । क्रियाविशेषणमेतत् । 'साक्षिमा'निति वा पाठ्यम् । निर्यातयितव्यतः = प्रत्यर्पणीयः । 'निर्यातनं वैरशुद्धौ दाने न्यासार्पणेऽपि चे'त्यमरः । एष समुदाचार इत्याशयः ।

इह = अस्मिन्न्यासे । अत्र भवान्=मान्यः । रैभ्यः = उज्जयिनीसमागतः कञ्चुकी । अत्र भवती=वासवदत्ताधात्री । अधिकरणं=विवादनिर्णयस्थानम् । धर्माधिकरणम् । प्रकृते निर्णेतार इति यावत् । [ 'जज' ] । अनयोरग्रे न्यासोऽर्पणीय इत्याशयः ।

पद्मावती यौगन्धरायणमाह--आर्येति । नीयतां = नेया । आर्या =

**धात्री–(आवन्तिकां निर्वर्ण्य–]** अम्मो भट्टिदारिआ वासवदत्ता

[ ( आवन्तिकां निर्वर्ण्य ) अम्मो ! भर्तृदारिका वासवदत्ता ! ] ।

**राजा–**कथं महासेनपुत्री ! । देवि ! प्रविश त्वमभ्यन्तरं पद्मावत्या सह ।

**यौगन्धरायणः–**न खलु न खलु प्रवेष्टव्यम् । मम भगिनी खल्वेषा ।

**राजा**—किं भवानाह, । महासेनपुत्री खल्वेषा ।

---

अभिनवराजलक्ष्मीः

आवन्तिका । निर्वर्ण्य = नितरां दृष्ट्वा । अम्मो इत्याश्चर्ये देशी । [ अरी मैया री ! ] भर्त्तृदारिका = प्रद्योतराजपुत्री । [यह तो वासवदत्ता है !!!] । कथं = किम् ? । [क्या यह महासेन की पुत्री वासवदत्ता है ?] । यद्वा—कथं = केन प्रकारेण । मृताऽपि कथं नाम पुनर्जीवितेत्यर्थः । [ है ! यह तो वासवदत्ता है !! ] ।

अभ्यन्तरं प्रविश = प्रासादाभ्यन्तरमागच्छ । देवि = राजमहिषी ! वासवदत्ते ! । न खलु न खलु = नहि नहि । प्रवेष्टव्यं = नैवाभ्यन्तरमावन्तिके ! त्वया गन्तव्यम् । राजन् ! मैनामन्तर्नय । एषा = आवन्तिका । खलु = निश्चयेन । यौगन्धरायणेन सह कलहायते राजा—किमिति ।

किं भवानाह = भवानेवं मिथ्या किमर्थं कथयति ? । एषा = इयन्तु । खलु = निश्चयेन । भरतानामिति । भो इत्युपालम्भे । राजन्निति सोपालम्भंवचः । ( इदञ्च श्लोकेन सहैवान्वेति ) । भरतानामिति ।

[ अन्वयः ] भारतानां कुले जातः विनीतः ज्ञानवान् शुचिः राजधर्मस्य देशिकः । तत् बलात् हर्त्तुं न अर्हसि ।

**यौगन्धरायणः—**भो राजन् !

**भारतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः ।**
**तन्नार्हसि बलाद्धर्तुं राजधर्मस्य देशिकः ॥ १६ ॥**

**राजा—**भवतु पश्यामस्तावद्रूपसादृश्यम् । सङ्क्षिप्यतां यवनिका ।

**प्रतीहारी—**जे भट्टा आणवेदि । (--**यवनिकामपसारयति** ) ।

[ यद्भर्ताऽऽज्ञापयति । ( यवनिकामपसारयति ) ] ।

---

अभिनवराजलक्ष्मीः

[ अर्थः ] हे राजन् ! त्वं—भारतानां = भरतवंशीयानाम् । कुले = श्रेष्ठे वंशे । जातः = उत्पन्नः । विनीतः = धर्मशास्त्रशिक्षणादिना विनयं ग्राहितः । ज्ञानवान्=उचितानुचितकर्त्तव्याकर्त्तव्यविवेकशीलः । शुचिः=पवित्रकीर्त्तिः । सत्कर्मानुष्ठानपवित्रमूर्त्तिरिति वा । राजधर्मस्य = मनूपदिष्टेन मार्गेण पुत्रवत्प्रजापरिपालनात्मकस्य । देशिकः = उपदेष्टा । 'असी'ति शेषः । तत् = तस्मात्कारणात् । बलात् = बलात्कारेण । 'मे भगिनिका'मिति शेषः । हर्त्तुं = ग्रहीतुम् । नार्हसि = न योग्योऽसि । एवञ्च रक्षको भूत्वा त्वमेव बलात्कारेण प्रजाकन्या अपहरसि चेत्को नस्त्रातेत्याशयः ॥ १६ ॥

भवतु = आस्तां तावद् । नाऽहमन्तः प्रवेशयामि । 'भवत्वान्तरसंवादे निर्दोषे स्मरणेऽपि चे'त्यमरः । तावत् = किन्तु, प्रथमम् । पश्यामः = विलोकयामः । रूपस्य सादृश्यं—रूपसादृश्यं = स्वरूपसाम्यम् । आकृतिसाम्यमिति यावत् । यवनिका=परपुरुषदर्शनपरिजिहीर्षया परिहितमवगुण्ठनवस्त्रम् । 'प्रतिसीरा यवनिका स्यात्तिरस्करिणी च से'त्यमरः । [ यवनिका = मुख का परदा, घूंघट ] । संक्षिप्यतां = किञ्चिदपनीयताम् । मुखावगुण्ठनपटमियमुपसंहरतु तावदित्यर्थः ।

**यौगन्धरायणः**—जयतु स्वामी ।

**वासवदत्ता**— जेदु अय्यउत्तो ।

[ जयत्वार्यपुत्रः ] ।

**राजा**— अये ! असौ यौगन्धरायणः ! । इयं महासेनपुत्री !! ।

**किन्नु सत्यमिदं, स्वप्नः, सा भूयो दृश्यते मया ! ।**
**अनयाऽप्येवमेवाहं दृष्टया वञ्चितस्तदा ! ॥ १७ ॥**

---

अभिनवराजलक्ष्मीः

पटापसारणानन्तरं वासवदत्तैवेयमिति राज्ञाऽवधारिते यौगन्धरायण आशिषं प्रयुङ्क्ते—**जयत्विति** ।

यथावन्निर्वर्ण्य जातपरिचयो राजा सहर्षं प्राह—**अये इति** । हर्षनिपातोऽयम् ।

**किन्नु इति** । सा=चिरात्खल्परताऽपि देवी वासवदत्ता । भूयः=पुनरपि । मया = उदयनेन । दृश्यते=पुरतो विलोक्यते । इदम् = वासवदत्ता समागमादिरूपमेतत्सर्वम् । किंनु = किं स्वित् । सत्यं = वास्तवम् । यथार्थमेव वासवदत्तां किमहं पुरतः पश्यामि ? । यद्वा—स्वप्नः = स्वप्नदृष्टरथतुरगादिवन्मिथ्यैव । इयमेव मया समुद्रगृहके दृष्टेति सूचयन्नाह—**अनयेति** । तदा = यदाऽहं समुद्रगृहके सुप्तस्तदा । दृष्टयाऽपि = विलोकितयाऽपि । अनया = वासवदत्तया । एवमेव = इत्थमेव । यथा यौगन्धरायणेनेदानीमेव मम भगिनिकां बलाद्धर्तुं नार्हसीति वदताऽहं वञ्चितस्तथैव ।

अहं वञ्चितः=विप्रलब्धः । प्रतीरितः । 'विप्रलब्धस्तु वञ्चितः' इत्यमरः । यौगन्धरायणवन्मिथ्यैव देव्या वासवदत्तयाऽपि खल्वहं तदा वञ्चित इत्यहो ! अनौचित्यं देव्या, यौगन्धरायणस्य च इत्याशयः ॥ १७ ॥

**यौगन्धरायणः**—स्वामिन् ! देव्यपनयेन कृताऽपराधः खल्वहम् । तत्क्षन्तुमर्हतिस्वामी ( **—पादयोः पतति** ) ।

**राजा—( उत्थाप्य— )** [1]यौगन्धरायणो भवान् । ननु—

**मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः ।**
**भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः ॥१०॥**

अभिनवराजलक्ष्मीः

किञ्चिदिव रुष्टं राजानं प्रसादयन् यौगन्धरायण आह—स्वामिन्निति । स्वामिन्=प्रभो ! । देव्यपनयेन=वासवदत्तानिगूहनेन । मृतेति मिथ्याप्रख्यापनेन च । कृतापराधः=विहितापराधः । खलु=निश्चयेन । अहम्=अहमेव । नात्र देव्याः कोऽप्यपराध इत्याशयः । तत्=तस्मात् । 'देवीं माञ्चे'ति शेषः । अर्हति=योग्यो भवान् । इति=इत्युक्त्वा । ननु इति प्रश्ने । ननु=निश्चयेनेति वा ।

भवान् यौगन्धरायण एव अन्यो वा कश्चन वञ्चनापटुरिति प्रश्नाशयः । नितरां वञ्चितो राजा अमात्यमपि यौगन्धरायणं मिथ्यैवायं वदति, नायं यौगन्धरायण इति मनुते हृदयम् ।

गौडास्तु—'यौगन्धरायण ! ब्राह्मणो भवान् !' इति पाठः । 'ननु' इति च श्लोकेन सहैवान्वेति । यौगन्धरायण ! भवान् ब्राह्मणः, भवता पादपतनमनुचितं कर्म कुतो विधीयते ? । किञ्च भवता च वयं रक्षिताः, तद्भवानुपकारक एवाऽस्माकं, नापकारक इत्याह—नन्विति' ।—इत्याहुः । **मिथ्येति** ।

[ अन्वयः ] ननु=निश्चयेन । मिथ्या=मिथ्यैव । उन्मादैः=वासवदत्तामरणख्यापनादिनोत्थापिताभिर्विपत्तिभिः । 'उन्मादश्चित्तविभ्रमः' इत्यमरः । मिथ्यैव कल्पिताभिर्विपत्तिभिरिति यावत् । युद्धैश्च=आरुणिना सह युद्धादिभिश्च । च=पुनः । शास्त्रेण दृष्टैः—शास्त्रदृष्टैः=राजनीति–

१ 'यौगन्धरायण ! ब्राह्मणो भवान् !' इति गौडाः पठन्ति ।

**यौगन्धरायणः**—स्वामिभाग्यानामनुगन्तारो वयम् ।

**पद्मावती**—अम्महे ! अय्या खु इअं । अय्ये ! सहीजणसमुदाआरेण अजाणन्तोए अदिक्कन्तो समुदाआरो । ता सीसेण पसादेमि । ( इति पादयोः[1] पतति ) ।

[ अहो ! आर्या खल्वियम् । आर्ये ! सखीजनसमुदाचारेणाऽजानत्याऽतिक्रान्तः समुदाचारः, तत् शीर्षेण प्रसादयामि] । (इति पादयोः[1] पतति) ।

अभिनवराजलक्ष्मीः

शास्त्रानुमोदितैः । मन्त्रितैः = मन्त्रैश्च । पद्मावतीविवाहद्वारा दर्शकसाहाय्यमासादनीयमित्यादिगूढमन्त्रणाभिरिति यावत् । भवद्यत्नैः = राज्यरक्षणार्थं कृतैर्भवत्प्रयासैः ।

मज्जमानाः = विनश्यन्तः । राज्यापहारादिविपद्वारिधौ निमग्नाश्च वयम् । समुद्धृताः = रक्षिताः । 'खलु' इति अनुनये निपातः । भवता विपद्वारिधेः परिरक्षिता वयम् , तत्कृतोपकारो भवान् , नत्वपराधी । तदलं चिन्तया, पादपतनादिना चेत्याशयः ।। १८ ।।

वयं = यौगन्धरायणादयो वयम् । स्वामिभाग्यानां = भवत्सौभाग्यस्य ।। अनुगन्तारः=अनुगामिनः । भवद्भागधेयेन प्रेरितैरेवाऽस्माभिरीदृशं मन्त्रितम् फलितञ्च तत् । नाऽत्रास्माकं कोऽपि गुणः, स्वामिन एवायं प्रभाव इति भाव।

वासवदत्तां प्रत्यभिज्ञाय पद्मावती साश्चर्यमाह = अहो इति । आर्या = वासवदत्ता । इयम् = आवन्तिकानाम्नाऽद्ययावदस्मद्भवने स्थितेयम् ।

सखीजनसमुदाचारेण = सखीलोकसुलभव्यवहारेण । 'सखी'तिमत्वा कृतेन व्यवहारेण । अजानत्या = 'देवीयं वासवदत्ते'ति अजानत्या मया । समुदाचारः = विनयादि—मर्यादा । गुरुजनपरिचरणमर्यादा । अतिक्रान्तः = उल्लङ्घितः । भवत्या न यथावत्संमाना मया विहितस्तत्क्षमापयामीत्याशयः ।

तत् = तस्मात् । शीर्षेण = पादयोः शिरसो नमनेन । [ पैरों में शिर

१ अयं पाठ औचित्यादस्माभिर्वर्द्धितः ।

**वासवदत्ता**—(पद्मावतीमुत्थाप्य--)उट्ठेदि अविहवे ! उट्ठेदि । अत्थिसअं णाम सरीरं अवरज्झइ ।

[ उत्तिष्ठोत्तिष्ठाऽविधवे ! उत्तिष्ठ । अर्थिस्वं नाम शरीरमपराध्यति ] ।

**पद्मावती**—अणुग्गहिद्म्हि । [ अनुगृहीताऽस्मि ] ।

**राजा**—वयस्य यौगन्धरायण ! देव्यपनये किंकृता ते बुद्धिः ? ।

**यौगन्धरायणः**—'कौशाम्बीमात्रं परिपालयामी'ति ।

**राजा**—अथ पद्मावत्या हस्ते किं न्यासकारणम् ? ।

**यौगन्धरायणः**—'पुष्पकभद्रादिभिरादेशिकैरादिष्टा स्वामिनो देवी भविष्यती'ति ।

---

अभिनवराजलक्ष्मीः

रत्नकर ] । 'उत्तमाङ्गं शिरः शीर्षं'मित्यमरः । प्रसादयामि = अनुनयामि । 'अपराधं क्षमापयामी'ति यावत् । 'इति पादयोः पतती'ति पाठोऽत्र भवेत् मन्ये लेखकप्रमादादिना भ्रष्टः ।

अविधवे = सुभगे ! । सौभाग्यशालिनि ! । अर्थिस्वम् = याचकयौगन्धरायणसम्बन्धि । शरीरम् = इदं मे शरीरम् । यौगन्धरायणभगिनीत्वेन व्यपदिष्टं मे शरीरमेव । अपराध्यति = अपराधि । नात्र भवत्या अपराधः, यौगन्धरायणेन स्वसम्बन्धितया ख्यापितायां मयि भवत्या 'वासवदत्तेय'मिति प्रत्ययस्य कथमप्यसम्भावितत्वात् ।

अनुगृहीताऽस्मि = अनुकम्पिताऽस्मि । देव्यपनये = वासवदत्तामरणख्यापने । किंकृता[1] = केन हेतुनोत्पन्ना । बुद्धिः = विचारः । कौशाम्बीमात्रं = कृत्स्नं कौशाम्बीराज्यम् । आरुणिहृतमपि राज्यभागमिति यावत् । परिपालयामि = आहरामि । रक्षामि । इति = इत्येव । वत्सराज्यप्रत्यावर्त्तनायैव मया देव्यपनीतेति भावः । अथेति प्रश्ने । किं=कुतो हेतोः । न्यासकरणं=निक्षेपतया स्थापनम् । 'देव्या' इति शेषः । आदेशिकैः=भविष्यद्वेदिभिः ।

---

१ 'का कृते'ति मुद्रितः पाठः ।

**राजा**—इदमपि रुमण्वता ज्ञातम् ? ।

**यौगन्धरायणः**—स्वामिन् ! सर्वैरेव ज्ञातम् ।

**राजा**—अहो शठः खलु रुमण्वान् ।

**यौगन्धरायणः**—स्वामिन् ! देव्याः कुशलनिवेदनार्थमद्यैव प्रतिनिवर्त्ततामत्रभवान् रैभ्योऽत्रभवती च ।

**राजा**—न न, सर्वे वयं यास्यामो देव्या पद्मावत्या सह ।

**यौगन्धरायणः**—यदाज्ञापयति स्वामी ।

**( भरतवाक्यम्—)**

**इमां सागरपर्यन्तां हिमवद्विन्ध्यकुण्डलाम् ।**
**महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः ॥१९॥**

---

अभिनवराजलक्ष्मीः

स्वामिनः=उदयनस्य देवी=महिषी । 'देवी भविष्यतीति—आदिष्टेति हेतोस्तस्या हस्ते विश्वासार्थमियं देवी स्थापिते'ति योजना । इदमपि=देवीविषयकं कुशलवृत्तान्तादिकम् । सर्वैः=सर्वैरेव भवन्मन्त्रिभिः । एवञ्च सर्वेषां संमत्यैव मया तथाचरितमिति सूचितम् । अहो इति खेदे । शठः=धूर्त्तः । मयि तथा विरहव्यथापीडिते पि तेन सत्यं वृत्तं न निवेदितमित्यहो ! मन्त्रपरिपालनाऽऽग्रहः शठस्य रुमण्वत इति सोत्प्रासं वचो राज्ञ इत्याशयः ।

देव्याः=वासवदत्तायाः । कुलशनिवेदनार्थं=महासेनस्य पुरतः—'कुशलिनी वासवदत्ते'तिमङ्गलवृत्तान्तनिवेदनार्थम् । रैभ्यः=उज्जयिनीराजकञ्चुकी । अत्रभवती=मान्या वासवदत्ताधात्री च ।

प्रतिनिवर्त्ततां=तौ प्रतिनिवृत्त्य उज्जयिनीं—गच्छतामित्याशयः ।

नन=नहि नहि । न केवलं तावेवोज्जयिनीं गच्छताम् । किन्तर्हि—सर्वे एव=वासवदत्तासहिता वयं सर्वेऽपि । यास्यामः=उज्जयिनीं गमिष्यामः । गुरूणां दर्शनार्थमिति यावत् ।

एवं निष्पन्ने सकले साम्राज्यलाभादिरूपे मनोरथे भरतः=नटः

(निष्क्रान्ताः सर्वे )।

इति षष्ठोऽङ्कः।

## समाप्तमिदं स्वप्नवासवदत्तं नाटकम्।

अभिनवराजलक्ष्मीः

सूत्रधार इति यावत्। यद्वा भरतो भरताचार्यस्तद्वाक्यमित्यर्थः शुभाशिषं प्रयुङ्क्ते—इमामिति। नः=अस्माकम्। राजा सिंह इव-राजसिंहः=श्रेष्ठो राजा। 'उदयन' इति प्रकृतम्। सागराः पर्यन्ताः—पर्यन्ते वा—यस्याः सा तां—सागरपर्यन्तां=समुद्रान्ताम्। हिमवांश्च विन्ध्यश्च—हिमवद्विन्ध्यौ। तौ कुण्डले इव यस्याः सा—हिमवद्विन्ध्यकुण्डला, तां—हिमवद्विन्ध्यकुण्डलां=हिमालयविन्ध्याचलकर्णाभरणाम्। हिमालयविन्ध्यौ कर्णकुण्डलस्थानापन्नौ यस्यास्तामिति यावत्। एकम्=अद्वितीयम्, आतपत्रं=छत्रम्, अङ्कः=चिन्हं यस्याः सा ताम्—एकातपत्राङ्काम्=एकच्छत्रचिह्नाम्। अस्मन्महाराजातिरिक्तच्छत्रधारिराजान्तररहितामिति यावत्। इमाम्=निखिलामिमां भुवम्। प्रशास्तु=अनुशास्तु। निखिलं भूवलयं नो महाराजः प्रशास्तु इति शुभाशंसनमिति भावः। एतेन सर्वेष्टसिद्धिः सूचिता। इदञ्च 'प्रशस्तिनामकं-निर्वहणसन्धेरङ्गमित्यवधेयम्॥ १९॥

सर्वे=उदयनमुखाः सर्वेऽपि। निष्क्रान्ताः=उज्जयिनीं गन्तुं रङ्गाद्बहिर्निर्गताः। इति सर्वेष्टसिद्धिः। शुभम्।

इति स्व० पण्डितराज-श्री-१०८ श्रीस्नेहिरामशास्त्रिणां पौत्रेण, न्यायाचार्यपण्डितस्व० श्रीश्रीशिवनारायणशास्त्रिणां पुत्रेण, सतीसार्वभौम 'राजलक्ष्मी' गर्भसम्भूतेन, न्याय-व्याकरणा-द्याचार्येण, श्रीगुरुप्रसाद-शास्त्रिणा समुद्भावितायां स्वप्नवासव-दत्ताभिनवराजलक्ष्म्यां प्रतिपद-व्याख्यानभूतायां षष्ठोऽङ्कः।

❀ श्रीः शुभम् ❀



'कलभाषिणी' भाषाटीकोपेतम्

# स्वप्नवासवदत्तम्

## नाटकम् ।

—:—

[ नान्द्यन्ते ततः प्रविशति सूत्रधारः । ]

सूत्रधार :—

उदयनवेन्दुसवर्णावासवदत्ताबलौ बलस्य त्वाम् ।
पद्मावतीर्णपूर्णौ वसन्तकम्रौ भुजौ पाताम् ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि—' ।

---

**अथ आचार्य श्रीसीताराम शास्त्रिकृता कलभाषिणी**

महागणपतिं नौमि सिद्धिबुद्धिविराजितम् ।
भक्ताऽभीष्टप्रदातारं सर्वविद्याधिपं गुरुम् ॥ १ ॥

[ मङ्गलं स्तुतिगान के बाद सूत्रधार का प्रवेश । ]

सूत्रधार—उदयकालिक चन्द्रमा की तरह कान्तिवाली, मदिरा पान से किञ्चित् आलस्य युक्त, एवं स्फूर्तिशाली; कमल की तरह सुन्दर, मृदुल, और शोभायमान: वसन्त काल की तरह कमनीय—भगवान् श्रीबलभद्रजी की भुजाएँ—आप लोगों की [ दर्शक वृन्द को ] रक्षा करें ।

( दर्शकों को सम्बोधन करके )—आप महानुभावों से मैं यह निवेदन करता हूँ कि·········'

अये ! किन्नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते ! । —अङ्ग ! पश्यामि !

( नेपथ्ये )

उत्सरत ! उत्सरत !! आर्याः ! उत्सरत !!! ।

सूत्रधारः—भवतु, विज्ञातम्—

भृत्यैर्मगधराजस्य स्निग्धैः कन्यानुगामिभिः ।
धृष्टमुत्सार्यते सर्वस्तपोवनगतो धनः ॥ २ ॥

( निष्क्रान्तः । )

## स्थापना

( प्रविश्य— )

भटौ—उत्सरत ! उत्सरत !! आर्याः ! उत्सरत !!! ।

( ततः प्रविशति परिव्राजकब्राह्मणवेषो यौगन्धरायणः, 'आवन्तिका'-वेषधारिणी वासवदत्ता च )

---

( कान लगाकर सुनता हुआ ) हैं ! ज्योंही मैं प्रेक्षक महानुभावों से कुछ प्रार्थना करने में प्रवृत्त हुआ त्योंही यह कोलाहल सा कहाँ से सुनाई पड़ने लगा ? अच्छा भाई ! जरा देखूँ तो क्या बात है ।

[ नेपथ्य में ] हटो ! हटो !! सज्जनों ! हटो !!! ।

सूत्रधार—( सुनकर ) ठीक है, समझ में आगया—

मगधराज महाराज दर्शक के विश्वासी राजकर्मचारी—जो कि महाराज की छोटी बहिन पद्मावती के साथ आए हैं—धृष्टतापूर्वक जबरदस्ती आश्रमनिवासी तपस्वीजनों को रास्ते से हटा रहे हैं ॥ २ ॥

[ इस प्रकार प्रस्तावना करके सूत्रधार जाता है ]

दोनों सिपाही—सामने से हटो, हटो सज्जनों ! हटो ।

[ संन्यासी के वेष में यौगन्धरायण का, और उसके साथ मालवाप्रान्त की स्त्रियों की पोशाक में 'आवन्तिका' नामधारिणी वासवदत्ता का प्रवेश ]

---

१—काशी की मध्यम परीक्षा में प्राकृत की जगह उसकी छाया ही पाठ्य है । अतः छात्रों के लाभार्थ प्राकृत की जगह उसकी छाया ही छापी जा रही है । पढ़ने और पाठ करने के समय इससे छात्रों को विशेष लाभ होगा ।

यौगन्धरायणः—( कर्णं दत्वा — ) कथमिहाप्युत्सार्यते ! । कुतः—

धीरस्याश्रमसंश्रितस्य वसतस्तुष्टस्य वन्यैः फलै-
　　र्मानार्हस्य जनस्य वल्कलवतस्त्रासः समुत्पाद्यते ? ।
उत्सिक्तो विनयाद्यपेतपरुषो भाग्यैश्चलैर्विस्मितः
　　कोऽयं भो निभृतं तपोवनमिदं ग्रामीकरोत्याज्ञया ? ॥३॥

वासवदत्ता-आर्य ! क एष उत्सारयति ? । [ क एष उत्सार्यते इति च ] ।

यौगन्धरायणः—भवति ! यो धर्मादात्मानमुत्सारयति ।

वासवदत्ता—आर्य ! न हि एवं वक्तुकामा—'अहमपि नाम उत्सारयितव्या भवामि ?—इति—' ।

यौगन्धरायणः—भवति ! एवमनिर्ज्ञातानि दैवतान्यवधूयन्ते ।

---

यौगन्धरायण—( कान लगा सुनकर- ) हैं ! यहाँ आश्रम में भी हटाने बढ़ाने की बात कैसी ? । हैं !—यह क्या ?— । क्योंकि—

धीरतापूर्वक; सुखदुःख को सहन कर, जंगली फलमूल खाकर वृक्षों की छाल-बल्कल को धारण कर, सन्तोष पूर्वक आश्रमों में रहनेवाले इन पूजनीय तपस्वी मुनिजनों को क्यों क्लेश दिया जा रहा है ! ॥ ३ ॥

अरे ! यह कौन है जो अस्थायी-क्षणभंगुर-राज्याधिकारों को ( राज्य के पदों को ) पाकर उन्मत्त हो इस तरह धृष्टतापूर्वक इस पवित्र शान्त तपोवन को भी अपनी हुकूमत से गाँव-गवई की तरह संत्रस्त और अशान्त कर रहा है ? ॥ ३ ॥

वासवदत्ता—आर्य ! यह कौन हटा रहा है ? । [ अथवा—ये लोग किसको हटा रहे हैं ? ] ।

यौग०-बहिन ! जो अपने को धर्म से गिराना चाहता है,वही तपस्वियों को हटा रहा है । [ तपस्वियों को हटाना किसी नीच का ही काम है ] ।

वासवदत्ता-आर्य ! नहीं नहीं । मैं यह नहीं कहना चाहती हूँ कि-'यह कौन हटा रहा है' । किन्तु मैं तो आपसे यह पूछना चाहती हूँ कि-'क्या मैं भी ( एक देश की महारानी होते हुए भी ) यहाँ से हटाई जाऊँगी ? ।

यौग०—बहिन ! बिना जाने तो बड़े-बड़े देवताओं को भी दुःख और अपमान भोगना पड़ता है । [ अतः—तुमको भी हटना पड़ेगा ] ।

वासवदत्ता—आर्य ! तथा परिश्रमः परिखेदं नोत्पादयति यथाऽयं परिभवः।

यौगन्धरायणः=भुक्तोज्झित एष विषयोऽत्रभवत्या, नाऽत्र भवत्या चिन्ता कार्या। कुतः—

पूर्वं तवाऽप्यभिमतं गतमेवमासी-
च्छ्लाघ्यं गमिष्यसि पुनर्विजयेन भर्तुः।
कालक्रमेण जगतः परिवर्तमाना
चक्राऽरपंक्तिरिव गच्छति भाग्यपंक्तिः॥ ४ ॥

भटौ—उत्सरत ! उत्सरत !! आर्याः ! उत्सरत !!!।

( ततः प्रविशति [1]काञ्चुकीयः )

काञ्चुकीयः—सम्भषक ! न खलु न खलूत्सारणा कार्या। पश्य-

---

वासवदत्ता-आर्य ! मुझे मार्गकी थकावट आदिसे जितना दुःख नहीं है उतना दुःख इस अपमान से हो रहा है।

यौग०—आपने तो इस विषयको [ राज्यसुखको ] भोगकरके भी (पति के अभ्युदय के लिए अपनी इच्छा से ही) त्याग दिया है। इसलिए अब आपको ऐसे छोटेमोटे मान-अपमान की चिन्ता नहीं करनी चाहिए। क्योंकि—किसी समय आपके चलने पर भी सिपाही इसी तरह लोगों को हटाया करते थे। और भगवान् की कृपासे आपके भर्त्ताकी विजय होनेपर वे ही सिपाही पुनः इसी प्रकार आपके साथ लोगों को हटाते-बढ़ाते चलेंगे। यह तो संसार का नियम है। सुख दुःख तो भाग्याधीन है, और भाग्य घूमते हुए पहिए की पंखुड़ियों की तरह नीचे ऊपर हुआ ही करता है। इसलिए इस समय मान-अपमान का विचार नहीं करना चाहिए॥ ४ ॥

दो सिपाही—हटो सज्जनो ! हटो।

( [1]काञ्चुकी का प्रवेश )

कञ्चुकी—सम्भषक ! ऐसा मत करो। आश्रमवासियों को हटाना नहीं चाहिए। देखो—

---

१ लम्बी अचकन पहिने, पगड़ी बान्धे हुए, राजा का वृद्ध मुसाहिब।

परिहरतु भवान्रुषाऽववादं न परुषमाश्रमवासिषु प्रयोज्यम् ।
.गरपरिभवान् विमोक्तुमेते वनमभिगम्य मनस्विनो वसन्ति ॥५॥

उभौ—आर्य ! तथा । [ निष्क्रान्तौ ] ।

यौगन्धरायणः—हन्त ! सविज्ञानमस्य दर्शनम् । वत्से ! उपसर्पावस्तावदेनम् ।

वासवदत्ता—आर्य ! तथा ।

यौगन्धरायणः—( उपसृत्य- ) भोः ! किङ्कृतेयमुत्सारणा ? ।

काञ्चुकीयः—भोस्तपस्विन् !—' ।

यौगन्धरायणः—( आत्मगतम्- ) 'तपस्वि'न्निति ! । गुणवान् खल्वयमालापः । अपरिचयात्तु न श्लिष्यते मे मनसि ।

काञ्चुकीयः—भोः ! श्रूयताम् ,—एषा खलु गुरुभिरभिहितनामधेयस्याऽस्माकं महाराजदर्शकस्य भगिनी—'पद्मावती'नाम ।

---

इस तरह से आश्रमवासी मुनिजनों को क्रूर शब्दों से हटाना नहीं चाहिए । इसी प्रकार के अपमानों से बचने के ही लिए तो वे मनस्वी तपस्वी लोग वन में आकर रहते हैं । अत एव आश्रमवासियों को इस तरह मत हटाओ ॥ ५ ॥

दोनों सिपाही—जो हुक्म आपका । [ दोनों जाते हैं ] ।

यौगन्धरायण—वाह ! इसके विचार तो बड़े ही उत्तम हैं । बहिन ! आओ इसके पास चलकर इससे बातें करें ।

वास० —आर्य ! ठीक है, जैसी आपकी इच्छा । मैं तैयार हूँ ।

यौग०—( कञ्चुकी के पास जाकर- ) क्यों भाई ! ये सिपाही लोगों को क्यों हटा रहे थे ! ।

कञ्चुकी—हे तपस्वीजी !—'

यौग०—(अपने मन ही मन में-) हैं ! क्या कहा—तपस्वी जी ! । क्या यह तपस्वी शब्द से मुझे पुकारता है ! । वाह ! क्या सुन्दर और संमान सूचक यह शब्द है । पर मेरा सौभाग्य ऐसा कहाँ कि मैं तपस्वी कहलाने लायक बनूँ । मैं तो अपने को इस सर्वश्रेष्ठ सत्कार के योग्य नहीं पाता हूँ ।

कञ्चुकी—महाभाग ! सुनिए-जिनको गुरुजन 'दर्शक' इस नाम से

सैषा नो महाराजमातरं महादेवीमाश्रमस्थामभिगम्याऽनुज्ञाता तत्रभवत्या राजगृहमेव यास्यति, तदद्याऽस्मिन्नाश्रमपदे वासोऽभिप्रेतोऽस्याः।

तद्भवन्तः—

तीर्थोदकानि समिधः कुसुमानि दर्भा-
न्स्वैरं वनादुपनयन्तु तपोधना! नः।
धर्मप्रिया नृपसुता न हि धर्मपीडा-
मिच्छेत्तपस्विषु कुलव्रतमेतदस्याः॥ ६॥

यौगन्धरायणः—( स्वगतम्- )—एवम्। एषा सा मगधराजपुत्री पद्मावती नाम, या पुष्पकभद्रादिभिरादेशिकैरादिष्टा-'स्वामिनो देवी भविष्यती'ति। [1]ततः—

प्रद्वेषो बहुमानो वा सङ्कल्पादुपजायते।
भर्तृदाराभिलाषित्वादस्यां मे महती स्वता!॥ ७॥

---

पुकारते हैं-ऐसे हमारे महाराज मगधाधिराज की ये छोटी बहन पद्मावती जी हैं। ये ( अपनी और ) हमारे महाराज की माता-श्रीमहादेवी जी का ( जो पास ही के आश्रम में तप करती हैं ) दर्शन करके उनकी आज्ञा से अब वापिस मगध देश की राजधानी राजगृह (राजगिरी) को जा रही हैं। सो आज इनकी इसी आश्रम में ठहरने की इच्छा है। परन्तु हे तपस्विजनों! आप लोग निर्भय चित्त हो वन से समिधा-( यज्ञ के लिए काष्ठ ), तीर्थों से पवित्र जल, पुष्प, कुशा आदि लाइए। हमारी राजकुमारीजी बड़ी धर्मात्मा हैं, वे आपलोगों के धर्मकार्य में विघ्न होने देना नहीं चाह सकतीं, और इस मगधराजकुल की यह मर्यादा तो सदा से ही प्रसिद्ध है कि धर्म की रक्षा में ये सदा ही सावधान रहते हैं॥ ५॥

यौग०(मन ही मन-) ओह! ठीक है। यह मगधराज की राजकुमारी पद्मावती है, जिसके विषय में पुष्पकभद्र आदि बड़े-बड़े सिद्ध भविष्यद्वक्ता ज्यौतिषियों ने भविष्यवाणी की है कि—'वह-महाराज उदयन की पटरानी बनेगी!'।

---

१ 'तत' इत्यस्य 'उपजायते' इतिश्लोकस्थपदोत्तरं सम्बन्धः (ततः=तभीतो)।

वासवदत्ता—( स्वगतम् )—'राजदारिके'ति श्रुत्वा भगिनिका-स्नेहोऽपि मेऽत्र सम्पद्यते ।

[ ततः प्रविशति पद्मावती सपरिवारा, चेटी च ]

चेटी—एत्वेतु भर्तृदारिका, इदमाश्रमपदं प्रविशतु ।

[ ततः प्रविशत्युपविष्टा तापसी ] ।

तापसी—स्वागतं राजदारिकायाः ।

वासवदत्ता—( स्वगतम्– ) इयं सा राजदारिका ! । अभिजनानुरूपं खल्वस्या रूपम् ।

पद्मावती—आर्ये ! वन्दे ।

तापसी—चिरं जीव प्रविश जाते ! प्रविश । तपोवनानि नामाऽतिथिजनस्य स्वगेहम् ।

---

द्वेष और प्रेम तो सङ्कल्प—इच्छा के कारण ही उत्पन्न होते हैं । तभी तो हमारे महाराज की यह भावी महारानी है'—यह जानकर मेरी भी इसमें ममता-सी हो रही है ॥ ५ ॥

वासवदत्ता–'यह भी राजकन्या है'–यह जानकर मेरा इसमें बहिन का सा प्रेम हो रहा है ।

( दासी और बान्दियों के साथ पद्मावती का प्रवेश ) ।

दासी–आइए राजकुमारीजी ! आइए । यह आश्रम है, प्रवेश करिए ।

[ बैठी हुई तापसी=मुनिपत्नी का प्रवेश ।

तापसी–राजकुमारी ! तुम्हारा स्वागत हो [ तुम्हारा हम स्वागत करते हैं । आइए आपके आने से हम लोगों को बड़ा हर्ष हुआ है ] ।

वासवदत्ता–( मनही मन– ) ओह ! यह वही राजकुमारी है, जिसके लिए सिपाही लोग आश्रमवासी मुनिजनों को हटा रहे थे ! ।

पद्मावती–( मुनिपत्नीसे– ) पूजनीय माताजी ! प्रणाम ।

तापसी–बेटी ! चिरञ्जीव रहो । चली आओ बेटी, चली आओ । सङ्कोच क्यों करती हो, मुनियों का आश्रम तो अतिथियों के लिए अपने घर

पद्मावती—भवतु भवतु । आर्ये ! विश्वस्ताऽस्मि । अनेन बहुमानवचनेनाऽनुगृहीताऽस्मि ।

वासवदत्ता—(स्वगतम्–) न हि रूपमेव, वागपि खल्वस्या मधुरा।

तापसी—भद्रे ! इमां तावद्भद्रमुखस्य भगिनिकां कश्चिद्राजा न वरयति ? ।

चेटी—अस्ति राजा प्रद्योतो नामोज्जयिन्याः स दारकस्य कारणाद्दूतसम्पातं करोति ।

वासवदत्ता—( आत्मगतं– ) भवतु भवतु । एषा चात्मीयेदानीं संवृत्ता ।

---

के ही समान है । तुम हमारी आज अतिथि हो, अतः तुमको यहाँ सङ्कोच किस बात का है ? । इसे अपना घर ही समझो । आवो चली आओ ।

पद्मावती—बस बस माताजी ! आप ज्यादा कष्ट न करें, मुझे यहाँ कुछ भी सङ्कोच नहीं है । मैं तो अपने घर की तरह ही इस तपोवनको समझ रही हूँ । आपने यह जो मेरा इतना आदर किया है, उसके लिए मैं आपकी बड़ी अनुगृहीत हुई हूँ ।

वासवदत्ता—( अपने मनमें– ) यह राजकुमारी केवल रूपवती ही नहीं किन्तु मधुरभाषिणी भी है । ( जैसा इसका रूप है, वैसी ही मीठी इसकी वाणी भी है ।

तापसी–(दासीसे–) भद्रे ! महाराज दर्शक की बहिन इस पद्मावती का अभीतक कहीं किसी राजासे संबंध ('मंगनी' 'वाग्दान') हुआ या नहीं ? ( इसके विवाह की बात कहीं किसी राजा से पक्की हुई या नहीं ? ) ।

दासी–हाँ, उज्जैन के राजा प्रद्योत ने अपने पुत्र के साथ सम्बन्ध ठीक करने के लिए दूत को भेजा तो है, पर अभी तक सम्बन्ध पक्का नहीं हुआ है।

वासवदत्ता–(मन ही मन– ) ठीक है, ठीक है, ( यदि यह सम्बन्ध हुआ ) तब तो यह राजकुमारी मेरी आत्मीय ( भाई की स्त्री = भाभी ) ही हो गई ।

तापसी—अर्हा खल्वियमाकृतिरस्य बहुमानस्य। 'उभे राजकुले महत्तरे' इति श्रूयते।

पद्मावती—आर्य ! [ किं ] दृष्टो मुनिजन आत्मानमनुग्रहीतुम्। अभिप्रेतप्रदानेन तपस्विजन उपनिमन्त्र्यतां तावत्—'कः किमत्र इच्छती'ति।

काञ्चुकीयः—यदभिप्रेतं भवत्याः।

भो भो आश्रमवासिनस्तपस्विनः ! शृण्वन्तु !! शृण्वन्तु भवन्तः !!! इहात्रभवती मगधराजपुत्री अनेन विस्रम्भेणोत्पादितविस्रम्भा धर्मार्थमर्थेनोपनिमन्त्रयते।

कस्यार्थः कलशेन ? को मृगयते वासो यथानिश्चितं ?,
दीक्षां पारितवान्किमिच्छति पुनर्देयं गुरोर्यद्भवेत् ?।

---

तापसी०—पद्मावती जैसी सुन्दरकन्या के लिए यह सम्बन्ध योग्य ही है। क्योंकि—मालवराजकुलकी तरह मगधराजकुल भी जगत् में बहुत प्रसिद्ध है, और श्रेष्ठ माना जाता है।

पद्मावती—( कञ्चुकी से- ) मैंने-अपनी आत्मा के कल्याण के लिए—तपस्वी मुनिजनों का दर्शन कर लिया ?। अब आप तपस्विजनों से मेरी ओर से प्रार्थना करिए कि—'जिस किसी तपस्वी को जिस किसी वस्तु की इच्छा हो (आवश्यकता हो) उसको वही वस्तु हमारी ओर से दी जाएगी। (जिसको जो चाहिए वे उस वस्तु को लेने के लिए यहाँ पधारें)।

कञ्चुकी—जैसी इच्छा राजकुमारी जी की। ( जो हुक्म सरकार का )। मैं मुनियों को बुलाने जाता हूँ। ( थोड़ी दूर जाकर, आश्रमवासी तपस्विजनों की ओर मुख करके- ) अहो ! आश्रमवासी तपस्वीजनों !! आप लोग हमारी प्रार्थना को सावधान हो सुनिए ! सुनिए !!

यह हमारी माननीय मगधराजकुमारी पद्मावती जी-आप लोगों के द्वारा सत्कृत हो बड़ी प्रसन्न हुई हैं। और अपनी कल्याण की कामना से ( धर्म भावना से प्रेरित हो ), कुछ देने की इच्छा से-आप लोगों को सादर निमन्त्रित करती हैं। कहिए—

आत्मानुग्रहमिच्छतीह नृपजा धर्माभिरामप्रिया,
यद्यस्यास्ति समीप्सितं वदतु तत्कस्याद्य किं दीयताम् ? ॥

यौगन्धरायणः—(आत्मगतम्-) हन्त ! दृष्ट उपायः ! (प्रकाशम्-) भो ! अहमर्थी ।

पद्मावती—दिष्ट्या सफलं मे तपोवनाभिगमनम् ।

तापसी—सन्तुष्टतपस्विजनमिदमाश्रमपदम् । आगन्तुकेनाऽनेन भवितव्यम् ।

काञ्चुकीयः—भोः ! किं क्रियताम् ? ।

---

किसको जल के लिए कलस चाहिए ? किसको वस्त्र चाहिए ? किस स्नातक को ( विद्या आरम्भ करने के पूर्व ही गुरुजी को दक्षिणा के रूप में देने के लिए निश्चित किया हुआ ) कितना धन गुरुजी को देना है ? । अर्थात्–विद्या पढ़-पढ़कर पण्डित हुए किन छात्रों को अपने गुरुजी को देने के लिए कितना धन गुरुदक्षिणा के लिए चाहिए ? । धर्मात्मा तपस्वी-जनों पर श्रद्धा रखने वाली हमारी माननीया यह राजकुमारी–आप लोगों को दान देकर अपना कल्याण करना चाहती हैं । अतः आप लोग आइए और कृपा कर हमलोगों को कहिए कि–किसको क्या दिया जाय ? । ( किसको क्या वस्तु चाहिए ) ॥ ८ ॥

यौग०—( स्वगत- ) अहा ! अब उपाय ध्यान में आ गया ! । जिस कार्य को सिद्ध करने के ( वासवदत्ता को पद्मावती के पास रखने के ) लिए हम उपाय सोच रहे थे वह सिद्ध होगया ! ( प्रकट ) अजो कञ्चुकीजी ! मैं कुछ निवेदन करना चाहता हूँ ।

पद्मावती—अहा ! बड़े आनन्द की बात है । मेरे बड़े ही भाग हैं । इस सत्पात्र याचक के मिलने से मेरा तपोवन में आना सफल हो गया ।

तापसी—( याचक को देखकर विचार करती हुई- ) हैं ! हमारे इस आश्रम में तो सभी तपस्वी जन सदा ही सन्तुष्ट रहते हैं, यहाँ किसी को किसी वस्तु की इच्छा ही नहीं है । मालूम होता है कि–यह याचक कोई बाहरी ( अतिथि ) आदमी है ।

कञ्चुकी—मान्यवर ! कहिए क्या आज्ञा है ? ।

यौगन्धरायणः—इयं मे स्वसा। प्रोषितभर्तृकामिमामिच्छाम्यत्रभवत्या कञ्चित्कालं परिपाल्यमानाम्। कुतः—

कार्यं नैवार्थैर्नापि भोगैर्न वस्त्रै-
र्नाहं काषायं वृत्तिहेतोः प्रपन्नः।
धीरा कन्येयं दृष्टधर्मप्रचारा
शक्ता चारित्रं रक्षितुं मे भगिन्याः॥ ६॥

वासवदत्ता—(आत्मगतम्-) [1]हं! इह मां निक्षेप्तुकाम आर्ययौगन्धरायणः। भवतु। अविचार्य क्रमं न करिष्यति।

काञ्चुकीयः—भवति! महती खल्वस्य व्यपाश्रयणा[2]। कथं प्रतिजानीमः?। कुतः—

---

यौ०—(वासवदत्ता को दिखाकर-) यह मेरी छोटी बहिन है, इसका पति परदेश में गया है, इसको मैं राजकुमारी के पास उसकी संरक्षता में कुछ दिन के लिये छोड़ना चाहता हूँ। क्योंकि—

मुझे धन वस्त्र आदि भोग्य पदार्थों की तो कोई जरूरत नहीं है। मैंने यह जो साधु का वेष (भगवाँ) धारण किया है यह पेट चलाने के लिए नहीं किया है। किन्तु मेरी तो यही एक छोटी-सी प्रार्थना है, और यह राजकुमारी बड़ी सुशील और धर्मभावना से परिपूर्ण है, अतः यह मेरी बहिन के शील आदि की पूरी रक्षा कर सकती है—यह मेरा दृढ़ विश्वास है। अतः यही मेरी एक प्रार्थना है, उसे स्वीकार करिए ॥९॥

वासव०—(मन ही मन-) हूँ!। मालूम होता है—आर्य यौगन्धरायण की इच्छा मुझे राजकन्या के पास ही छोड़ने की है। खैर! मुझे इस विषय में चिन्ता करनी व्यर्थ है। महामन्त्री यौगन्धरायण बिना विचारे कभी कोई काम नहीं करेंगे।

कञ्चुकी—(पद्मावती से-) श्रीमती जी! इस तपस्वी की यह प्रार्थना तो बहुत बड़ी है!। यह कैसे स्वीकार की जा सकती है?—क्योंकि—

---

(१) 'हुँ' या 'हँ' यह मनोभावव्यञ्जक एक ध्वनिविशेष का अनुकरण है। (हुँ! मैं समझ गई)। (२) व्यपाश्रयणा = माँग।

सुखमर्थो भवेद्दातुं, सुखं प्राणाः[1], सुखं तपः ।
सुखमन्यद्भवेत्सर्वं, दुःखं न्यासस्य रक्षणम् ॥ १० ॥

पद्मावती—आर्य ! प्रथमसुद्घोष्य 'कः किमिच्छती'ति, अयुक्तमिदानीं विचारयितुम् । यदेष भणति, तदनुतिष्ठत्वार्यः ।

काञ्चुकीयः—अनुरूपमेतद्भवत्याऽभिहितम् ।

चेटी—चिरं जीवतु भर्तृदारिकैवं सत्यवादिनी ।

तापसी—चिरं जीवतु भद्रे ! ।

काञ्चुकीयः—भवति ! तथा । ( उपगम्य- ) भो ! अभ्युपगतमत्रभवतो भगिन्याः परिपालनमत्रभवत्या ।

---

धन दे देना सामान्य बात है । प्राण[1] भी दे देना छोटी-सी बात है । तप[2] देना भी कोई कठिन काम नहीं है । इस प्रकार और भी सभी वस्तुएँ दी जा सकती हैं । पर धरोहर की रक्षा करना तो बड़ा ही कठिन है । अतः इसकी बहिन को आपके पास कैसे रखा जा सकता है ? ॥१०॥

वासव०—आर्य ! पहिले तो हमने यह घोषणा कर दी कि—'जिसको जो वस्तु चाहिए सो माँगे, उसको वही दी जायेगी' । अब-जब याचक उपस्थित हो गया तब-यह विचार करना कि—'यह देने लायक है' या 'यह नहीं दिया जा सकता'-यह अनुचित है । अब तो यह याचक जो कहता हो वही आप कीजिए । ( जो कहता हो वह स्वीकार कीजिए ) ।

काञ्चुकीय—वाह ! वाह ! यह बात आपके स्वरूप के योग्य ही है ।

दासी—अहा ! ऐसी दृढ़प्रतिज्ञ सत्यवादिनी हमारी राजकुमारीजी जुग-जुग जीवे ।

तापसी—सुभगे ! तुम्हारी बड़ी आयु हो । अपने वचन का ऐसे ही पालन किया जाता है । वाह ! ।

काञ्चुकीय—श्रीमतीजी ! भगवान करें आपकी बड़ी आयु हो ।

---

( १ ) जैसे दधीचि ऋषि ने परोपकारार्थ अपनी अस्थि दे दी थी ।

( २ ) जैसे विश्वामित्रजी ने त्रिशङ्कु को सदेह स्वर्ग भेजने को अपना तप भी दिया था ।

यौगन्धरायणः—अनुगृहीतोऽस्मि तत्रभवत्या । वत्से ! उपसर्पाऽत्रभवतीम् ।

वासवदत्ता—( आत्मगतम्— ) का गतिः ? । एषा गच्छामि मन्दभागा ।

पद्मावती—भवतु—भवतु । आत्मीयेदानीं संवृत्ता ।

तापसी—यदीदृश्यस्या आकृतिः, इयमपि 'राजदारिके'ति तर्कयामि ।

चेटी—सुष्ठ्वार्या भणति । अहमपि 'अनुभूतसुखे'ति पश्यामि ।

यौगन्धरायणः—( आत्मगतम्— ) हन्त भोः ! अर्धसवसितं

---

आपने आज्ञा दी है उसका पालन किया जायगा । ( यौगन्धरायण के पास जाकर— ) महाशय ! आपकी बहिन को अपने पास रखकर उसका यथोचित पालन करना माननीया हमारी राजकुमारीजी ने स्वीकार कर लिया है ।

यौगन्ध०—अहो ! माननीया राजकुमारीजी ने हमारे ऊपर बड़ा उपकार किया है, अब मेरा मनोरथ सफल हुआ । ( वासवदत्ता से— ) बहिन ! अब तुम राजकुमारीजी के पास जाओ ।

वासव०—( मनही मन— ) अब क्या उपाय है, जाना ही पड़ेगा । हाय ! मैं कैसी अभागिन हूँ । ( बड़ी अनिच्छा से— ) जाती हूँ ।

पद्मावती—आर्ये ! आइए ! आइए ! चिन्ता मत करिए, अब तो आप हमारी घरकी-सी हो गई । चिन्ता किस बात की । अब तो यह आपका घर है ।

तापसी—(वासवदत्ता को देखती हुई) इसके जैसे रूप, गुण, शील आदि हैं, उससे तो मालूम होता है—यह भी किसी राजा की ही कन्या है ।

दासी—आप ठीक कहती हैं—मेरी भी यही धारणा है कि—यह किसी बड़े घर की सुखी महिला है, और इसने बड़ा सुख भोगा है । पर किसी विपत्ति में पड़कर यहाँ इस दशा में आई है ।

यौग०—( मन ही मन ) अहा ! बड़े आनन्द की बात है—आधा

भारस्य। यथा मन्त्रिभिः सह समर्थितं, तथा परिणमति। ततः प्रतिष्ठिते स्वामिनि तत्रभवतीमुपनयतो मे इहात्रभवती मगधराजपुत्री विश्वासस्थानं भविष्यति। कुतः—

पद्मावती नरपतेर्महिषी भवित्री
दृष्टा विपत्तिरथ यैः प्रथमं प्रदिष्टा।
तत्प्रत्ययात्कृतमिदं, न हि सिद्धवाक्या-
न्युत्क्रम्य गच्छति विधिः सुपरीक्षितानि॥ ११॥

[ ततः प्रविशति ब्रह्मचारी ]।

ब्रह्मचारी—( ऊर्ध्वमवलोक्य- ) स्थितो मध्याह्नः। दृढमस्मि परिश्रान्तः। अथ कस्मिन् प्रदेशे विश्रमयिष्ये ?।

---

भार ( बोझा ) तो मेरा कम हुआ। जैसा हमने मन्त्रियों से परामर्श किया था, भगवान् की कृपा से वह काम अपने आप ही हो रहा है। जब हमारे राजा उदयन फिर खोए हुए राज्य को पा लेंगे, और वासवदत्ता को मैं उनको पुनः लौटाऊँगा, तब यही पद्मावती हमारी गवाह होगी कि—'वासवदत्ता बड़ी सुशीलतापूर्वक हमारे पास सुरक्षित रूप से थी।' यह ठीक ही है, क्योंकि—

जिन भविष्यद्वक्ता सिद्ध ज्योतिषियों ने—राज्यभ्रंश आदि की पहिले ही भविष्यवाणी की थी, और वह भविष्यवाणी बराबर ठीक भी उतरी थी—उन्हीं महापुरुषों ने यह भी भविष्यवाणी की है कि—पद्मावती महाराज उदयन की राजमहिषी ( पटरानी ) बनेगी। और उनकी भविष्यवाणी पर हम लोगों को पूर्ण विश्वास है। उसीके आधार हमने यह सब उपाय रचा है। सिद्ध महापुरुषों की वाणियाँ कभी झूठी हुई हैं ?। नहीं। क्योंकि सिद्ध महात्माओं के वचनों को उल्लंघन करने की तो ब्रह्मा ( दैव ) में भी शक्ति नहीं है॥ ११॥

[ राह चलते एक ब्रह्मचारी का प्रवेश ]।

ब्रह्मचारी—(ऊपर आकाश की ओर देखकर) ओहो ! दुपहर हो गई !! और मैं भी बहुत थक गया हूँ। इस दोपहर में कहाँ विश्राम किया जाए ?।

[ परिक्रम्य- ]

भवतु, दृष्टम् ।—अभितस्तपोवनेन भवितव्यम् । तथाहि—

विस्रब्धं हरिणाश्चरन्त्यचकिता देशागतप्रत्यया,
वृक्षाः पुष्पफलैः समृद्धविटपाः सर्वे दयारक्षिताः ।
भूयिष्ठं कपिलानि गोकुलधनान्यक्षेत्रवत्यो दिशो,
निःसन्दिग्धमिदं तपोवनमयं धूमो हि बह्वाश्रयः ॥ १२ ॥

—यावत्प्रविशामि ।

[ प्रविश्य - ]

अये ! आश्रमविरुद्धः खल्वेष जनः !

[ अन्यतो विलोक्य- ]

अथवा तपस्विजनोऽप्यत्र, निर्दोषमुपसरणम् ।

[ उपसृत्य- ]

---

( इधर-उधर देखकर- ) अच्छा ठीक है, समझ गया । पास ही में तपोवन मालूम होता है । क्योंकि देखो—

हरिणों के झुण्ड बड़े धीरज के साथ ( 'तपोवन में हमें कोई भय नहीं है' इस प्रकार दृढ़ विश्वास से ) निर्भय होकर इधर-उधर चर रहे हैं । सभी वृक्ष हरे भरे, खूब फैले हुए और फल फूल से पूर्ण हैं, और उनकी रक्षा का भी पूर्ण प्रबन्ध है । और गौवों का झुण्ड—(जिनमें कपिला गौ ज्यादा हैं-) चारों ओर दिखाई पड़ रहे हैं । और दूर तक कहीं भी खेत जोते हुए नहीं दिखाई पड़ते हैं । इससे यह निश्चय पूर्वक कहा जा सकता है कि—यह सामने तपोवन ही है । क्योंकि-जहाँ धूम होता है वहाँ अग्नि जरूर रहती है । ( या—कई जगह से यज्ञ का धुवाँ भी निकल रहा है) अतः जहाँ ये सब वस्तुएँ हैं, वहाँ आश्रम जरूर ही होगा ॥१२॥

अच्छा चलूँ भीतर चलूँ । ( आश्रम के भीतर जाकर और कञ्चुकी आदि को देखकर -) हैं ! हैं ! यहाँ तो आश्रमवासी लोगों से भिन्न प्रकार के लोग दिखाई दे रहे हैं ! (दूसरी ओर देखकर—) अच्छा ! कोई आपत्ति नहीं, तपस्वी लोग भी तो यहाँ हैं हीं । चलें । ( थोड़ा चलकर पद्मावती

---

१ 'ब्रह्माश्रयः' इत्यपि पाठः ।

अये ! स्त्रीजनः ! ।

काञ्चुकीयः—स्वैरं-स्वैरं, प्रविशतु भवान् । सर्वजनसाधारण-माश्रमपदं नाम ।

वासवदत्ता—हूँ ।

पद्मावती—अम्मो ! परपुरुषदर्शनं परिहरत्यार्या । भवतु । सुपरिपालनीयः खलु मन्न्यासः ।

काञ्चुकीयः-भोः ! पूर्वं प्रविष्टाः स्मः, प्रतिगृह्यतामतिथिसत्कारः ।

ब्रह्मचारी—( आचम्य- ) भवतु-भवतु । निवृत्तपरिश्रमोऽस्मि ।

यौगन्धरायणः—भोः ! कुत आगम्यते ?, क्व गन्तव्यं ?, क्वाऽधिष्ठानमार्यस्य ? ।

---

आदि की ओर देखकर- ) अरे ! यहाँ तो स्त्रियाँ भी हैं ! । क्या करूँ ! ।

कञ्चुकी—डरो मत, निर्भर हो बिना रुके चले जाओ । आश्रम तो सभी के लिए समान भाव से खुले रहते हैं, यहाँ सङ्कोच का क्या काम ! ।

वासवदत्ता—( ब्रह्मचारी को आते देखकर ) हुँ ! यह क्या ? ।

पद्मावती—अरी मैया ! ये आर्या आवन्तिकाजी तो पर पुरुषों के दर्शन करना ( उनके सामने आना ) नहीं चाहती ! अच्छा जैसी इनकी इच्छा वैसा ही प्रबन्ध किया जाएगा । न्यास ( धरोहर ) की रक्षा तो अच्छी तरह करनी ही पड़ेगी ।

कञ्चुकी—ब्रह्मचारी जी ! यद्यपि हम लोग भी यहाँ आश्रम में अतिथि ही हैं, पर आप से पहिले ही आए हैं, अतः आप हमारे अतिथि हैं । सो पाद्य अर्घ्य आदि अतिथिजनोचित सत्कार ग्रहण कीजिए ।

ब्रह्मचारी—( पाद्य अर्घ्य आदि स्वीकार कर और हाथ पैर धो आचमन आदि कर ) बस बस रहने दीजिए होगया ! होगया !! मेरी थकावट अब दूर हो गई है । अब मैं स्वस्थ और प्रसन्न हूँ ।

यौग०—क्यों ब्रह्मचारी जी ! आप कहाँ से आ रहे हैं ? । कहाँ जाएँगे ? और आपका निवास स्थान कहाँ है ? ।

ब्रह्मचारी—भोः श्रूयताम् ।—राजगृहतोऽस्मि । श्रावस्तीं प्रति । विद्याग्रहणार्थं-वत्सभूमौ लावाणकं नाम ग्रामस्तत्रोषितवानस्मि ।

वासवदत्ता—( आत्मगतम्- ) हा लावाणकं नाम ! । लावाणक-सङ्कीर्तनेन पुनर्नवीकृत इव मे सन्तापः ।

यौगन्धरायणः—अथ परिसमाप्ता विद्या ? ।

ब्रह्मचारी—न खलु तावत् ।

यौगन्धरायणः—यद्यनवसिता विद्या-किमागमनप्रयोजनम् ? ।

ब्रह्मचारी—तत्र खल्वतिदारुणं व्यसनं संवृत्तम् ।

यौगन्धरायणः—कथमिव ? ।

ब्रह्मचारी—तत्रोदयनो नाम राजा प्रतिवसति—।

यौगन्धरायणः—श्रूयते तत्रभवानुदयनः ! किं सः ? ।

---

ब्रह्मचारी—सुनिए महाशय ! मगधदेश की राजधानी राजगृहा ( जिला गया से अभी मैं आ रहा हूँ। और श्रावन्ती नगरी (सेहतमेहत' जि० बस्ती ) को ( पढ़ने ) जा रहा हूँ । और वत्सदेश में लावाणक नामक ग्राम ( जिला पलासूँ ) में विद्याध्ययन के लिए रहता था ।

वासवदत्ता—( मन ही मन ) हैं लावाणक ! । लावाणक का नाम सुनकर तो मेरा दुःख और सन्ताप नया सा हो गया ।

यौग०—ब्रह्मचारी जी ! क्या तुम्हारा विद्याध्ययन समाप्त हो गया ? ।

ब्रह्मचारी—अभी तो नहीं ।

यौगन्ध०—यदि विद्याध्ययन पूर्ण नहीं हुआ तो आप लावाणक से चले क्यों आए ? ।

ब्रह्मचारी—वहाँ एक भीषण घटना हो गई ।

यौग०—वह क्या ? ।

ब्रह्मचारी—वहाँ उदयन नामक एक राजा रहते थे ।

यौग०—हाँ, उदयन महाराज का नाम तो हमने भी सुना है । सो उनका क्या हुआ ? ।

ब्रह्मचारी—तस्याऽवन्तिराजपुत्री वासवदत्ता नाम पत्नी दृढमभिप्रेता किल ।

यौगन्धरायणः—भवितव्यम् । ततस्ततः ? ।

ब्रह्मचारी—ततस्तस्मिन् मृगयानिष्क्रान्ते राजनि ग्रामदाहेन सा दग्धा ।

वासवदत्ता—( आत्मगतम्- ) अलीकम् ! अलीकमेतत् । जीवामि मन्दभागा ।

यौगन्धरायणः—ततस्ततः ? ।

ब्रह्मचारी—ततस्तामभ्यवपत्तुकामो यौगन्धरायणो नाम सचिवस्तस्मिन्नेवाऽग्नौ पतितः ।

यौगन्धरायणः—सत्यं 'पतित' इति ? । ततस्ततः ? ।

ब्रह्मचारी—ततः प्रतिनिवृत्तो राजा तद्वृत्तान्तं श्रुत्वा तयोर्वियोगजनितसन्तापात्तस्मिन्नेवाऽग्नौ प्राणान् परित्यक्तुकामोऽमात्यैर्महता यत्नेन वारितः ।

---

ब्रह्मचारी—उस राजा की पत्नी का नाम वासवदत्ता था । वह उज्जैन के महाराज की लड़की थी, और उदयन उससे बहुत प्रेम करते थे ।

यौग०—होगा ! तब आगे क्या हुआ ?

ब्रह्मचारी—एक दिन राजा जब शिकार खेलने गए तब उनकी भार्या वासवदत्ता उस गाँव में आग लग जाने से जलकर मर गई ।

वासवदत्ता—(मन में) झूठी बात है । मैं तो मन्दभागिनी जी रही हूँ।

यौग०—तब फिर क्या हुआ ?

ब्रह्मचारी—और वासवदत्ता को बचाने के लिए प्रयत्न करते हुए प्रधान मन्त्री यौगन्धरायण भी उसी अग्नि में पतित हो गए ( पड़ गए और जलकर मर गए ) ।

यौग०—क्या सचमुच वह अग्नि में गिर पड़े ? । अच्छा तब क्या हुआ ? ।

ब्रह्मचारी—इस घटना के बाद राजा जब शिकार से वापिस आये तो उस भयंकर घटना को सुनकर उन दोनों के वियोग से दुःखित हो उसी अग्नि में गिरकर मर जाने के लिए उद्यत हुए, पर मन्त्रियों ने बड़ी कठिनता से उन्हें रोका ।

वासवदत्ता—( आत्मगतम्- ) जानामि—जानाम्यार्यपुत्रस्य मयि सानुक्रोशत्वम् ।

यौगन्धरायणः—ततस्ततः ? ।

ब्रह्मचारी–ततस्तस्याः शरीरोपभुक्तानि दग्धशेषाण्याऽऽभरणानि परिष्वज्य-परिष्वज्य राजा मोहमुपगतः ।

वासवदत्ता—( स्वगतं- ) सकाम इदानीमार्ययौगन्धरायणो भवतु ।

चेटी—भर्तृदारिके ! रोदिति खल्वियमार्या ।

पद्मावती—सानुक्रोशया भवितव्यम् ।

यौगन्धरायणः—अथ किम् । अथ किम् । प्रकृत्या सानुक्रोशा मे भगिनी । ततस्ततः ? ।

ब्रह्मचारी—ततः शनैः-शनैः प्रतिलब्धसञ्ज्ञः संवृत्तः ।

---

वासव०—( मन ही मन ) आर्यपुत्र ( प्राणनाथ ) का मेरे प्रति जो दृढ़ स्नेह है उसे मैं खूब जानती हूँ ।

यौग०—तब फिर क्या हुआ ? ।

ब्रह्मचारी—तब राजा वासवदत्ता के पहिनने के—जलने से बचे हुए—गहनों को छाती से लगाकर रोने लगा और मूर्छित हो गया ।

सभी लोग—हाय ! हाय ! बड़ा अनर्थ हुआ ।

वासव०—(मन ही मन) अब तो आर्य यौगन्धरायण जी का मनोरथ पूरा हुआ ही होगा ? ( अर्थात्–इस विपत्ति का सब दोष योगन्धरायण पर है । राजा को उन्होंने इस झूठी विपत्ति में डाला है ) ।

दासी—राजकुमारी जी ! यह आर्या आवन्तिका रोती हैं ! ।

पद्मावती—एक दुखिया का दुःख सुनकर इन्हें दया उमड़ आई है, ऐसा मालूम होता है ।

यौग०—हाँ हाँ, आप ठीक कहती हैं, मेरी बहन का स्वभाव बड़ा दयालु है । यह स्वभाव से ही दूसरे के दुःख से कातर होने वाली हैं । ( ब्रह्मचारी से- ) तब आगे क्या हुआ ? ।

ब्रह्मचारी—तब राजा को धीरे २ होश हो गया ।

